Shri Topayya Ambreshwarashivacharya swamy ... Lohan. Akilmath.

1704

शारदा-संस्कृत-ग्रन्थमालायास्त्रयोदशतमम्प्रसूनम् ।



2311

...कीय-सर्वविध-उत्तरमध्यमार्यां निर्धारितम्

# ...ज्ञान-शाकुन्तलम्

सुबोधिनी-टीकोपेतम्



सम्पादकः—

गौरीनाथ-पाठकः

काशी ।

# ABHIDNANSHAKUNTALAM

OF

## MAHAKAVI KALIDAS

WITH

**The Commentary (Subodhini) of Gaurinath Pathak**

---

EDITED BY

LAKSHMAN SADASHIVA DESHAMUKH B. A.

---

REVISED BY

SHRI-SHIVAKUMAR SHASTRI

PUBLISHED BY

SHARADABHAWAN-KASHI

*First Edition.*

---

Printed by D. L, Nighoskar, at Shri Lakshmi Narayan Press, Benares City.

1934

43

महाकवि श्रीकालीदासप्रणीतम्

# अभिज्ञानशाकुन्तलम्



काशीस्थ-विशुद्धानन्द-महाविद्यालयीय साहित्य-प्रधानाध्यापकेन पाठकोपाह्व श्रीमज्जयकृष्णशर्म्मतनुजनुपा श्रीगौरीनाथशर्म्मणा विरचितया सुबोधिन्याख्यया व्याख्यया समलङ्कृतम्



तदनुज्ञया तदन्तेवासिना
श्रीशिवकुमारशास्त्रिणा
संशोध्य प्रतिसंस्कृतम्





काशीस्थ-शारदाभवनात्
समुल्लसितम्





वाराणस्यां श्रीलक्ष्मीनारायणयन्त्रालये,
श्री दत्तात्रय लक्ष्मण निघोजकर द्वारा
प्राकाश्यं नीतम्

वैक्रमाब्दाः १९९१ क.

## पद्मपुराणोक्तशकुन्तलोपाख्यानम् ।

### ( स्वर्गखण्डम् )



शेष उवाच ।

दुष्मन्तो नाम राजर्षिश्चन्द्रवंशविभूषणः ।
पौरवः सुमहातेजा वेदवेदाङ्गपारगः ॥ १ ॥
धनुर्विद्यासु निपुणः सर्वराजगुणान्वितः ।
कन्दर्प इव सौन्दर्य्ये धैर्य्ये च तुहिनाचलः ॥ २ ॥
समुद्र इव गम्भीरः कुवेर इव ऋद्धिमान् ।
प्रतापे वासवसमस्तेजस्वी भानुमानिव ॥ ३ ॥
सत्सु स्निग्धो यथा चन्द्रो धर्म्मतत्त्वे यथा मनुः ।
स प्रजाः पालयामास नृपः पुत्रानिवौरसान् ॥ ४ ॥
कदाचिन्मृगयां राजा स जगाम वलैर्वृतः ।
रम्यं स्यन्दनमारुह्य नानामणिगणान्वितम् ॥ ५ ॥
अथारण्ये ददर्शासौ मृगमत्यन्तमूर्ज्जितम् ।
तमन्वधावद् राजर्षिर्मृगमात्तशरासनः ॥ ६ ॥
मृगोऽपि वलवांस्तस्मिन्नुत्प्लवेन महायशाः ।
धावत्येव ततो राजा वद्धामर्षोऽनुधावति ॥ ७ ॥
ततः कण्वाश्रमाभ्यासे मृगं प्रति महावलः ।
सन्दधे शरमत्युग्रं शव्दभेदिनमाशु वै ॥ ८ ॥
तं तथा संहितशरं कण्वशिष्याः सुदूरतः ।
अब्रुवन्नाश्रममृगो न हन्तव्यो महीपते ! ॥ ९ ॥
तदाश्रममृगेत्येवं कर्णार्द्धमागते शरे ।
संजहार महावाणं पौरवः पौरुषान्वितः ॥ १० ॥
प्रत्याख्यातसमुद्योगस्तृषार्त्तः स महीपतिः ।
तोयमन्वेषयन् कन्या ददर्शाप्सरसां समाः ॥ ११ ॥
स्वानुरूपघटैः कक्षविन्यस्तैः सरसः पयः ।
आहृत्य सिञ्चतीर्बाला वन्यानाश्रमपादपान् ॥ १२ ॥
तासां मध्येऽतिरम्याङ्गी कन्या नाम्ना शकुन्तला ।
राजानं प्रेक्ष्य सुस्निग्धमुवाच वचनं द्विज ! ॥ १३ ॥

त्वमद्यातिथिरायातः सत्कृतो यास्यसि ध्रुवम् ।
इदमासनमेतत् ते पाद्यमर्घ्यञ्च गृह्यताम् ॥ १४ ॥
तद्वागमृतसन्तुष्टो गृहीत्वातिथिसत्क्रियाम् ।
मदनाशुगसम्पातकिञ्चित्स्पृष्टमनोरथः ॥ १५ ॥
उवाच राजा दुष्मन्तः कासि कस्यासि भामिनि ! ।
पश्यामि त्वां वरारोहे ! देवीमिव दिवश्च्युताम् ॥ १६ ॥
राजन्योऽहं पुरुकुले दुष्मन्तो नाम भूपतिः ।
तच्छ्रुत्वा सा सखीं प्राह कथय त्वं ममोद्भवम् ॥ १७ ॥

सख्युवाच—

राजन्यो गाधितनयो विश्वामित्रो महामनाः ।
वशिष्ठेन जितो युद्धे ब्राह्मण्येन बलीयसा ॥ १८ ॥
गर्हयन् क्षत्रियबलं ब्रह्मण्यं बहु मानयन् ।
ब्रह्मण्यार्थी तपस्तेपे बहुवर्षसहस्रकम् ॥ १९ ॥
तद्दृष्ट्वा भयमापन्नः शक्रः संमन्त्र्य दैवतैः ।
मेनकां प्रेषयामास तपोविघ्नाय पार्थिव ! ॥ २० ॥
सागत्य पुरतस्तस्य स्वर्गाभरणभूषिता ।
प्रलोभयामास मुनिं विश्वामित्रं सविभ्रमैः ॥ २१ ॥
जितेन्द्रियोऽपि कामेन तदपाङ्गधनुश्च्युतैः ।
कटाक्षबाणै राजेन्द्र ! विव्यधे गाधिनन्दनः ॥ २२ ॥
धैर्य्यच्युतोऽथ बाहुभ्यामाश्लिषन् मेनकां मुहुः ।
रेमे च मदनाविष्टः क्षणात् संज्ञामवाप सः ॥ २३ ॥
व्रीडितस्तां विसृज्याथ वनेऽस्मिन् प्रययौ द्रुतम् ।
मेनकापि च तं गर्भं विमुच्य गहने वने ॥ २४ ॥
शक्रलोकं समापेदे न प्रैक्षत पुनर्नृप ।
शकुन्तैरथ गर्भोऽसौ ररक्षे पृथिवीपते ! ॥ २५ ॥
अतः शकुन्तला नाम नृपेयं वरवर्णिनी ।
कण्वस्तु सुमहातेजाः कन्यां वीक्ष्य वने स्थिताम् ॥ २६ ॥
अनुकम्प्य स्वसुतात्वे कल्पयामास सुन्दरीम् ।
मुनिना संभृता कन्या तं तातं मन्यते सदा ॥ २७ ॥
सुतां कण्वस्य विद्धीमां मुनिवर्य्यस्य भूपते ! ।

दुश्मन्त उवाच—

सुव्यक्तं राजपुत्रीयं यथा कल्याणि ! भाषसे ॥ २८ ॥

अन्यथा पौरवाणां हि मनो नैवानुरज्यति ।
भार्य्या भवतु सुश्रोणी ममेयं मृगलोचना ॥ २९ ॥
सुवर्णमालां वासांसि कुण्डले परिहाटके ।
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥ ३० ॥
आहरामि महाभागे ! निष्कादीन्यतुलानि च ।
सर्वं राज्यं प्रदास्यामि भार्य्या भवतु ते सखी ॥ ३१ ॥
गान्धर्वेण च मां वीरविवाहेण वृणोतु च ।
विवाहानां हि रम्भोरु ! गान्धर्वः श्रेष्ठ उच्यते ॥ ३२ ॥

शकुन्तलोवाच—

फलाहारगतो राजन् ! पिता मे इत आश्रमात् ।
मुहूर्त्तन्तु प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥ ३३ ॥

दुश्मन्त उवाच—

इच्छामि त्वां वरारोहे ! भजमानामनिन्दिते ! ।
त्वदर्थं मां स्थितं विद्धि हृद्गतं हि मनो मम ॥ ३४ ॥
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्त्तुमर्हसि सुव्रते ! ॥ ३५ ॥
अष्टावेव महाभागे ! विवाहा वेदसम्मताः ।
ब्राह्मो दैवस्तथार्षश्च प्राजापत्यस्तथाऽऽसुरः ॥ ३६ ॥
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ।
मनुः सायम्भुवो धर्म्मान् पूर्वपूर्वान् पुराऽब्रवीत् ॥ ३७ ॥
प्रशस्तांश्चतुरः पूर्वान् ब्राह्मणस्योपधारय ।
षड़ानुपूर्व्या क्षत्राणां विद्धि धर्म्मानिनिन्दिते ! ॥ ३८ ॥
राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रस्यासुरः स्मृतः ।
पञ्चानान्तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ॥ ३९ ॥
पैशाचश्चासुरश्चैव न कर्त्तव्यः कदाचन ।
गान्धर्वराक्षसौ क्षत्रधर्म्यौ तौ मा विशङ्किथाः ॥ ४० ॥
मिश्रौ वापि पृथग्वापि कर्त्तव्यौ द्वौ महीभुजाम् ।
सा त्वं मम सकामस्य सकामा वरवर्णिनि ! ॥ ४१ ॥
गान्धर्वेणैव धर्म्मेण भार्य्या भवितुमर्हसि ।

शकुन्तलोवाच—

यदि धर्म्मपथस्त्वेष यदि चात्मा प्रभुर्मम ॥ ४२ ॥

प्रदाने पौरवश्रेष्ठ ! शृणु मे समयं प्रभो ! ।
प्रतिजानीहि सत्यं मे यथा वक्ष्यामि तेऽनघ ! ॥ ४३ ॥
मम जायेत यः पुत्र स भवेत् त्वदनन्तरम् ।
युवराजो महाराज ! सत्यमेतद् ब्रवीमि ते ॥ ४४ ॥
अभिज्ञानञ्च राजेन्द्र ! देहि स्वमङ्गुरीयकम् ।
यद्येतदेवं राजेन्द्र ! अस्तु मे सङ्गमस्त्वया ॥ ४५ ॥

शेष उवाच—

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।
अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ! ॥ ४६ ॥
तथा त्वमर्हा सुश्रोणि ! सत्यमेतद् ब्रवीमि ते ।
एवमुक्त्वा स राजर्षिस्तामनिन्दितविग्रहाम् ॥ ४७ ॥
जग्राह विधिवत् पाणावुवास च तया सह ।
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ॥ ४८ ॥
प्रेषयिष्ये च नेतुं त्वां वाहिनीं मन्त्रिभिः सह ।
विभूत्या परयोपेतां नाययिष्यामि सुव्रते ! ॥ ४९ ॥

सूत उवाच—

इति तस्याः प्रतिज्ञाय स नृपो मुनिसत्तम ! ।
मनसा चिन्तयन् प्रायाद्दत्त्वा चाप्यङ्गुरीयकम् ॥ ५० ॥
काश्यपस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ? ।
एवं विचिन्तयन्नेव प्राविशन्नगरं नृपः ॥ ५१ ॥

( इति प्रथमोध्यायः । )

शेष उवाच—

एतस्मिन्नन्तरे विप्र ! कण्वोऽप्याश्रममागमत् ।
शकुन्तला तु पितरं ह्रिया नोपजगाम तम् ॥ १ ॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानेन मारिष ! ।
उवाच भगवान् प्रीतो व्रीड़मानां शकुन्तलाम् ॥ २ ॥

कण्व उवाच—

त्वयाऽद्य भद्रे ! रहसि मामनाभाष्य यः कृतः ।
पुंसा सह समायोगो नासौ धर्मोपघातकः ॥ ३ ॥
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायां सकामस्य निर्मन्त्रो रहसि स्मृतः ॥ ४ ॥

महात्माऽसौ महाराजः पुरुवंशप्रदीपनः ।
यं पतिं प्रतिपन्ना त्वं भजमानं शकुन्तले ! ॥ ५ ॥
ममापि चिन्ता ह्यासीत् त्वत्प्रदानाय सुन्दरि ! ।
ययाहं नियतं दग्धो दावेनेव महाद्रुमः ॥ ६ ॥
वरं त्वत्सदृशं लोके नान्यमालोकयामि ते ।
तेनायं निश्चितो राजा मयापि सदृशो वरः ॥ ७ ॥
स यदि स्वयमागत्य त्वामगृह्णात् करे नृपः ।
अभ्यर्थनार्थलघुता न ममाभूद् गरीयसी ॥ ८ ॥
महात्मा भविता पुत्रस्तव सुभ्रु ! महाबलः ।
य इमां भोक्ष्यते कृत्स्नां भूमिं सागरमेखलाम् ॥ ९ ॥
स्वनाम्ना ख्यातिमप्यत्र वंशे संजनयिष्यति ।
परश्चाभिगतस्यास्य चक्रं नाम महात्मनः ॥ १० ॥
भविष्यत्यप्रतिहतं नियतं चक्रवर्त्तिनः ।

सूत उवाच—

ततः प्रक्षाल्य पादौ सा सन्निधाय फलानि च ॥११॥
उपविष्टं गतश्रान्तिमब्रवीत् तं शुचिस्मिता ।

शकुन्तलोवाच ।

यो मयाऽसौ वृतो राजा पौरवः पुरुषोत्तमः ॥ १२ ॥
स त्वयानुमतो यस्मात् कृतार्थोऽस्मि पितः प्रभो ! ।
प्रसादं कुरु तस्यापि सामात्यस्य महीपतेः ॥ १३ ॥

कण्व उवाच—

प्रसन्न एव तस्याहं पूर्वमेव शुचिस्मिते ! ।
ब्रह्मण्यः पौरवो राजा धर्म्मात्मा च विशेषतः ॥ १४ ॥
कं ददामि वरं तस्मै ब्रूहि कल्याणि ! मा चिरम् ।

शेष उवाच—

ततो धर्म्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा ॥ १५ ॥
शकुन्तला पौरवाणां दुष्मन्तहितकाम्यया ।

सूत उवाच—

परेऽहनि मुनौ याते विरहेण शकुन्तला ॥ १६ ॥
न लेभे मनसः शान्तिं चिन्तयन्ती महीपतिम् ।
क्षणं निश्वासबहुला सुष्वाप धरणीतले ॥ १७ ॥
लिलेख च नखेन क्ष्मां नाललाप सखीजनैः ।

क्षणं विलोकयामास दिगन्तान् लोललोचना ॥ १८ ॥
ध्यायन्ती जगतीनाथं क्षणं प्राप्तमनोरथा ।
आस्ते स्म धरणीपृष्ठे ध्यानस्तिमितलोचना ॥ १९ ॥
एतस्मिन्नन्तरे विप्र ! दुर्वासास्तपसा ज्वलन् ।
आजगामाश्रमपदं कण्वस्य द्विजसत्तम ! ॥ २० ॥
दूरादुच्चैर्बभाषेऽथ "केयं पर्णोटजे स्थिता ।
विलोकयतु मां प्राप्तमतिथिं भोजनार्थिनम्" ॥ २१ ॥

शेष उवाच—

इत्युच्चैर्मुहुराभाष्य न प्राप्यातिथिसत्क्रियाम् ।
तपोधनश्चुकोपाशु शशाप क्रोधनो मुनिः ॥ २२ ॥

दुर्वासा उवाच—

"यं त्वं चिन्तयसे बाले ! मनसाऽनन्यवृत्तिना ।
विस्मरिष्यति स त्वां वै अतिथौ मौनशालिनीम्" ॥ २३ ॥

शेष उवाच—

इत्येवमुक्ते वचने क्रोधाद् दुर्वाससा तदा ।
सखी प्रियंवदा नाम शुश्राव क्रोधभाषितम् ॥ २४ ॥
त्वरयाऽथ समागम्य पाद्यादिकृतसञ्चया ।
प्रसादयामास मुनिं मूद्धर्ना तच्चरणं गता ॥ २५ ॥
"पौरवस्य इयं राज्ञी दुष्मन्तस्य महीभृतः ।
विश्वामित्रात्मजा बाला मेनकाप्सरसः सुता ॥ २६ ॥
कण्वस्य दुहिता चेयं पालनात् सुपतिव्रता ।
चिन्तयन्ती पतिं मुग्धा विरहेण सुविह्वला ॥ २७ ॥
न किञ्चिदभिजानाति न भवांस्तेन सत्कृतः ।
नावज्ञानान्न गर्वाच्च तद्भवान् क्षन्तुमर्हति ॥ २८ ॥
यथा न विस्मरेद्राजा शापान्तं कुरु तापस !" ।
ततः प्रसन्नो दुर्वासाः प्राह शापान्तकारणम् ॥ २९ ॥
विस्मृतिस्तस्य राजर्षेस्तावदेव भविष्यति ।
प्रियंवदे ! नृपो यावदभिज्ञानं न पश्यति ॥ ३० ॥
इति कृत्वा स शापान्तं गृहीत्वा सत्क्रियां ययौ ।
अथ तस्यास्तदा गर्भो राजर्षेस्तेजसा भृतः ॥ ३१ ॥
शशीव विशदे पक्षे वर्द्धते स्म दिने दिने ।
कण्वोऽपि भगवान् दृष्ट्वा दोहदं समुपस्थितम् ॥ ३२ ॥

मुदा परमया युक्तः पृष्ट्वाभिलषितं हितम् ।
सम्भावयति वन्यानि मूलानि च फलानि च ॥ ३३ ॥
अथ तां सप्तमे मासि गर्भे स्फूर्त्तिमुपेयुषि ।
उवाच भगवान् कण्वो मुनिमण्डलमध्यगाम् ॥ ३४ ॥

कण्व उवाच—

"कन्यां पितृगृहे नैव सुचिरं वासमर्हति ।
लोकापवादः सुमहान् जायते पितृवेश्मनि ॥ ३५ ॥
नार्य्याः पतिर्गतिर्भर्त्ता तपश्च परमं पतिः ।
दैवतं गुरुरार्य्यश्च पतिः स्त्रीणां परं पदम् ॥ ३६ ॥
यं प्रसोष्यसि देवि ! त्वं भविता स महाबलः ।
राजपुत्रो वने स्थास्यत्ययं नाप्युचितो विधिः ॥ ३७ ॥
अतस्त्वां प्रेषयिष्यामि निकटं तस्य भूभृतः ।
पत्युः प्रेमा हि नारीणां परं सौभाग्यमुच्यते" ॥ ३८ ॥

शकुन्तलोवाच—

"पितस्तेऽनुगृहीतास्मि पतिदर्शनवार्त्तया ।
नानुज्ञां प्रार्थये तुभ्यं स्नेहभङ्गभयात् तव ॥ ३९ ॥
न जाने को मया गर्भे धृतोऽयं पुरुषोत्तमः ।
यत्तेजसा न शक्नोमि स्थातुमेकत्र मारिष ! ॥ ४० ॥
तदद्यैव गमिष्यामि राजर्षेस्तस्य चान्तिकम् ।
अनुज्ञां देहि मे तात ! कृपया तापसोत्तम !" ॥ ४१ ॥

शेष उवाच—

तच्छ्रुत्वा भगवान् कण्वः स्नेहप्रसरविप्लुतः ।
अनुज्ञाप्य मुनीनन्यान् मुनिपत्नीश्च सुव्रताः ॥ ४२ ॥
उवाच परया प्रीत्या प्रेषयामि शकुन्तलाम् ।
भर्त्तुर्गृहाय कल्याण्यः ! कल्याणं कुरुत ध्रुवम् ॥ ४३ ॥
ताश्च वाक्यं मुनेः श्रुत्वा प्रेमाश्रुक्लिन्नलोचनाः ।
आशीर्भिरनुकूलाभिः प्रायुञ्जत शकुन्तलाम् ॥ ४४ ॥
विचित्रैरप्याभरणैः केशबन्धादिभिस्तथा ।
गात्रोद्वर्त्तनसंमार्ष्टि-हरिद्रातैलसङ्गतैः ॥ ४५ ॥
भूषयामासुरव्यग्रा मुनिपत्न्यः शकुन्तलाम् ।
शुशुभे सा महाभागा विश्वमित्रसुता सती ॥ ४६ ॥

नितरां गर्भिणी बाला चन्द्रलेखेव विच्युता ।
अथ गुल्मलतावृक्षान् हरिणान् हरिणाङ्गनाः ॥ ४७ ॥
उवाच कण्वः प्रेमार्द्रो मुञ्चन्नश्रुकला मुहुः ।
"युष्माकं परमप्रेम्णा वासितेयं सुता मम ॥ ४८ ॥
सर्वे ! कुरुत कल्याणं सुखं यातु शकुन्तला" ।
इति सर्वाननुज्ञाप्य कण्वो मतिमतां वरः ॥ ४९ ॥
आहूय गौतमीं वृद्धां सखीञ्चास्याः प्रियंवदाम् ।
उवाच श्लक्ष्णया वाचा शिष्यौ चापि महाव्रतौ ॥ ५० ॥
"यात यूयम् महीभर्त्तुर्दुष्मन्तस्य पुरं प्रति ।
इमां शकुन्तलां राज्ञि समर्प्य पुनरेष्यथ" ॥ ५१ ॥
इति तस्य वचः श्रुत्वा गौतमी च प्रियंवदा ।
मुनिः शार्ङ्गरवः शिष्यस्तथा शारद्वतो मुनिः ॥ ५२ ॥
तथेति प्रतिगृह्याथ मुनेराज्ञां स्वमूर्द्धसु ।
शकुन्तलां पुरस्कृत्य पन्थानं प्रतिपेदिरे ॥ ५३ ॥
अथ दक्षिणतस्तस्याः शिवा घोरं ववाशिरे ।
मृगाश्च चेलुः सव्येन वाता वान्ति स्म धूसराः ॥ ५४ ॥
तदालोक्य समुद्विग्ना पथि यान्ती शकुन्तला ।
नितम्बिनी गर्भसत्त्वा न शेके चलितुं द्रुतम् ॥ ५५ ॥
अथ मध्यान्हसमये प्राप्य प्राचीं सरस्वतीम् ।
मुनेः शिष्यौ च मध्यान्हक्रियां चक्रतुरेव तौ ॥ ५६ ॥
प्रियंवदा गौतमी च सलिलं तज्जगाहतुः ।
शकुन्तलाऽपि तत्रैव स्नानार्थमुपचक्रमे ॥ ५७ ॥
प्रियंवदाकरे न्यस्य अभिज्ञानाङ्गुरीयकम् ।
स्नातुं सरस्वतीतोयमगाहत सुलोचना ॥ ५८ ॥
प्रियंवदा तु तद् गृह्य वसनाञ्चलमध्यतः ।
यावन्न्यस्तवती तावत् पपात सलिले द्विज ! ॥ ५९ ॥
प्रियंवदा भिया तस्यै वृत्तान्तं न न्यवेदयत् ।
शकुन्तलापि तत् सख्यै पप्रच्छापि न विस्मृता ॥ ६० ॥
ततः स्नात्वा च ते सर्वे समाप्य विधिवत् क्रियाम् ।
दुष्मन्तपुरमासेदुस्तास्त्रियस्तौ च तापसौ ॥ ६१ ॥
राजद्वारं समासाद्य कण्वशिष्यौ महामते ! ।
ऊचतुस्तौ प्रतीहारं "तूर्णं राज्ञे निवेदय ॥ ६२ ॥

काश्यपस्य निदेशेन राजद्वारमिहागतौ ।
शिष्यौ तस्य शार्ङ्गरव-शारद्वतसमाह्वयौ ॥ ६३ ॥
सुता तस्य च कल्याणी द्वे अन्ये च द्विजस्त्रियौ" ।
प्रतीहारस्ततो गत्वा राज्ञे सर्वं न्यवेदयत् ॥ ६४ ॥
राजा पुरोधसं प्राह गौतमं हृदि चिन्तयन् ।
"कथमेतौ मुनेः शिष्यौ स्त्रीभिरेताभिरावृतौ ॥ ६५ ॥
आगताविह संप्राप्तौ भवानेव हि पृच्छतु ।
किं कण्वस्याश्रमे कश्चिद्राक्षसः कुरुतेऽनयम् ॥ ६६ ॥
न जानाति हि दुष्टात्मा दुष्मन्तं राक्षसान्तकम् ।
किं वने पशवस्त्यक्ता नियमं मुनिना कृतम् ॥ ६७ ॥
बाधन्ते व्याघ्र-सिंहाद्याः स्त्रियो बालान् जरायुतान् ? ।
मृगयाऽपि मया तावन्न कृता पुरवासिना ॥ ६८ ॥
किं वा वन्यफलान्यद्य प्रभवन्ति न कानने ।
तेनाहारविनाभावाद् दुःखितास्ते तपोधनाः ॥ ६९ ॥
यदद्यापतितं घोरं मुनीनां दुःखकारणम् ।
विधुनोमि तदद्यैव याहि पृच्छ तपोधनौ ॥ ७० ॥
पाद्यादीनि पुरस्कृत्य विधायातिथिसत्क्रियाम् ।
वासयस्व मुनी विप्र ! स्वगृहे ताः स्त्रियस्तथा ॥ ७१ ॥
चेद्विशेषविवक्षापि तयोरस्ति विबुध्य तत् ।
विज्ञापयिष्यसि पुनस्तद्विचार्य्यं करोम्यहम्" ॥ ७२ ॥

( इति द्वितीयोऽध्यायः । )

शेष उवाच—

इति तद्वाक्यमादाय पुरोधाः स तपोधनः ।
पाद्यादीनि पुरस्कृत्य द्वारमागतवान् द्विज ! ॥ १ ॥
राज्ञोक्तं सर्वमाचष्ट ददर्श च शकुन्तलाम् ।
अन्तःसत्त्वां महाभागां शिरः प्रच्छाद्य वाससा ॥ २ ॥
अधोमुखीं चन्द्रकलामिव दीप्तिमतीं पुरः ।
पप्रच्छ च मुनी "केयं सुन्दरीजगदुद्भवा ॥ ३ ॥
अन्तःसत्त्वेव कल्याणी लज्जयाऽधोमुखी स्थिता" ।

शिष्यावूचतुः—

"विश्वामित्रसुता चेयं मेनकागर्भसम्भवा ॥ ४ ॥
कण्वेन पालिता राज्ञी दुष्मन्तस्य महीपतेः ।

सेयं सम्प्रेषिता ब्रह्मन् ! कण्वेन नृपमन्दिरम् ॥ ५ ॥
अस्यैव भूपतेस्तेजो बिभ्रती मृगलोचना ।
राज्ञे निवेदयत्वद्य तद्भवांस्त्वरया द्विज ! ॥ ६ ॥
नेयं राज्ञी द्वारदेशे स्थातुमर्हा महीपतेः" ।
पुरोधास्तदुपाकर्ण्य सम्भ्रमेण महीपतिम् ॥ ७ ॥
गत्वा निवेदयामास वृत्तान्तं मुनिभाषितम् ।
दुष्मन्तस्तदुपश्रुत्य विस्मृतिं परमां गतः ॥ ८ ॥
उवाच ब्राह्मणं ब्रह्मन् ! वचसा कटुना नृपः ।
"नैवं स्मरति मच्चेतः कुत्र क्वा मे विवाहिता ॥ ९ ॥
गणिका कापि विप्रेन्द्र ! च्छलेन समुपागता" ।

पुरोधा उवाच—

"न तथा दृश्यते राजन्नन्तःसत्त्वा वराङ्गना ॥ १० ॥
अनुजानीहि राजेन्द्र ! त्वदन्तिकमुपानय ।
विलोकय परं रूपं यदि ते स्मृतिरुद्भवेत् ॥ ११ ॥
प्रवेशनीया शुद्धान्ते नारी श्रीरिव रूपिणी ।
स्थातुमर्हा न च द्वारि द्योतयन्ती दिशस्त्विषा ॥ १२ ॥
यदि नापि स्मृतिस्ते स्यात् तद्रूपन्तु तथापि ते ।
विलोक्य भविता नान्यरूपदर्शनलालसा" ॥ १३ ॥
इति राज्ञानुनीतेनाभ्यनुज्ञातो द्विजोत्तमः ।
आनाययामास मुनी ताः स्त्रियश्च सुलक्षणाः ॥ १४ ॥
आशीर्भिरनुयोज्याऽथ कण्वशिष्यौ महामती ।
ऊचतुः कण्वसन्देशं निषण्णौ जगतीपतिम् ॥ १५ ॥
"त्वामाशिषा वर्द्धयित्वा प्राह त्वामावयोर्गुरुः ।
तच्छृणुष्व महाराजानन्तरं कर्त्तुमर्हसि ॥ १६ ॥
इयं शकुन्तला नाम विश्वामित्रसुतानघ ! ।
मेनकासङ्गमाज्जाता पालिता दुहिता मम ॥ १७ ॥
मृगयाचारिणारण्ये गान्धर्वेण महीपते !
विधिना यद्गृहीताभून्ममानुज्ञां विनापि हि ॥ १८ ॥
तत् साधुरिति तं मन्ये क्षत्रियाणामयं विधिः ।
तव सा बिभ्रती तेजो वस्तुं नार्होटजे मम ॥ १९ ॥
महिषी राजराजस्य साक्षात् श्रीरिव रूपिणी ।
सेयं प्रगृह्यतां राजन् ! कल्याणी महिषी तव ॥ २० ॥

जनयिष्यति यं पुत्रमिमं राज्ञी शकुन्तला ।
चक्रवर्त्ती राजराजो महात्मा स भविष्यति ॥ २१ ॥
इत्याशिषा नियुज्य त्वां गुरुराह महातपाः ।
इयं प्रियंवदा नाम सखी चास्या मुनेः सुता ॥ २२ ॥
इयञ्च ब्राह्मणी वृद्धा राजन् ! गौतमवंशजा ।
राजन् ! वयमिहायाता अनया गुरुवाक्यतः" ॥ २३ ॥

राजोवाच—

"कति सन्तीह गणिका भ्रमन्ति कामसेवया ।
राजराजस्य महिषी का नो भवितुमिच्छति ॥ २४ ॥
ब्राह्मणा विविधाः सन्ति तापसाश्छद्मरूपिणः ।
तासामनुग्रहेणैव समं ताभिर्भ्रमन्ति च ॥ २५ ॥
भुञ्जते विपुलान् भोगान् गणिकाभिरुपार्जितान्" ।
निशम्य नृपतेर्वाक्यं शिष्यौ कण्वस्य तापसौ ॥ २६ ॥
शेपतुः"विरहेणास्याः पश्चात्तापमवाप्स्यसि" ।

शेष उवाच—

इत्युक्त्वा तौ गतौ क्रुद्धौ तापसौ ब्रह्मवादिनौ ॥ २७ ॥
गौतमस्तौ प्रसाद्याथावासयत् स्वे च वेश्मनि ।
अथ सा गौतमी वृद्धा जगाद जगतीपतिम् ॥ २८ ॥
"नैवमर्हसि भो राजन् ! विश्वामित्रसुतां प्रति ।
एवं लावण्यमापन्ना क दृष्टा गणिका त्वया ? ॥ २९ ॥
अन्तःसत्त्वा महाभागा त्वया राजन् ! विवाहिता ।
समाहितेन मनसा स्मर पश्य च सुन्दरीम्" ॥ ३० ॥
इत्युक्त्वा मोचयामास शिरश्छादनमम्बरम् ।

राजोवाच—

"पौरवाणां कुले जाताः सतां मार्गे कृतासनाः ॥ ३१ ॥
न वयं रूपमात्रेण गणिकानां भ्रमामहे" ।
एवं वदति भूपाले व्रीडितेव मनस्विनी ॥ ३२ ॥
निःसख्येन च दुःखेन तस्थौ स्थूणेव निश्चला ।
संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसम्पुटा ॥ ३३ ॥
कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजानमैक्षत ।
आकारं गूहमाना च मन्युनातिसमीरितम् ॥ ३४ ॥
तपसा सम्भृतं तेजो धारयामास वै तदा ।

सा मुहूर्त्तमिव ध्यात्वा दुःखामर्षसमन्विता ॥ ३५ ॥
भर्त्तारमभिसम्प्रेक्ष्य क्रुद्धा राजानमब्रवीत् ।
"कथं न स्मरसे राजन् ! मृगयामधिगच्छता ॥ ३६ ॥
गान्धर्वेण गृहीतो यत् पाणिर्मे विधिना नृप !" ।
इति श्रुत्वा च वचनं शापेनास्तमितस्मृतिः ॥ ३७ ॥
अब्रवीत् "न स्मरामि त्वां कस्य त्वं दुष्टतापसि ! ।
धर्म्मकामार्थसम्बन्धं न स्मरामि त्वया सह ॥ ३८ ॥
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत् कुरु" ।

शकुन्तलोवाच—

"कुतः प्रियंवदे साध्वि ! अभिज्ञानमिहानय ॥ ३९ ॥
धूर्त्तमेनं सभामध्ये ह्रेपयामि नराधिपम्" ।
इत्युक्त्वा पाणिमुत्क्षिप्य भूयोभूयः प्रियंवदाम् ॥ ४० ॥
उवाच "देहि देही"ति "ह्रेपयामि नराधिपम्" ।
प्रियंवदा तु नीचैस्तां जगाद मृगलोचनाम् ॥ ४१ ॥
कर्णान्तिके समासाद्य "पतितं ते तदम्भसि" ।
तदुपश्रुत्य कल्याणी रम्भेव मरुता हता ॥ ४२ ॥
पपात भूमौ निश्चेष्टा "हा हतास्मी" ति वादिनी ।
अथ तां गौतमी वृद्धा बाहुभ्यां मृगलोचनाम् ॥ ४३ ॥
आश्लिष्य सान्त्वयामास लेभे संज्ञां ततः पुनः ।
अथ क्रुद्धा महाभागा सख्यै राज्ञे च भामिनी ॥ ४४ ॥
उवाचाश्रूणि सम्मार्ज्य स्मरन्ती पितरं मुनिम् ।
"जानन्नपि महाराज ! कस्मादेवं प्रभाषसे ॥ ४५ ॥
न जानामीति निःशङ्कं यथान्यः प्राकृतो जनः ।
अत्र ते हृदयं वेद सत्यस्यैवानृतस्य वा ॥ ४६ ॥
कल्पनं वद साक्ष्येण मात्मानमवमन्यथाः ।
योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ॥ ४७ ॥
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥

एकोऽहमस्मीति च मन्यसे त्वम्
न हृच्छयं वेत्सि मुनिं पुराणम् ॥ ४८ ॥
यो वेदिता कर्म्मणः पापकस्य
यस्यान्तिके त्वं वृजिनं करोषि ॥ ४९ ॥

मन्यते पातकं कृत्वा कश्चिद्वेत्ति न मामिति ।

विदन्ति चैनं देवाश्च स्वस्यैवान्तरपूरुषः ॥ ५० ॥

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ॥ ५१ ॥
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मो हि जानाति नरस्य वृत्तम् ॥ ५२ ॥

यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।
हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥ ५३ ॥
न तु तुष्यति यस्यैव पुरुषस्य दुरात्मनः ।
तं यमः पापकर्माणं निर्यातयति दुष्कृतम् ॥ ५४ ॥
योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते ।
न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम् ॥ ५५ ॥
स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम् ।
अर्चार्हां नार्चयसि मां स्वयं भार्य्यामुपस्थिताम् ॥ ५६ ॥
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि ।
न खल्वरण्ये रुदितमस्तु मे शृणु भाषितम् ॥ ५७ ॥
यदि मे याचमानाया वचनं न करिष्यसि ।
कण्वशापेन ते मूर्द्धा शतधैव फलिष्यति ॥ ५८ ॥
भार्य्यां पतिः समाविश्य यज्जायेत नराधिप ! ।
जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः ॥ ५९ ॥
यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति सन्तत्या पूर्वप्रेतान् पितामहान् ॥ ६० ॥
पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ६१ ॥
मुनिनाऽभिहिता चाहं "तव पुत्रो भविष्यति ।
राजराजश्चक्रवर्त्ती" न तन्मिथ्या भविष्यति ॥ ६२ ॥
सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती ।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥ ६३ ॥
अर्द्धं भार्य्या मनुष्यस्य भार्य्या श्रेष्ठतमः सखा ।
भार्य्या मूलं त्रिवर्गस्य भार्य्या मूलञ्च सन्ततेः ॥ ६४ ॥
भार्य्यावन्तः क्रियावन्तः सभार्य्या गृहमेधिनः ।
भार्य्यावन्तः प्रमोदन्ते भार्य्यावन्तः श्रियान्विताः ॥ ६५ ॥
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।

पितरो धर्म्मकार्य्येषु भवन्त्यार्त्तस्य मातरः ॥ ६६ ॥
कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै ।
यः सदारः स विश्रान्तस्तस्माद् दाराः परा गतिः ॥ ६७ ॥
संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् ।
भार्य्यैवान्वेति भर्त्तारं सन्ततं या पतिव्रता ॥ ६८ ॥
प्रथमं संहिता भार्य्या पतिं प्रेत्य प्रतीक्षते ।
पूर्व्वं मृतश्च भर्त्तारं पश्चात् साध्व्यनुगच्छति ॥ ६९ ॥
एतस्मात् कारणाद्भूप ! पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्य्यामिह लोके परत्र च ॥ ७० ॥
आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः ।
तस्माद् भार्य्यां नरः पश्येन्मातृवत् पुत्रमातरम् ॥ ७१ ॥
भार्य्यायां जनितं पुत्रमादर्शेष्विव चाननम् ।
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ ७२ ॥
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुराः नराः ।
ह्लादन्ते स्वेषु दारेषु घर्मार्त्ताः सलिलेष्विव ॥ ७३ ॥
सुसंरब्धोऽपि रामाणां न कुर्य्यादप्रियं नरः ।
रतिं प्रीतिश्च धर्मश्च तास्वायत्तमवेक्ष्य हि ॥ ७४ ॥
आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम् ।
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ? ॥ ७५ ॥
परिपत्य यथा सूनुर्धरणीरेणुगुण्ठितः ।
पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः ? ॥ ७६ ॥
वरं प्रसूय पुत्रं ते विधाय च सुखं तव ।
गमिष्यामि महाराज ! कण्वस्य पितुराश्रमम् ॥ ७७ ॥
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः ।
न भरेथाः कथं नु त्वं धर्म्मज्ञः सन् स्वमात्मजम् ? ॥ ७८ ॥
न वाससां न रामाणां नापां स्पर्शस्तथाविधः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥ ७९ ॥
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥ ८० ॥
स्पृशतु त्वां समाश्लिष्य पुत्रो मे प्रियदर्शनः ।
पश्चादहं गमिष्यामि पितुरेवाश्रमं प्रति ॥ ८१ ॥
आहर्त्ता वाजिमेधस्य शतसंख्यस्य पौरव ! ।

भविता तनयस्तेऽयमित्याह मां गुरुर्मुनिः ॥ ८२ ॥
मृगावकृष्टेन हि ते मृगयां परिधावता ।
अहमासादिता राजन् ! कुमारी पितुराश्रमे ॥ ८३ ॥
उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।
विश्वासी च घृताची च पड़ेवाप्सरसां वराः ॥ ८४ ॥
तासां मां मेनका नाम ब्रह्मयोनिर्वराप्सराः ।
दिवः सम्प्राप्य जगतीं विश्वामित्रादजीजनत् ॥ ८५ ॥
सा मां हिमवतः प्रस्थे सुषुवे मेनकाऽप्सराः ।
अवकीर्य्य च मां याता परात्मजमिवासती ॥ ८६ ॥
किं नु कर्म्माशुभं पूर्वे कृतवत्यस्मि जन्मनि ।
यदहं वान्धवैस्त्यक्ता वाल्ये सम्प्रति च त्वया ? ॥ ८७ ॥

राजोवाच—

"न गर्भमभिजानामि त्वयि मत्तेजसार्ज्जितम् ।
असत्यवचना नार्य्यः कस्ते श्रद्धास्यते वचः ? ॥ ८८ ॥
मेनका निरनुक्रोशा बन्धकी जननी तव ।
ययासि हिमवत्प्रस्थे निर्माल्यमिव चोज्झिता ॥ ८९ ॥
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव ।
विश्वामित्रो ब्राह्मणत्वलुब्धः कामवशं गतः ॥ ९० ॥
मेनकाऽप्सरसां श्रेष्ठा महर्षीणां पिता च ते ।
तयोरपत्यं कस्मात् त्वं पुंश्चलीव प्रभाषसे ॥ ९१ ॥
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ।
विशेषतो मत्सकाशे दुष्टतापसि ! गम्यताम् ॥ ९२ ॥
क्व महर्षिः क्व चैवोग्रः काप्सराः सा च मेनका ।
क्व च त्वमेवं कृपणा तापसीवेषधारिणी !! ॥ ९३ ॥
सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे
यदृच्छया कामरागात् कयाचिज्जनिता ह्यसि ॥ ९४ ॥
सर्वमेतत् परोक्षं मे यत् त्वं वदसि तापसि ! ।
नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया" ॥ ९५ ॥

( इति तृतीयोऽध्यायः ) ।

शकुन्तलोवाच—

"राजन् ! सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो विल्वमात्राणि पश्यन्नपि न पश्यसि ॥ १ ॥

मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म राजेन्द्र ! तव जन्मतः ॥ २ ॥
क्षितावटसि राजेन्द्र ! अन्तरिक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरु-सर्षपयोरिव ॥ ३ ॥
महेन्द्रस्य कुवेरस्य यमस्य वरुणस्य च ।
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ! ॥ ४ ॥
सत्यश्च जनवादोऽयं तं प्रवक्ष्यामि ते नृप ! ।
निदर्शनं ब्रवीमीति न कोपं कर्त्तुमर्हसि ॥ ५ ॥
विरूपो यावदादर्शे स्वमुखं नैव पश्यति ।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तमम् ॥ ६ ॥
यदा तु मुखमादर्शे विकृतं पश्यते जनः ।
तदेतरं विजानाति स्वमेव नेतरं नरम् ॥ ७ ॥
यस्तु स्याद्रूपसम्पन्नो न स निन्दति कञ्चन ।
अतीव जल्पन् दुर्वाचो भवतीह विकत्थनः ॥ ८ ॥
मूर्खो हि जल्पतां नृणां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥ ९ ॥
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ १० ॥
अन्यान् परिवदन् साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यान् हृष्टो भवति दुर्ज्जनः ॥ ११ ॥
अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥ १२ ॥
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥ १३ ॥
अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते ।
यत्र दुर्ज्जन इत्याह दुर्ज्जनः सज्जनं स्वयम् ॥ १४ ॥
सत्यधर्म्मच्युतात् पुंसः क्रुद्धादाशीविषादिव ।
अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः ॥ १५ ॥
स्वयमुत्पाद्य वै गर्भं न ममेति वदत्यहो ।
तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥ १६ ॥
पुत्रस्ते भविता राजन्नपुत्रस्य महागुणः ।
चक्रवर्त्ती राजराज उत्तमः सर्वधन्विनाम् ॥ १७ ॥

स त्वं नृपतिशार्दूल ! न पुत्रं त्यक्तुमर्हसि ।
आत्मानं सत्य-धर्मौ च पालयन् पृथिवीपते ! ॥ १७ ॥
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्रः सत्यं पुत्रशताद्वरम् ॥ १८ ॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ १९ ॥
राजन् ! सत्यं परं ब्रह्म सत्यञ्च समयः परम् ।
मा त्याक्षीः समयं राजन् ! सत्यं सङ्गतमस्तु ते ॥ २० ॥
अनृते चेत् प्रसङ्गस्ते श्रद्दधासि न चेत् स्वयम् ।
कण्वस्यैवाश्रमं गच्छे त्वादृशे नास्ति सङ्गतम् ॥ २१ ॥
ऋतेऽपि त्वां महाराज ! शैलराजावतंसकाम् ।
चतुर्वर्णामिमामुर्वीं पुत्रो मे पालयिष्यति ॥ २२ ॥
मुनेः कण्वस्य वै वाक्यं भविता कथमन्यथा ?" ।

राजोवाच—

"किं नालपन्ति पुंश्चल्य एवमेव सुदुर्वचः ? ॥ २३ ॥
याहि त्वं गच्छ वाचाटे ! दूषयिष्यन्ति मां जनाः" ।

पुरोधा उवाच—

"अत्र वक्ष्यामि ते मन्त्रं शृणु राजन् महामते ! ॥ २४ ॥
यावत् प्रसवमत्रैव नारी तिष्ठतु ते गृहे ।
यदि ते सदृशं पुत्रं कामिन्येषा प्रसोष्यति ॥ २५ ॥
ततस्तवैव भार्य्येति वेत्स्यामस्तदनन्तरम् ।
शालिबीजाद्धिजायेत न कदाचिद् यवाङ्कुरः" ॥ २६ ॥

राजोवाच—

"नैषा शुद्धान्तमध्येऽपि मम वासमिहार्हति ।
संसर्गादपि पुंश्चल्यो दूषयन्ति कुलस्त्रियः" ॥ २७ ॥

पुरोधा उवाच—

"अदृष्टतनयास्योऽसि राजराजोऽपि भूतले ।
अतस्त्वत्सन्ततौ श्रद्धा राजन् ! मे जायतेऽधिका ॥ २८ ॥
इयं साध्वी वरारोहा कण्वेन परिपालिता ।
व्यभिचारमतो राजन् ! नाहं मन्ये मनागपि ॥ २९ ॥
यावत् प्रसवमेतान्तु वासयेऽहं निजालये ।
प्रसवे सति कल्याणीं स्वयमेव ग्रहीष्यसि" ॥ ३० ॥

शेष उवाच—

इत्युक्त्वा गौतमो ब्रह्मन् ! सान्त्वयित्वा शकुन्तलाम् ।
स्वगृहायैव तां नेतुं विमना उपचक्रमे ॥ ३१ ॥
सा चापि मुक्तकण्ठं वै रुदती मृगलोचना ।
शनैः शनैर्गौतमं तमनुगन्तुं प्रचक्रमे ॥ ३२ ॥
एतस्मिन्नन्तरे विप्र ! मेनकाऽप्सरसां वरा ।
तेजोरूपा व्योममध्यात् तड़ित्पातं पपात सा ॥ ३३ ॥
"किमिदं किमिदं चित्रम्" इति जल्पत्सु सर्वतः ।
सभास्थेषु च सर्वेषु तेजसा धर्षितेषु च ॥ ३४ ॥
आलोकनेऽप्यशक्तेषु दुष्मन्ते भयविह्वले ।
शकुन्तलां समादाय अङ्कमारोप्य सत्वरा ॥ ३५ ॥
अम्बरं विजगाहे सा तत् केनापि न लक्षितम् ।
एवं गते तु दुष्मन्तः खेदमाप ततो भृशम् ॥ ३६ ॥
देवेन चरितां मायामबुध्यत तदा नृपः ।

( इति चतुर्थोऽध्यायः । )

शेष उवाच—

एकदा स महीपालो मन्त्रिभिर्ब्राह्मणैः सह ।
प्रजानां वेदितुं वृत्तं बभ्राम नगरे द्विज ! ॥ १ ॥
तत्र राजभटः कश्चिद् दृढ़माबध्य धीवरम् ।
दण्डेन ताड़यन्नुग्रैर्वचोभिः समतर्जयत् ॥ २ ॥
"राजाऽऽभरणमेतद्धै यत् त्वया चोरितं छलात् ।
अतो वध्यत्वमापन्नं त्वां नयामि नृपान्तिके" ॥ ३ ॥
इत्युक्त्वा तं करे गृह्य ताड़यन् बहु मूर्द्धनि ।
राजान्तिकमुपानीय राजानमिदमब्रवीत् ॥ ४ ॥
"एष धीवरको राजन् ! चोरयित्वाऽङ्गुरीयकम् ।
त्वन्नामचिन्हितं लोके विदितं रत्ननिर्मितम् ॥ ५ ॥
विक्रेतुमुद्यतः पापो मया दृष्टो महीपते !" ।
राजा तं प्राह दाशेदं "कुतो लब्धमिह त्वया ॥ ६ ॥
कथयाभयमेतत् ते दत्तं जानीहि साम्प्रतम्" ।

धीवर उवाच—

"जात्याहं धीवरो राजन् ! मत्स्यमात्रोपजीवकः ॥ ७ ॥
चौरिकां नैव जानामि न च सूतां न धूर्त्तताम् ।

जालेन मत्स्यान् वध्नामि सरस्वत्या हि रोधसि ॥ ८ ॥
एकदा जालमातत्य सरस्वत्यामहं नृप ! ।
स्थितः प्रत्याशया तत्र तीरस्थं तरुमास्थितः ॥ ९ ॥
रोहितः कोऽपि सुमहान् जाले वद्धो वभूव ह ।
ततोऽहं जालमुत्तार्य्य दृष्ट्वा रोहितमुद्धतम् ॥ १० ॥
खड्गेन कृत्तवान् सद्यः परमानन्दनिर्वृतः ।
ततस्तदुदरे लब्धमेतद् भूपाङ्गुरीयकम् ॥ ११ ॥
कस्येति न विजानामि तदहं नगरे तव ।
विक्रेतुमागतो वद्धो भटेनानेन भूमिप !" ॥ १२ ॥

राजोवाच—

"देहि पश्यामि कस्यैतत् किंरूपमङ्गुरीयकम् ।
त्वमेतन्मूल्यमागृह्य सुखेनैव व्रजालयम्" ॥ १३ ॥

शेष उवाच—

इत्युक्त्वा पाणिनादाय यावद्राजा स पश्यति ।
निपतन्ति स्म नेत्राभ्यां तावदेवाश्रुबिन्दवः ॥ १४ ॥
प्रेयसीं तामनुस्मृत्य तथा गान्धर्वकर्म च ।
गर्भाधानञ्च सर्वं तन्मूर्च्छितो निपपात ह ॥ १५ ॥
तदा पुरोहितामात्या भृशमुद्विग्नचेतसः ।
उत्थाप्य तं महीपालं निवेश्य च वरासने ॥ १६ ॥
लब्धसंज्ञं शनैर्ब्रह्मन् ! पप्रच्छुः "किमिदं तव" ।
दुष्मन्तोऽपि समाश्वस्य प्रेयसीं तामनुस्मरन् ॥ १७ ॥
निःश्वस्य दीर्घमुष्णञ्च अश्रुमिश्रमभाषत ।
"प्रत्याख्याता वरारोहा मन्दभाग्येन यन्मया ॥ १८ ॥
तदद्य मां दुनोत्येव अङ्गुरीयस्य दर्शनात् ।
तया यदुक्तं मां प्राप्य मम तेजो दधानया ॥ १९ ॥
नानृतं तत्र वै किञ्चिन्मयैवानृतकं कृतम् ।
मृगयाचारिणारण्ये सैव कण्वाश्रमे मया ॥ २० ॥
गान्धर्वेणैव धर्मेण निर्वन्धेन विवाहिता ।
उषितश्च तया सार्द्धं प्रतिज्ञातश्च सर्वथा ॥ २१ ॥
वलेन चतुरङ्गेण नयिष्ये नगरं प्रति ।
अभिज्ञानञ्च मे दत्तमेतद्रत्नाङ्गुरीयकम् ॥ २२ ॥
केनापि दैवयोगेन सर्वं तद्विस्मृतं मया ।

हन्त पापं कृतं भूरि मया निष्करुणात्मना ॥ २३ ॥
आसन्नप्रसवा भार्य्या त्यक्ता देवसुतोपमा ।
अनुकूलो न मे धाता नरकान्न च निष्कृतिः ॥ २४ ॥
प्रतिज्ञापूर्वकं पाणिगृहीती यद्विवर्ज्जिता ।
श्रीरूपिणी समागत्य स्वयमेव कृपान्विता ॥ २५ ॥
अर्पयन्ती महारत्नं यथा केनापि वर्जिता ।
तथा मया पुत्रफला परा साध्वी पतिव्रता ॥ २६ ॥
याचमाना सवैश्वर्य्यं दूरादेव विवर्ज्जिता ।
मेनकाऽप्सरसो जाता विश्वामित्रसुता सती ॥ २७ ॥
कण्वेन पालिता कन्या चारुशीला तपस्विनी ।
चिन्तामणिरिवायाता काममर्पयितुं स्वयम् ॥ २८ ॥
मया निराकृता बाला अन्तःसत्त्वा सुलोचना ।
कल्पवल्लीव कामानां सम्प्रदानेऽभ्युपस्थिता ॥ २९ ॥
उन्मूलिता मया तन्वी प्रसोष्यन्ती नरोत्तमम् ।
संरम्भारुणनेत्रायाः स्मरचापायितभ्रुवः ॥ ३० ॥
वचांसि गूढगर्वाणि विदुन्वन्ति स्मृतानि माम्"

शेष उवाच—

एवं विलपमानं तं राजानं गौतमोऽब्रवीत् ॥ ३१ ॥
"तद्यातं नानुशोचस्व समाश्वस परन्तप !
कथितञ्च मया तत्र दृष्ट्वा तस्याः सुलक्षणम् ॥ ३२ ॥
तद्रूपशालिनी बाला राज्ञी भवितुमर्हति ।
सा हि मेनकया जाता चारुरूपा मनस्विनी ॥ ३३ ॥
देवीव नावमानार्हा त्वया राजन् ! विवाहिता ।
यद्भूतं महदाश्चर्य्यं प्रत्याख्यातवति त्वयि ॥ ३४ ॥
तद् दृष्ट्वा के न शोचन्ति वदन्तस्त्वां हतश्रियम् ।
भद्रं वाप्यथ वाऽभद्रं प्रियमप्रियमेव वा ॥ ३५ ॥
यद्यातं तद्गतं राजन् ! नानुशोचन्ति पण्डिताः" ।
विमृषतस्त्वेव तेष्वेवं देशान्तरचरश्चरः ॥ ३६ ॥
राज्ञे निवेदयामास यद् दृष्टं सागराम्भसि ।
"राजन् ! सांयात्रिको नाम्ना धनवृद्धिर्महाधनः ॥ ३७ ॥
विपन्नः सागरे सप्त वाहयन् सम्भृतास्तरीः ।
स चानपत्यस्तस्याष्टौ नावो रत्नैः प्रपूरिताः ॥ ३८ ॥

तवैव कोषमर्हन्ति गृह्यन्तामचिरेण ताः" ।

राजोवाच—

"यान्तु मे मन्त्रिणः सम्यग् जानन्तु तत्परिग्रहान् ॥ ३९ ॥
यदि काचित् भवेद् भार्य्या गर्भिणी वणिजः क्वचित् ।
सैव तद्धनमादद्यान्नाधिकारी तदा नृपः" ॥ ४० ॥

शेष उवाच—

तच्छ्रुत्वा मन्त्रिणो गत्वा विज्ञाय च विशेषतः ।
राज्ञे निवेदयामासुर्वृत्तान्तं ब्राह्मणर्षभ ! ॥ ४१ ॥
"अत्रैव नगरे राजन् ! भार्य्या तस्य विलासिनी ।
अन्तःसत्त्वा वणिक्पुत्री वर्त्तते च पतिव्रता" ॥ ४२ ॥
राजा प्राह "तरीस्थानि यानि यानि धनानि च ।
तानि तस्यै ददत्वद्य भटा मे यान्तु सत्वराः" ॥ ४३ ॥
इति प्रस्थाप्य राजेन्द्रो भटांस्तद्धनरक्षणे ।
द्विगुणेनैव शोकेन दह्यते स्म ततोऽब्रवीत् ॥ ४४ ॥
"एवमेव समाप्यन्ते मम राज्यस्य दुर्गतिः ।
कं यास्यति महीयं हि धार्मिकं वाप्यधार्मिकम् ॥ ४५ ॥
अन्तःसत्त्वा महाभागा या मे भार्याप्युपस्थिता ।
उपेक्षिता प्रमादेन मन्दभाग्येन सा मया ॥ ४६ ॥
अत ऊर्द्ध्वं मया दत्तं पानीयं विविधानि च ।
पास्यन्ति पितरः कोष्ण-निश्वासेन मलीमसम् ॥ ४७ ॥
पिण्डविच्छेददुःखार्त्ताः पिण्डानि च तथैव हि ।
क्व लभ्यते सा ललना साक्षात् श्रीरिव रूपिणी ॥ ४८ ॥
न मन्दभाग्यं पापिष्ठं ज्ञात्वा मां पुनरेष्यति ।
नैवंविधस्य दुष्टस्य दारुणस्य दुरात्मनः ॥ ४९ ॥
तथाविधा वरारोहा भार्य्या भवितुमर्हति" ।
एवं विलपमानस्य दुष्मन्तस्य महीपतेः ॥ ५० ॥
व्यतीयुस्त्रीणि वर्षाणि शोचतोऽहर्निशं द्विज !
अथासौ देवराजेन समाहूतो ययौ दिवम् ॥ ५१ ॥
त्रिदिवेशैरवध्यानां निधनाय सुरद्विषाम् ।
निर्वाह्य देवताकर्म रथं मातलिसारथिम् ॥ ५२ ॥
आरुह्य भुवमायास्यन् मारीचाश्रममागमत् ।
तत्र काचिज्जरा नारी ब्राह्मणी बालमद्भुतम् ॥ ५३ ॥

लालयन्ती नृपं वीक्ष्य ददावासनमन्तिके।
बालस्तु तावद्वेगेन प्रविश्य गहनं वनम् ॥ ५४ ॥
निबध्य पञ्च पञ्चास्यान् लताभिः समुपानयत्।
उवाच वृद्धामेतेषां "कति दन्ताः समुन्नताः ? ॥ ५५ ॥
निम्ना वा कति मध्या वा गणयित्वा वदाशु मे"।
दुष्मन्तस्तु तदालक्ष्य बालस्याद्भुतविक्रमम् ॥ ५६ ॥
चिन्तयामास मेधावी भार्य्याविरहकातरः।
"पौरवादप्यहो बालो धत्तेऽधिकपराक्रमम् ॥ ५७ ॥
सर्वराजश्रिया युक्तो न विप्रस्तदयं भवेत्।
चेऽतो मे वहते स्नेहं दृष्ट्वा बालं दुरासदम् ॥ ५८ ॥
कारणं तत्र पश्यामि यन्ममेयमपुत्रता"।
इति चिन्तापरे राज्ञि सिंहः कोऽपि स्वबन्धनम् ॥ ५९ ॥
छित्वा नखेन दुर्वार्य्यो गन्तुं प्राक्रमत द्विज !
दूरादुत्प्लुत्य तं बालो निगृह्य पुनरेव तम् ॥ ६० ॥
उवाच "किं रे पञ्चास्य ! प्राप्तोऽसि ब्रह्मबालकम्।
पौरवोऽस्मि न जानासि क्षत्रियो रणकोविदः ?" ॥ ६१ ॥
तदुपश्रुत्य राजर्षेः किञ्चिदुच्छ्वसितं मनः।
बालभाषितमित्येव सम्यक् श्रद्धापि नो भवेत् ॥ ६२ ॥
अथागमत् कश्यपोऽपि वनात् कुशसमिद्धरः।
विलोक्य तत्र राजानं दुष्मन्तं मुमुदे भृशम् ॥ ६३ ॥
आशीर्भिस्तमथाभ्यर्च्य विधायातिथिसत्क्रियाम्।
पप्रच्छ कुशलं राज्ये देवानाञ्च तपोधनः ॥ ६४ ॥
राजा तत् सर्वमाचष्ट मुनिवाचा गतश्रमः।
अथोवाच विहस्येषत् "कोऽयं बालस्तपोधन ! ॥ ६५ ॥
महाबलो महाबाहुः पौरवोऽहम्" इति ब्रुवन्।

कश्यप उवाच—

"तवैव तनयो राजन् ! यमसूत शकुन्तला ॥ ६६ ॥
दमनः सर्वसत्त्वानां सिंहादीनां महाबलः।
तत् सर्वदमनो नाम मयैवास्य निरूपितम् ॥ ६७ ॥
भरस्वेति च वच्मि त्वां ततोऽसौ भरतो भवेत्।
दुर्वाससो हि शापेन त्वया या विस्मृता पुरा ॥ ६८ ॥
त्यक्ता मेनकयानीय मयि न्यस्ता मनस्विनी।

सा ते शकुन्तला राज्ञी सुषावेमं कुमारकम् ॥ ६९ ॥
महाबलो महाप्राणो दुर्द्धर्षः सर्वभूभुजाम् ।
वद्धैः क्रीड़ति पञ्चास्यैः प्रबिभेत्यपि नान्तकात् ॥ ७० ॥
मया विसृष्टं दुर्दान्तः शिशुरेष ममाश्रमे ।
वस्तुं नार्हति बाल्याद्धि कदा किं नु समाचरेत् ॥ ७१ ॥
अत एनं महीभर्त्तुः सुतं तं प्रापयाम्यहम् ।
त्वमथो देवकार्य्यार्थं गतः स्वर्गं ततो मया ॥ ७२ ॥
कृतो विलम्बो राजर्षे ! शापान्तेऽपि तव प्रभो !
एष ते गृह्यतां पुत्रश्चक्रवर्त्ती भविष्यति ॥ ७३ ॥
आहर्त्ता सर्वयज्ञानां महाभागवतो नृप !" ।
इत्युक्त्वा ब्राह्मणीं प्राह वृद्धां देवगुरुर्मुनिः ॥ ७४ ॥
"शकुन्तलामिहानीय समर्पय महीपतौ" ।
तच्छ्रुत्वा ब्राह्मणी गत्वा समाहूय शकुन्तलाम् ॥ ७५ ॥
राज्ञे समर्पयामास राजा च मुमुदे भृशम् ।

शेष उवाच—

अथाऽनुज्ञाप्य मारीचं सभार्य्यः ससुतो नृपः ॥ ७६ ॥
हृष्टः स्वपुरमागच्छद्देवयानेन मारिष !
स एव भरतो नाम दुष्मन्ततनयो महान् ॥ ७७ ॥
ववृधे तत्र विप्रेन्द्र ! शुक्लपक्षे यथा शशी ।

( इति पञ्चमोऽध्यायः ) ।

—o:※:o—

## संक्षिप्तकथासारसंग्रहः—



### प्रथमाङ्कः—

अत्रभवान् कविकुलकमलदिवाकरः श्रीमान् महाकविः कालिदासः शाकुन्तलोपाख्यानमधिकृत्य शाकुन्तलं नाम नाटकं प्रणिनिनीपुरादौ स्वाभीष्टदेवाष्टमूर्तिविभूतिसंश्लिष्टाममन्दानन्दसन्दोहजननीं परिपन्मनोहारिणीमाववन्ध नान्दीम् ।

अत्र आमुखे नटीसूत्रधारौ प्रविश्य नाटकीयवस्तूपक्षेपपूर्वकं प्रखरदिनकरकरालं निदाघकालमभ्यवर्णयताम् । नटीगीतविमुग्धश्च सूत्रधारः पुनः स्मृतिमभिनीय, सारङ्गमनुधावतः सरथसारथेर्दुष्यन्तस्य प्रवेशं सूचयित्वा, नाट्या साकं निश्चक्रम रङ्गस्थलात् ।

मृगयाव्यसनी चासौ दुष्यन्तः केनाप्यतिजविना हरिणेन दूरमानीयमानस्तत्क्षणप्रविष्टाभ्यां तापसवटुभ्यां कृताशीर्वचनाभ्यां "आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः" इति प्रतिपिद्धः । आनतपूर्वकायश्च स तयोराशिपं गृहीत्वा ताभ्यां निर्दिष्टं कुरुपतेः कण्वस्य शकुन्तलाधिष्ठितमनुमालिनीतीरमाश्रमपदमभिपेदे ।

तत्र च शुश्राव श्रुतिसुभगं कलहंसकामिनीकलरवमनोरमं रमणीरवम् । अथ लोकोत्तररवाकृष्टचेतास्तत्कारणजिज्ञासयेतस्ततः पर्यटन्, अनुसूयाप्रियंवदाभ्यामनवरतमनुसेवमानामप्सरोगर्भसंभूतां तरुसेचनव्यापृतामवधीरितसुरसुन्दरीसौन्दर्य्यां तापसकुमारिकामवलोकयामास । अवलोक्य च सौन्दर्यविस्मितो वृक्षसेचननियोक्तारं कण्वमहर्षिमात्मनि वहु गर्हयन्, सखीभ्यां कथाप्रसङ्गेषु व्यपदिष्टं शकुन्तलेति तन्नामाश्रौषीत् ।

एवं सलीलमालिपु खेलन्तीपु, भ्रमराभिभूता शकुन्तला "मां परित्रायेथाम्" इति सकरुणं सख्यौ व्याजहार । तयोरपि सख्योराश्रमपीडापरिहर्तारं राजानं दुष्यन्तमाक्रन्देति व्याहरन्त्योः सहसा प्रविश्याकस्मिकपुरुषावलोकनचकिताभ्यस्ताभ्य आत्मपरिचयं दुष्यन्तातिरिक्तत्वेन ददन्, सहजसौन्दर्यं शकुन्तलाया अवलोक्य, समर्थ्य च तस्याः क्षत्रपरिग्रहक्षमतां, नितरां मनोभवनिदेशवर्ती बभूव । शकुन्तलापि नवयौवनसुलभोत्कलिकाकुलीक्रियमाणमानसा लोकोत्तरसौन्दर्यावधीरितकुमारं मन्मथप्रतिमं तमवलोक्य दीर्घं निश्वसितवती ।

अनन्तरं कौशिकेन मेनकायां जनितां शकुन्तलां, स्वसुतोचितवरान्वेपणव्यापृतं च कण्वं कथालापेपु सखीमुखाद् विज्ञाय, विचार्य च तत्रात्मनो निरतिशयामासक्तिं, तां सुप्रापाममन्यत ।

अत्रान्तरे सा शकुन्तलाप्येनमात्मनोऽनुरूपं विजानानापि वालिकासुलभचापल्येनाकृत्वैवाभ्यागतसमादरं, व्याजकोपं प्रकटयन्ती ततोऽन्यतो गन्तुं प्रवृत्ता । तदा प्रियंवदा

तरुसेचनर्णमोचनच्छलेनैनां गमनव्यापारात् न्यवारयत् । राजा तु कुसुमकोमलतनोस्तरुसेचनमयोग्यं मन्यमानस्ततस्तस्या विमुक्तये सखीभ्यां स्वीयमङ्गुलीयकं ददौ । तेऽपि सख्यौ तदादाय वाचयित्वा च तत्रत्यानि नामाक्षराणि परं विस्मयमवापतुः । दुष्यन्तस्तु "राज्ञा मे प्रसादीकृतमेतदिति" वदन् ताभ्यामन्यथा प्रतिगृहीतः ।

अत्रान्तर एव सेनासंघातपरित्रस्तः कोऽपि वन्यो गजपतिराश्रमं प्रविश्य महान्तं संक्षोभमकरोत् । उत्थितश्च तदा महान् भयचकितचित्तानां सवृद्धवनिताशिशूनां तापसानां कोलाहलः । अस्मिंश्चावसरे मातरं गौतमीं गजपतिसंक्षोभभीतां तर्कयन्त्यो राज्ञ आज्ञां गृहीत्वा तिस्रोऽपि ताः कन्यका जननीसमवलोकनार्थं ततो निर्ययुः । यान्तीषु च तासु प्रत्यग्रदर्भप्ररोहपरिक्षतपादपल्लवा कुरवकशाखाव्यतिषक्तवल्कला शकुन्तला "प्रतीक्षेतां मां" यावदितो मुक्ता स्यामिति जल्पन्ती सव्याजं राजानं मुहुर्मुहुरवलोकयन्ती सह सखीभ्यां निष्क्रान्ता । दुष्यन्तोऽपि शकुन्तलासंसक्तचित्तस्तत्क्षणानुभूततद्वियोगेन नितान्तमन्तर्दूयमानमानसो आश्रमबाधा यथा न जायेत, तथा यतिष्य इति वदन् निष्क्रान्तः ।

## द्वितीयाङ्कः—

अत्र तत्रभवतो मृगयाशीलस्य दुष्यन्तस्य नर्म्मसचिवः प्रियवयस्यो विदूषकः प्रचण्डमार्तण्डमयूखसन्तप्ते मध्यन्दिनेऽपि ग्रीष्मे मृगयार्थमितस्ततो वने परिभ्रमन्तं मृगयाव्यसनिनं राजानं बहु गर्हयन्, स्वयं चानवरतसंचरणशिथिलितशरीरसन्धिरेकपदमपि गन्तुमशक्यमिवात्मानं दर्शयन्, तिरस्कृतमृगयाव्यापारो विलपनपरः परिश्रमापनयनाय गृहीतवेत्रयष्टी राजानं प्रतीक्षमाणश्चिरमतिष्ठत् ।

अनन्तरं राजा हृदयेशयां हृदयेश्वरीं तत्रभवतः कुलपतेः कण्वस्य दुहितरं शकुन्तलामधिकृत्य दुर्वचां मनोभवबाधामनुभवन्, तथास्थितं सर्वकालमित्रं माधव्यमपश्यत् । सोऽपि नृपतिमवलोक्य कथमप्युपसृत्याभिनयपूर्वकमुदीरितजयशब्दोऽत्यर्थमनुरुरोध मृगयातो विरन्तुं प्रियवयस्यम् । अयाचत चात्मनो विश्रान्तिम् । एतदाकर्ण्य राज्ञा "सेनापतिमाह्वय" इत्याज्ञप्तोऽन्यतमो दौवारिकः "यदाज्ञापयति देवः" इति निष्क्रम्य, प्रविश्य च पुनः सह सेनानायकेन, तस्मै राजानमदर्शयत् । सेनापतिरपि स्वामिनमवलोक्य जयशब्दमुच्चार्य साञ्जलिबन्धमुपतस्थौ । "हतोत्साहः कृतोऽस्मि मृगयाविदूषकेण विदूषकेणेति" राज्ञाभिहितो भद्रसेनः सेनापतिः सह विदूषकेण चिरं विवदन्नेव निवारितः । आदिष्टश्च भद्रसेनः साम्प्रतमसाम्प्रतमस्माकमाश्रमसन्निवर्तिनामेष व्यापारस्तद्यत्प्रियवयस्येन निवेदितं, तदनुष्ठीयतामिति । स च तथेत्युक्त्वा निष्क्रम्य न्यवारयत्स्कन्धावारं तपोवनोपरोधात् ।

ततश्च विदूषको विशश्रमिषू राजानमादाय कस्मिंश्चित्पद्मिनीपलाशपरिशोभिते

पाषाणतले समुपाविशत्। राजा तु तामेवाव्याजसुन्दरीं दिव्यकन्यकामाश्रित्य विस्तारयामास गोष्ठीबन्धम्।

अत्रान्तरे द्वौ तापसकुमारावुपसृत्य राजानं वीक्ष्य कृताशीर्वचनौ कुलपतेरसान्निध्याद्राक्षसानामुपद्रवं श्रावयामासतुः। एतदाकर्ण्यानुपदमेवागच्छामीति वदन् तौ सप्रणामं विसर्ज्यादिदेश परिजनं रथमानेतुम्। अस्मिन्नेवावसरे नगरीतो देवीनासादेशहरः करभको नाम परिचारकः प्रविश्य राज्ञे न्यवेदयत्।—देव! जननी देवसाज्ञापयति, यदागामिनि चतुर्थे वासरे सुतपिण्डपालनो नामोपवासो भविष्यति। तत्रायुष्मता वयमवश्यं सम्मानयितव्या इति।

एतच्छ्रुत्वेतिकर्तव्यताविमूढो मेदिनीपतिर्मुहूर्तं विचिन्त्य विदूषकमेव तत्र गन्तुं युक्त्याऽनुनिनाय। पुनश्च "चपलोऽयं बटुः" कदाचिद् गत्वाऽन्तःपुरिकाभ्यः शकुन्तलावृत्तान्तं निवेदयेदिति चेतसि विचार्य, "परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः" इत्युदीर्य विदूषकं स्वां पुरीं प्रति प्रस्थापयामास। स्वयं च तपोवनान्तरायदूरीकरणाय यामीति निश्चक्राम।

## तृतीयाङ्कः—

अत्रादौ यजमानशिष्यः कश्चित्तापसः कुशानानेतुमितस्ततः कानने परिभ्रमन् दुष्यन्तकृतां तपोवनस्य निरुपप्लवतां प्रशंसन् अपश्यद् दूरस्थितां शीतलोपकरणसंग्रहणव्यापृतां प्रियंवदां, तत्र चायं शीतलोपकरणमवलोक्यापृच्छत्।—"कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्त इति। पृष्टया च तया "बलवदस्वस्थशरीरा शकुन्तला, तदर्थमेवैतान्युपकरणानि नीयन्त" इति विज्ञप्तः "सम्यगुपचर कुलपतेः प्राणसमां शकुन्तलाम्" इत्यभिधाय तस्या एव वैतानिकशान्तितोयं गौतमीहस्ते समर्पयितुं ततः प्राचलत्।

अथ कुसुमायुधशरनिकरजर्जरितशरीरो दुष्यन्तस्तामेव हृदयालयलीनां स्वान्ते नितान्तमनुचिन्तयन् आश्रमोपकण्ठेऽपि पुष्पबाणजामपि पीडां सोढुमसहमानो मदनमत्यर्थमुपालभन् निरन्तरतरुनिचयोपचितमाससाद मालिनीतीरम्। अपश्यच्च तत्र तरुषण्डमण्डिते लतामण्डपे प्रियसखीभ्यां शीतलोपकरणैः शुश्रूषमाणां कोमलकमलिनीदलतल्पललितं शिलातलमधिशयानां शकुन्तलाम्। दृष्ट्वा च तत्सङ्गमोत्सुकोऽपि तन्मनोमन्दिरेऽधिशयानं युवानं नामतोऽधिगन्तुमभिलषन् सहसा तत्रानुपसृत्यैव लताप्रतानान्तरितो नितान्तक्लान्तकायस्तासामात्माश्रयान् विश्रम्भालापानाकर्णयन् स्थितः।

अत्रान्तरे प्रियसखीभ्यां हृदयाधिहेतुं सनिर्बन्धं पृष्टापि सा नवयौवनदुश्चेष्टितं निवेदयितुमसमर्था केवलं कुचतटविन्यस्तहस्तपल्लवा भृशं निशश्वास। पुनः पुनश्च ताभ्यां प्रियसखीभ्यामनुरुध्यमाना स्वमनोभवस्य लक्ष्यं दुष्यन्तं कथयामास।

ततश्च सखीमनोरथसम्पादने कमप्युपायमपश्यन्त्यौ चिन्तानिमग्नमानसे मुहूर्तमचिन्तयतां प्रियवयस्ये। अस्मिंश्चावसरे प्रियंवदा किंचिदिव ध्यात्वा "प्रियसखि! मदनलेखनमिदानीमस्य क्रियताम्। तच्चाहं कुसुमसमूहनिलीनं कृत्वा तस्य हस्तं प्रापयिष्यामीति कथयामास। समर्थिततदुपाया शकुन्तला प्रियंवदानीते नलिनीदले स्वाभिप्रायावेदयित्रीं मदनपत्रिकामालिख्य पपाठ। दुष्यन्तश्चेमं रमण्या रमणीयोपन्यासम् आकर्ण्य सहसा तरुगहनान्निष्क्रम्योपसृत्य च सुललितैरालापैरालपन्, सखीसविधे "कुलप्रतिष्ठा ममेयं ते प्रियवयस्येति" स्वीकृत्य नर्मालापैर्विरहशोकपरिभूतां तां परिसान्त्वयन् तया सह तत्रैव क्षणं समयं निनाय।

प्रियंवदानुसूये च "जातमनयोः सख्यम्" इति मन्यमाने हरिणीशावकानुगमनमिषेण स्थानात्तस्मान्निर्जग्मतुः।

अनन्तरमसाववनिपालः प्राणसमां प्रणयिनीं प्रियां मधुरालापशतैः प्रीणयन् रेमे। अशृणोच्च गौतमीसमागमसूचकं दूरस्थसखीस्वरसंयोगम्।

आकर्ण्य च क्षिप्रमपसर्पति नरपतौ विटपान्तरालं, समायातायां च शान्तिसलिलभाजनहस्तायां गौतम्यां, अभिषिक्ते च तया शान्तिसलिले कमलदलकोमले शकुन्तलाशरीरे, अस्ताभिमुखे च भगवति गभस्तिमालिनि सरोजिनीजीवितेश्वरे भास्करे, सह तनयया निष्क्रान्ता गौतमी। राजापि कान्तासहभुक्तं लतामण्डपं पुनरागत्येतस्ततो निसृष्टदृष्टिरकाण्डविघटनं गर्हयन्, मुनिजनैरुच्चैरुच्चरितां सायन्तनेष्टिप्रत्यूहप्रवृत्तिमाकर्ण्य तद्व्यपनयनायागमत्।

## चतुर्थाङ्कः—

अत्र शकुन्तलायाः प्रियवयस्ये पुष्पावचयार्थमागत्य, "इतः प्रतिनिवृत्तो राजा शकुन्तलां स्मरति न वा? सम्प्रति सोमतीर्थादागतस्तातः कण्वः शकुन्तलावृत्तान्तमिमं ज्ञात्वा किं विधास्यतीति" मिथ आलपन्त्यौ पूजार्थं कुसुमान्यवाचिनुताम्। श्रुतश्च ताभ्यां तस्मिन्नवसरे "अयमहं भोः" इत्यभ्यागतस्वरसंयोगः। प्रस्थानोन्मुखाभ्यां च ताभ्यामतिथिमुखात् कोपातिशयव्यञ्जकं "विचिन्तयन्ती यमनन्यमानसा तपोनिधिं वेत्सि न मामुपस्थितम्। स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमं कृतामिवेति" हृदयविदारकं वाक्यमाकर्णितम्। एतदाकर्ण्य च स्वरसंयोगमहिम्ना अस्य वचसो वक्तारं तत्रभवन्तं सुलभकोपं दुर्वाससमन्येताम्। अचिन्तयतां च चेतसि "सत्वरमुपसृत्य यथा कथञ्चिदपि नूनमनुनेतव्योऽयं महर्षिरिति।

अनन्तरमनुसूया तं दुर्वाससं परिसान्त्वयितुं सत्वरं ततः प्रतस्थे। अनुनीतश्च तयानुनयमहिम्ना गरिम्णा स महर्षिः। "न मे वचनमन्यथा भवितुमर्हति, तथाप्याभरणाभिज्ञानदर्शनपर्य्यवसानोऽयं मे शाप" इति तद्विमुक्त्युपायमुक्त्वाऽन्तर्दधौ।

श्रावयित्वा च प्रियमप्यप्रियमिव प्रियंवदां मुनिशापावसानं, सन्तापसन्तप्तस्वान्ता च सा कथमपि प्रियंवदया सह शकुन्तलां समाश्वासयितुं निर्जगाम।

अथ प्रभातप्रायां च यामिन्यां कश्चित् कण्वशिष्यः प्रविश्य ज्ञात्वा च प्रभातप्रायां वेलां गुरवे विज्ञापयितुमगमत्। चिरचिन्तानलदन्दह्यमानमानसानुसूयातु कथमिमं वृत्तान्तं तातो ज्ञास्यतीति चिरमचिन्तयत्। तदैव प्रियंवदाऽपि, आकाशवाण्या शकुन्तलाया गान्धर्वविवाहं विज्ञाय प्रमुदितचेता महर्षिः कण्वोऽद्यैव शकुन्तलां पतिगृहं प्रेषयिष्यतीति विज्ञाप्य शकुन्तलाप्रस्थानोचितमङ्गसंभारोपसंग्रहणाय नितरामनुरुरोध। अनुसूयाऽपि प्रियंवदां सहकारशाखावलम्बितात् नारिकेलसमुद्गकात् सखीनिमित्तमेव निक्षिप्तां केशरगुण्डिकामानयेति व्यादिश्य, स्वयं च प्रस्थानमङ्गलसमालम्भनानि विरचयितुमुदचलत्।

अनन्तरं कण्वेन शकुन्तलामनुगन्तुं व्यादिष्टे शार्ङ्गरवप्रभृतौ शिष्यजने, आशिषा तन्मङ्गलाभिवृद्धये चोपस्थिते वृद्धतापसीगणे, कण्वादेशात्तपोवनपादपवनदेवतादिभिः समर्पितविविधवसनविभूषणसंभारं शकुन्तलायै समर्पयितुम् उपसृते च हारीतनामधेये मुनितनये, समर्प्य च गुरवे निवेदयितुं प्रतिनिवृत्ते तस्मिन्, प्रियसख्यौ शकुन्तलां पतिसमागमोत्सुकां विविधालङ्कारैरलञ्चक्रतुः।

अथ भविष्यत्तनयावियोगखिन्नचेतास्तत्रभवान् कण्वो विलपनपरां प्रियतनयां शकुन्तलां कथमपि समाश्वस्य वैतानिकाननलान् प्रदक्षिणीकर्तुं तां समादिदेश। अनन्तरं गन्तुमुद्युक्तायां तनयायां, अनुगच्छति च गौतमीसनाथे शार्ङ्गरवशारद्वतनाम्नि मुनिबालयुगले, तनयागमनार्थमनुमन्वति चारण्यतरुदेवताप्रमुखे, तनयावियोगविधुरोऽधीर इव क्षणं भगवान् कण्वश्चलितचित्तवृत्तिरवर्तत। अथ समुद्गीते वनदेवताभिर्गमनगीतिमङ्गले, ताभ्यः प्रणतायां च गौतमीवचनचोदितायां शकुन्तलायां, आश्लिष्टायां च भगिनीमाधवीलतायां, समर्पितायां च तस्यां सखीद्वयहस्ते, मृगवधूप्रसवप्रवृत्तिं विसर्जयितुं विज्ञापिते च भगवति कुलपतौ, निवारिते च पदानुसारिणि जननीरहिते हरिणपोते, तत्रभवता कण्वेन मुहुर्मुहुरुपदिश्यमाना शकुन्तला पतिसमागमोत्सुकापि कुलपतिवियोगदुःखिता कथङ्कथमपि यातुं प्रावर्त्तत।

अथैवं सानुकम्पं प्रचलितायां सपरिजनायां शकुन्तलायां, कुलपतिः कण्वः क्षणमात्रं तीरतरुच्छायायां विश्रम्य सह सर्वैः, राजोचितमुदन्तञ्च सन्दिश्य, सम्यगुपदिश्य च दुहितरं, पतिगृहे विनयौदार्यादिगुणगरिम्णा भर्त्तारमनुरञ्जयितुं, प्रणामलालसां तां उरसाश्लिष्य गन्तुमाज्ञापयामास। ततस्ते सख्यावपि यदि स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत् तदा प्रदर्श्यतामिदमङ्गुलीयकमित्युक्त्वा च जोपमास्ताम्। शकुन्तलापि भाविविरहशोपितान्तःकरणा सख्यावालिलिङ्ग। कण्वोऽपि पुनस्तपोवनागमनाभिलापिणीं तनयां समुचितैर्वाक्यैराश्वास्य

विसर्जयामास । विसर्ज्य च लब्धमिदानीं स्वास्थ्यमिति वदन् अनुसूयाप्रियंवदाभ्यां साकम् आश्रमं प्रतिनिवृत्तस्तत्रभवान् कण्वः ।

## पञ्चमाङ्कः—

अत्र तपोवनादागतान्मुनिशिष्यजनादाकर्णितकण्वर्षिसन्देशः कञ्चुकी राज्ञे निवेदयितुमन्तः प्रविशन् स्खलितगतिरात्मनो जरादशां नितरां निन्दन् तदानीमेवोत्थिताय धर्मासनान्नरपतये निवेदयितुं शङ्कितमनाः किंचिच्चिरञ्चितयन् तूष्णीमतिष्ठत् ।

एतस्मिन्नेवावसरे विदूषकेण समं समासीनोऽधिकारजनितनिर्वेदादन्तर्दूयमानमानसः; राज्यपालनं नाम नितान्तस्वान्तसन्तापकारीति कथयन् वैतालिकमुखनिःसृतं तदानीन्तनान्तःकरणसन्तापापनोदकं लोकोत्तरभाववद्गं गानमश्रृणोत् ।

आकर्ण्य च मोदमानमानसः सह वयस्येन समयं यापयन् सङ्गीतगृहनिःसृतां हंसवतीकरकमलकोमलवादितां वीणां कलहंसकुलकामिनीकलकण्ठकोमलां गीतिकाञ्चाकर्ण्य गृहीतगीतार्थः प्राहिणोत्तत्र विदूषकम् । नरपतिश्च कान्ताविरहविसंष्ठुले मानसेऽनेकधा तर्कयन्, सहसा दौवारिकनिवेदितं तापसजनागमनमाकर्ण्य सविस्मयः "त्वरितं प्रवेशये"त्यादिश्य मुनिजनमनोरमं यज्ञागारं प्राविशत् ।

अत्रान्तरे तापसावपि इतस्ततो राजभवने निसृष्टदृष्टी प्रशंसितराजचरितौ प्रविश्य यज्ञागारं, क्षितिपतिं चावलोक्य "जय राजन्" इत्युदीर्य यथाश्रुतं कुलपतिसन्देशमादिशतां राज्ञे । अथ सुलभकोपमहामुनिदुर्वासःशापविमूढमतिः स राजा तां तापसमुखनिर्गतां भारतीं पथ्यामप्यपथ्यामिव भावयन् विपरीतवृत्तिः शकुन्तलासहकृतगान्धर्वसम्बन्धं स्मार्यमाणोऽपि तत्र प्रमाणमनधिगच्छन् निजपुरोहितमतानुसारं शकुन्तलां निजभवने परीक्षणार्थम्प्रसवपर्यन्तं स्थापयितुमनुमान्य मुनिबालौ च विसर्ज्य विस्मयस्तिमितचित्तवृत्तिर्निर्जगाम यज्ञागारात् । शकुन्तलापि विस्मृतपूर्वसम्बन्धं निष्ठुरं क्षितिपतिमात्मानं च विगर्हयन्ती निजसखीजनविरहातिखिन्नतया च परिदेवयन्ती सहाचार्येण निष्क्रान्ता ।

एवं तत्रैव किंचित्कालं यापयन्ती निराकरणखिन्नमानसाऽतिविह्वला शकुन्तला जननीप्रहितया कयापि त्रिदशाङ्गनयाऽनीयतान्तरिक्षमकाण्ड एव ।

नरपतिरपि पुरोहितमुखादिमं वृत्तान्तमाकर्ण्याश्चर्यचकितचेतोवृत्तिर्मुनिशापस्य दुर्लङ्घ्यतया विस्मृतकान्तावृत्तान्त आरूढसन्देहदोलस्तद्भवनान्निरगात् ।

## पञ्चमाङ्काशोऽङ्कावतारः—

अत्रादौ नगररक्षकः कश्चिद्राजपुरुषाभ्यां सह गृहीतराजनामाङ्किताङ्गुरीयकं पुरुषमेकं "चौरोऽयमिति मत्वा, गृहीतवान् । अप्राक्षीच्चैनम्—"रे ! कुतस्त्वयैतदासादितं, सत्यं सत्यं कथय" इति । स च धीवरो जालगृहीतमत्स्योदराभ्यन्तरान्मया लब्धमि-

त्यकथयत् । समाकर्ण्य धीवरवचनं नगररक्षकः सन्दिहानो राजान्तिकमेवैनं नेतुकामो राजपुरुषान्तिके तं संस्थाप्य राज्ञे वृत्तान्तमिमं निवेदयितुं साङ्गुलीयको निर्ययौ राजान्तिकम् । अचिरेण च ततः समागत्य धीवराय नृपतिप्रसादं दत्वा तं मुमोच बन्धनात् ।

अथ प्राप्तनृपतिप्रसादेन धीवरेण साकं नरपतेः करुणवृत्तान्तमालपन्तौ राजपुरुषौ तत्रात्मनोऽप्यंशं कथयित्वा, गृहीत्वा च ततः किञ्चिन् मधुपानार्थं शौण्डिकालयमविशताम् ।

## षष्ठाङ्कः—

अत्र प्रथमं सिश्रकेशी नाम काचिद् देववनिता पर्यायनिवर्तनीयमप्सरोभिरादिष्टं सम्पाद्य, स्वसुतार्थं मेनकासन्देशमनुस्मरन्ती दुष्यन्तवृत्तान्तं ज्ञातुमाकाशयानेनोपवनान्तिकमाजगाम । वसन्तोत्सवसमयेऽपि निरुत्सवं अवलोक्य च राजकुलं, तत्र च कारणं जिज्ञासमाना तिरस्करिण्यन्तरितनिजावयवा क्षणं तूष्णीमतिष्ठत् ।

अनन्तरं मदनोत्सवं आरब्धुं समायाते चेटीद्वये, सहसा प्रविश्य कञ्चुकी निर्भर्त्सयन् प्रतिषिद्धवान् मदनोत्सवम् । प्रतिषेधकारणाकर्णनकुतूहलिनीभ्याञ्च ताभ्यामङ्गुलीयकदर्शनात्प्रभृति राज्ञः करुणप्रवृत्तिं वसन्तोत्सवप्रतिषेधादेशञ्च निवेद्य, मुहूर्तमस्थात् ।

नृपतेः करुणवार्तां आकर्ण्य प्रचलिते चेटीद्वन्द्वे, अकारणनिराकरणकातरमना नृपतिः प्रतिहारीवयस्याभ्यां सहोपवनं प्रविश्य, प्रियाविरहेण नितान्तक्लान्तकाय आत्मनो राजकार्यकरणाक्षमतां सचिवाय प्रतिहारीमुखेन सन्दिश्य, कार्य्यान्तरमिषेण कञ्चुकिनमपि संप्रेष्य, एकान्त एकान्तप्रियेण विदूषकेण सह शकुन्तलासम्बन्धिगोष्ठीबन्धं व्यरचयत् ।

अत्रान्तरे शकुन्तलाप्रतिकृतिमादायोपस्थितायां चेट्यां चतुरिकायां, दृष्ट्वा च तत्राविकलं प्रियास्वरूपं स्वयञ्च पुनस्तत्रैवान्यत्र किञ्चिच्चित्रयितुकामश्चेटीमादिश्य वर्तिकानयनाय, भर्त्सयंश्च चित्रलिखितं प्रियाधरमधुपानलालसं मधुपं, चित्रोऽयमिति स्मारितो वयस्येन नितान्तमतप्यत ।

अथैत्य च सा "चतुरिकाभिधाना चेटी आलेख्य लेखनार्थं वर्तिकाकरण्डकं स्वामिसमीपं न यतीति पश्य पश्य" इति पिङ्गलिकयावेदिता देवी वसुमती भवदन्तिकं प्रस्थिताया मम हस्तात्–"अहमेव आर्यपुत्रस्य उपनेष्यामि ।" इति भणित्वा सबलात्कारं तद् गृहीतवती । अहञ्च ततः कथमपि आत्मानं मोचयित्वेतः समागतास्मीत्यकथयत् । राजा च महिषीसमागमप्रवृत्तिं आकर्ण्य संभ्रान्तस्वान्तः प्रियाप्रतिकृतिसङ्गोनार्थं विदूषकं नियोज्य, सचिवपत्रपाण्या प्रतीहार्या सहालपत् । महिषी गमनव्यापारान्निवृत्तेति प्रतीहार्य्या निवेद्यमानस्तत्पत्रमनुवाच्य, ज्ञात्वा च "धनवृद्धिर्नाम वणिग् वाणिज्यार्थं जलपथमुपगतो नौव्यसनेन मृतश्च, अपुत्रतया च तद् धनमिदानीं रा-

जस्वतामुपपद्यते तदधुनात्र किं कर्तव्यमिति, अनेकदारस्य तस्य काचित्पत्नी चेदन्तर्वत्नी, सैतद् गृह्णातुमर्हतीति सन्दिश्य, आत्मनोऽप्यपुत्रतया नितान्तमन्तस्तापमवाप।

अथ मिश्रकेश्यपि समस्तं राजवृत्तान्तमाकर्ण्य तेन वृत्तान्तेन शकुन्तलां समाश्वासयितुं सुरलोकमारुरोह । अथनृपतिराकस्मिकं वयस्यस्यार्तनादमाकर्ण्य तत्कारणावगतये कञ्चुकिनं व्यादिश्य, ज्ञात्वा च तन्मुखाद् भूताविष्टं प्रियवयस्यं, तद्वधार्थमाकृष्टधन्वा मातलिं सुरनाथसारथिमपश्यत् ।

मातलिवचनेन दुर्जयदानवोपद्रवोपशमनार्थमात्मन इन्द्रलोकप्रस्थानं, कोपसंवर्द्धनार्थं च विदूषकनिग्रहणं विज्ञाय, सम्यक् प्रजाः पालनीया इति मन्त्रिणं समादिश्य, इन्द्रदर्शनोत्सुको विमानमारुह्येन्द्रलोकं जगाम ।

## सप्तमाङ्कः—

अत्रादावुपशमितदानवोपद्रवस्य पृथिवीपतेर्दुष्यन्तस्य मातलिना सार्धं गगनमुत्पतता रथेन सह सङ्गमः । तत्र स्थितस्य तस्योपान्त इन्द्रकृतादरातिशयमवर्णयत् । मातलिरपि समस्तं तत् समर्थितवान् । एवमेव वर्णनक्रमेण प्रथमं प्रवहस्य, तदनन्तरं चावहस्य वायोर्मार्गवर्णनम् । रथावरोहणवेगवशाद् विपरिवर्तितमर्त्यलोकस्य तदानीन्तनविस्मनीयदशावर्णनम् । मारीचाधिष्ठितहेमकूटाचलवर्णनं, रथावरोहणकाले दुष्यन्तकृता रथावरोहणप्रशंसा, आश्रमोऽयमिति मातलिकथनानन्तरं दुष्यन्तकृताश्रमवर्णनम् ।

ततश्चाकाशवाण्या पतिव्रताधर्मसमाकर्णनार्थमदितिप्रभृतीनां मुनिवनितानां कश्यपेन समं समागमः । तदादेशलाभमिषेण मातलेरपि तत्र गमनम् । दुष्यन्तस्य दक्षिणभुजस्पन्दनं च ।

अनन्तरं तापसीयुगलपरिपालितस्य जननीस्तनन्धयसिंहशावकमाकृष्य खेलतोऽबालसत्वस्य शिशोः प्रवेशः । अवलोक्य नृपतिकृतं तस्य बाल्यपराक्रमातिशयवर्णनम् । "पश्य शकुन्तलावण्यमिति" कयाचित्तापसकुमार्याभिहिते, निजजननीनामाकर्णनोत्कण्ठस्य बालस्य तत्कालजातावस्थामवलोक्य शकुन्तलागर्भसंभूतत्वस्य स्फुटप्रतीतिः । दुष्यन्तकरस्पर्शेन बालहस्तस्थितताया महौषध्याः भूमौ पतनम् । ततश्च बालेन "दुष्यन्तो मम तातः, न खलु त्वमि" त्यभिहिते स्फुटमात्मनि तत्पितृत्वप्रतीतिः । ततश्च अचिरादेव विरहदुर्बलायाः शकुन्तलायास्तत्रागमनम् । अथ दम्पत्योर्विविधविस्रम्भालापः । मातलिना समं सपुत्रकलत्रस्य तस्य मुनिसमीपगमनम् । तत्र च दुर्वाससः शापेनैवेदमापतितमिति स्वमोहहेतुश्रवणम् । कण्वसमीपे पतिपत्नीपुत्रसमागमवृत्तान्तप्रेषणम् ।

गृहीताशीर्वादस्य पुत्रकलत्रसमन्वितस्य राज्ञो दुष्यन्तस्य निजनगरप्रस्थानम् । अथ नटकृतप्रशस्तिवर्णना चेति ।

# किञ्चित्प्रास्ताविकम्

—:❀:—

"अविदितगुणापि सुकवेर्भणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥"

जानन्त्येवामरगवीवनविहरणैकपरायणाः सूरिसंसदवतंसचूडामणयस्तत्त्वविदो विपश्चितो यदिह संस्कृतसाहित्यसंसदि कविकुलकमलदिवाकरकालिदासलेखनी-विगलितमिदमभिज्ञानशाकुन्तलं नाम रूपकं दृश्यकाव्येषु प्रथमां भूमिका मुपकरोतीति ।

कविकुलपतेः कालिदासस्यानेन रूपकरत्नेन न केवलं भारतमेव भारतीया विभूषयन्ति किन्त्वस्य सूक्तिसुधासरोवगाहनविलक्षणविचक्षणा दैशिका वैदेशिका-श्चालोचकचतुराः सरस्वदुत्तरतीरनिवासिनः साहित्यिकाः कोविदा गौराङ्गा अप्येत-दधीयाना नितान्तं वेद्यान्तरसम्पर्ककलङ्कविकलमानन्दमनुभवन्तो मुहुर्मुहुर्मुक्त-कण्ठेनैकपदेऽस्य कृतेरलौकिकत्वं प्रतिजानाना नितरामेनां प्रशंसन्ति ।

साहित्यसौहित्यसमाहितमतयो महीयांसो विद्वांसः कविकुलगुरोः कालिदा-स्येमामेव कृतिं ध्यायं ध्यायमात्मानं धन्यं मन्यमाना नाट्यरससुधानन्दसन्दोह-सम्मुग्धचेतसः साधुसाध्वित्यतःपरमन्यदेकमपि पदं वक्तुं न पारयन्तीत्यहो अस्य कवयितुः कवेः काव्यकलाकौशलम् ।

संस्कृतसाहित्यसमाजपरिचितः कविकुलालङ्करणः सुगृहीतनामा श्रीमान् जयदेवस्तु स्वीये प्रसन्नराघवे कविगणनावसरेऽन्येषां कवीनां नामानि सामान्येनो-पन्यस्यैनमेव कविकुलगुरुत्वेन निरचैषीत् ।

तथाहि—

"यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैष कथय कविताकामिनी कौतुकाय ॥

कविरयं कदा कुत्र कं वाभिजनमलमुद्योतयामास, कस्य वावनीनायकस्य संसदनेन स्वप्रतिभाप्रभाभिरलम्प्राकाश्यत ? ऐतिहासिकः प्रबन्धोऽपीहासाद्यते नवा? कथं वास्य प्रवृत्तिरस्यां रूपकरचनायां? कथञ्च व्यावहारिकं विज्ञानम्? इयञ्च कृतिः कस्याश्चन तुलामधिरोहति नवा? शास्त्रान्तरेषु पाण्डित्यमस्य कियत् कीदृशं? कीदृशश्चास्यादर्शः? कीदृशी च काव्यप्रणयनप्रणालिः? कं वावलम्ब्य प्रणीतमेतन्महाकाव्यम्? के वामुष्य कृतौ गुणाः के च दोषाः? केवास्य पौर्वकालिकाः कवयः के च तदौत्तरकालिकाः? अन्यापि काचिदस्ति नवा कृतिप्रवृत्तिरित्यादिषु विषयेषु सुकुमारकुमारमतीनां कुमाराणां स्वान्तं नितान्तमहरहः कौतूहलमवलम्बत एवेति तदपनेतुं "महाकविः कालिदास" इति प्रबन्धप्रणयनं विनिश्चित्येहाप्रकृतस्यास्य विस्तृतिभयाद्विरम्यते।

कविकुलकाननकेसरिणो महामतेरस्य महाकवेः समयाद्व्यतिकरे भारतीयानां हूणदेशीयानाञ्च प्रत्नतत्त्वान्वेषिणामन्योन्यं सिद्धान्तवैमत्यं चिराय जागरूकस्तिष्ठतीत्यपि नाविदितं विदितवेदितव्यानां तद्विदां विदुषाम्।

केचन खिस्तीयषष्ठशतकभवमेनमामनन्ति, केचिच्चास्य गुप्तकालमित्याचक्षते, अन्ये च वैक्रमप्रथमशताब्द्या आरम्भभवोऽयमिति मन्यन्ते।

एवमेवास्य निवासभूसम्बन्धेऽपि केचित् तदीयरघुकुमारप्रभृतिकाव्यधृतैः "गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश।" अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः। इत्यादिवर्णनपरैरनेकैः पद्यैरयं काश्मीरदेशावतंस इति प्रमाणयन्ति, अन्ये च मेघदूतकाव्य उज्जयिन्याः पुनः पुनः सातिशयवर्णनावलोकनादयमुज्जयिनीवास्तव्य इति निर्धारयन्ति।

अस्य कवेः काव्यप्रणयनप्रणाली कीदृशी, रचनायामुपमादीनां सन्निवेशः कीदृशः, प्रसादमहिमा पदलालित्यञ्च कीदृशमिति संक्षेपतोऽपि यद्यपि वक्तुमशक्यं तथापि कविमूर्धन्यो महाकविरयमनयैव स्वरचनया सर्वानपि कवीनतिशय्य चिराय समलङ्करोति भारतभुवमिति कथनं वा केन वारयितुं शक्यते।

अत्र च विषये निःसरन्त्येव प्रायो विदुषां सूक्तयः। तद् यथा—
हरिकुलहारावलयाम्—

'पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा।

अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥"

शार्ङ्गधरपद्धतौ कृष्णभट्टोऽपि—

"कवयः कालिदासाद्याः कवयो वयमप्यमी ।
पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥

अपि च—

"वयमपि कवयः कवयः, कवयोऽपि कालिदासाद्याः ।
दृषदो भवन्ति दृषदश्चिन्तामणयोऽपि हा दृषदः ॥

अत्रैव बाणभट्टोऽपि—

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥"

शृङ्गारोत्तररचनायामप्रतिरथो गोवर्धनाचार्योऽपि सप्तशत्यामेवमेनमुद्दिश्याह—

"साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ।
शिक्षासमयेऽपि मुदे रतलीला-कालिदासोक्ती ॥"

अन्यच्च—

"वाल्मीकेरजनि प्रकाशितगुणा व्यासेन लीलावती
वैदर्भीकविता स्वयं वृतवती श्रीकालिदासं वरम् ।
याऽसूतामरसिंहमाघधनिकान् सेयं जरानीरसा
शून्यालङ्करणा स्खलन्मृदुपदा कं वा जनं नाश्रिता ? ॥

एतद्गुणसमुग्धहृदयो राजशेखरस्तु मुक्तकण्ठः सन्नेवमुदाजहार—

"एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥"

किम्बहुना महाकवेरस्य कविताकामिनीकलाविलासमुग्धमानसा मनस्वि-मूर्धन्या महात्मानोऽनेके संस्कृतवाङ्मयरसिका महता समादरेणाऽस्य पद्यांशं स्वीयेन पद्येन योजयन्त आत्मानं धन्यं मन्यन्त इत्यधस्तान्न्यस्तेन मीमांसक-शिरोमणेस्तत्रभवतो भगवतः कुमारिलभट्टस्य तन्त्रवार्तिकपद्येनैव सम्यगवबुध्यते ।

'एवञ्च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥"

## नायकादिसिद्धान्तः—

तदेवं गुणगणगरीयसो महाकवेरस्यां कृतौ नायको दुष्यन्तो धीरोदात्तः; नायिका शकुन्तला स्वकीया, मुग्धालम्बनविभावौ, चन्द्रचन्दनरोलम्बसुगन्धिकुमुदादय उद्दीपनविभावाः, अन्योन्यचक्षूरागोऽनुभावः, हर्षौत्सुक्यादयो व्यभिचारिणः, रतिः स्थायिभावः, सम्भोगश्रृङ्गाररसोऽङ्गी, हास्यकरुणप्रवासविप्रलम्भाख्यश्रृङ्गारादयोऽङ्गरसाः, विदूषकाद्याः सहायाः, पाञ्चाली रीतिः, गुणो माधुर्याख्यः, प्रयोगातिशयाख्या प्रस्तावना चेति ।

कविकुलगुरुत्वेन प्रसिद्धस्यास्य महाकवेः प्रणीतप्रबन्धास्त्विमे वर्तन्तेः—

ऋतुसंहारम्, कुमारसम्भवम्, मेघदूतम्, रघुवंशम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलञ्च ।

यद्यपि नलोदयपुष्पबाणविलासश्रुतबोधद्वात्रिंशत्पुत्तलिका-श्रृङ्गारतिलक-श्रृङ्गाररसाष्टकप्रभृतयो ग्रन्था अप्येतन्नाम्नैव प्रसिद्धा वर्तन्ते परमैतिह्यप्रमाणाभावादस्यैवेम उतान्यस्य कस्यचन कालिदासस्य इति निर्णीय प्रतिपादयितुं न शक्यते तथाप्येतत्सर्वं "महाकविः कालिदास" इति स्वतन्त्रे प्रबन्धे सम्यग् विविच्य प्रपञ्चिष्यत इति स प्रबन्धो नूनमवलोकनीयः ।

एतद्ग्रन्थप्रकाशनसमये शरीरस्यास्वस्थतया कार्यबाहुल्येन च संशोधनादिकार्यं सम्यक्संपादयितुमसमर्थेन मया बाल्यस्याप्यबालस्येव व्युत्पत्तिशालिनोऽन्तेवासिनो दीर्घायुषः श्रीशिवकुमारशास्त्रिणः सुमहत्साहाय्यमन्तरान्तरा समुपलब्धमिति सततदध्ययनाभिवृद्धये वाङ्मयाधिकृतां शारदेन्दुसमप्रभां भगवतीं भारतीमनिशमनुचिन्तयामि ।

अस्यास्मिन् संस्करणे स्वल्पविदो मम भ्रान्त्या, सीसकाक्षरसंयोजकानां प्रमादेन, संशोधनादिदोषेण वावस्थिता दोषाः क्षमावद्भिर्विद्वद्भिरवश्यं क्षन्तव्या इत्यलं पल्लवितेन ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

१९९१ नागपञ्चमी
शारदाभवनम्-काशी ।

विदुषामनुचरस्य—
गौरीनाथ पाठकस्य ।

# ऐतिह्य-सङ्ग्रहः ।

**प्रथमाङ्कीय षष्ठश्लोके:—**

पुराकिल दक्षयज्ञं श्रुत्वा तत्र गता पार्वती निजपतिनिन्दामाकर्ण्यात्मानमग्निसाच्चकार, भूतभावनो भगवान् भूतेशस्तच्छ्रुत्वा स्वं धनुः पिनाकमादाय तत्राजगाम । भूतपतेर्भयाद् भीतः क्रतुरपि तमायान्तमवलोक्य मृगरूपं धृत्वा पलायितुमारेभे । सोऽपि तमनुजगामेति कथानुसन्धेया ।

**द्वितीयेऽङ्के:—**

आसीत् किल पुरा सूर्यवंशीयः कश्चन त्रिशङ्कुर्नाम महामतिर्महीपतिः । सदेहः स्वर्गमभिजिगमिषुः स एकदा तत्रभवन्तं भगवन्तं गुरुं वसिष्ठमुपेत्य स्वं मनोरथं कथयित्वा तदर्थं यज्ञम् आदिशेत्यवोचत् । स च नास्मिन् यज्ञे तवाधिकार इति तं प्रत्यवोचत् । ततः स गुरुपुत्रानुपासरत् । तेऽपि गुरुणा प्रत्याख्यातस्त्वं यतोऽस्मानुपागमः, अतश्चाण्डालत्वं प्राप्नुहीत्यभिशेपुः । एवं गुरुणा गुरुपुत्रैश्च भृशं निराकृतस्त्रिशङ्कुर्गुरुद्वेषिणं विश्वामित्रमुपाजगाम । गुरुद्वेषितया स विश्वामित्रोऽनधिकारिणमपि तं तदभिमतं यागं कारयितुं प्रतिजज्ञे । तथानुष्ठिते च तस्मिन् यज्ञमहिम्ना त्रिशङ्कुः सदेहः स्वर्गं जगाम । स्वर्गपतिर्देवेन्द्रोऽपि द्वारदेशमागतं तम् "अयं गुरुद्वेषी"-ति बहुगर्हयन् ततोऽधः पुनरपातयत् । पतँश्च स "गुरो कौशिक !! परिरक्ष मामधः पतन्तम् ।" इत्युच्चैर्वदन् "मा पत, तत्रैव तिष्ठे"ति विश्वामित्रेण कथितो न भूमौ न स्वर्गे किन्त्वन्तराल एव तथावस्थस्तस्थाविति पौराणिकी कथात्रानुसन्धेया ।

**तृतीयेऽङ्के तृतीयश्लोके:—**

एकदा भार्गवः स्थले दाह्याभावात् स्वीयं क्रोधजम् अग्निं समुद्रे निचिक्षेप । तस्य च तदेव दाह्यं बभूव ।

उक्तञ्च यथा महाभारते—

"ततस्ते क्रोधजं तात ! और्वोऽग्निं वरुणालये ।
उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ" ॥ इति तथा—

पुरा तारकासुरपीडिताः सुराः सङ्घीभूय ब्रह्माणः शरणमुपाजग्मुः । स च, योगमास्थाय स्थितस्य हरस्य तेजःसम्भवः सेनापतिरेव तद्वधार्थे समर्थ इति तदर्थमादौ तस्य योगभङ्गः कर्तव्य इति व्यादिश्यान्तर्दधौ ।

ते च देवाः भगवन्तं कुसुमायुधमेव तत्र नियोजयामासुः । एतज्ज्ञवद् वन्हिमुखं विविक्षुः कुसुमायुधोऽपि बाणप्रक्षेपणाय हरबद्धलक्ष्य एव क्रुद्धस्य तत्रभवतो भगवतो भूतपतेर्भालवन्हिना भस्मावशेषः कृत इति च गाथाऽनुसन्धेया ।

चतुर्थेऽङ्के नवम श्लोके:—

एकदा किल नहुषपुत्रः सोमवंशीयो ययातिर्नाम राजर्षिः शुक्रकन्यां देवयानीं तत्सखीं वृषपर्वनाम्नोऽसुरराजस्य दुहितरं शर्मिष्ठाञ्च परिणिनाय । तत्र पश्चादपि परिणीतायां शर्मिष्ठायां तस्य स्नेह अतिमात्रमासीदतोऽस्या एव महानुभावः पुत्रः पूरुः पितुरनन्तरं साम्राज्यमवापेत्यैतिह्यमनुसन्धेयम् ।

सप्तमाङ्कीय षष्ठश्लोके:—

एकदा किल वामनरूपधृग् भगवान् हरिः बलिं छलयितुं त्रिपादमितां भूमिं ययाचे । दातुमङ्गीकृते तस्मिन् प्रथमपादेन भुवं द्वितीयेनान्तरिक्षमाचक्राम ।

यदुक्तं वामनपुराणे:—

क्रमत्रये तोयमवेक्ष्य दत्तं महासुरेन्द्रेण विभुर्यशस्वी ।
चक्रे ततो लंघयितुं त्रिलोकं त्रिविक्रमं रूपमनतशक्तिः ॥
कृत्वानुरूपं दितिजांश्च हत्वा प्रणम्य चर्षीन् प्रथमक्रमेण ।
महीं महीध्रैः सहितां महार्णवां जहार रत्नाकरपत्तनैर्युताम् ॥
भुवं सनाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिनन्दितं तमः ।
देवो द्वितीयेन जहार वेगाक्रमेण देवप्रियमीप्सुरीश्वरः ॥

अन्यत्रापि—

क्रमेणैकेन जगतीं जहार सचराचरम् ।
नभश्चाक्रमतस्तस्य सूर्येन्दू सव्यदक्षिणौ ॥
द्वितीयेन क्रमेणाथ स्वर्महर्जनतापसा ।

इति पौराणिककथनमनुसन्धेयम् ॥

## पात्र-परिचयः

—:❁:—

### पुरुष—पात्राणि

प्रथमाङ्के—

| | | |
|---|---|---|
| सूत्रधारः | ... | प्रधानो नटः |
| दुष्यन्तः | ... | नायकः ( हस्तिनापुरस्य नृपतिः ) |
| सूतः | ... | राज्ञः सारथिः । |
| वैखानसः | | |
| तच्छिष्यश्च | | तपस्विविशेषौ । |

द्वितीयेऽङ्के—

| | | |
|---|---|---|
| माधव्यः | ... | राज्ञो नर्मसचिवः । |
| रैवतकः | ... | दौवारिकः |
| भद्रसेनः | ... | सेनाध्यक्षः । |
| ऋषिकुमारौ | ... | |
| करभकः | ... | नगरादागतो राज्ञीनामाज्ञाहरः कश्चन दूतः । |

तृतीयेऽङ्के—

| | | |
|---|---|---|
| यजमानशिष्यः | ... | कण्वशिष्यः । |

चतुर्थेऽङ्के—

| | | |
|---|---|---|
| कण्वशिष्यः | ... | |
| हारीतः | ... | कण्वशिष्यः । |
| कण्वः | ... | ऋषिविशेषः । |
| शार्ङ्गरवशारद्वतमिश्रौ | ... | कण्वप्रधानशिष्यौ । |

पञ्चमेऽङ्के—

| | | |
|---|---|---|
| पार्वतायनः | ... | कञ्चुकी । |
| सोमरातः | ... | राज्ञ उपाध्यायः पुरोहितश्च |
| द्वारपालः | ... | |

अङ्कावतारे—

| | | |
|---|---|---|
| नागरकश्यालः | ... | नागरक्षकः । |

| | | |
|---|---|---|
| सूचकजालुकौ | ... | रक्षिणौ । |
| कुम्भीलकः | ... | धीवरः । |

षष्ठेऽङ्के—

| | | |
|---|---|---|
| मातलिः | ... | इन्द्रसारथिः । |

सप्तमेऽङ्के—

| | | |
|---|---|---|
| बालकः | ... | शकुन्तलागर्भसम्भवो दुष्यन्ततनयः। |
| मारीचः | ... | कश्यपापरनामा मारीचः । |
| गालवः | ... | अस्य शिष्यः । |

---

## स्त्री—पात्राणि

—:❀:—

प्रथमेऽङ्के—

| | | |
|---|---|---|
| शकुन्तला | ... | कण्वमहर्षेः पालिता कन्या । |
| अनसूया<br>प्रियंवदा } | ... | शकुन्तलासख्यौ । |

तृतीयेऽङ्के—

| | | |
|---|---|---|
| गौतमी | ... | कण्वस्य धर्मभगिनी । |
| तापस्यः | ... | ऋषिपत्न्यः । |

पञ्चमेऽङ्के—

| | | |
|---|---|---|
| वेत्रवती | ... | प्रतीहारी । |

षष्ठेऽङ्के—

| | | |
|---|---|---|
| सानुमती | ... | अप्सरसः । |
| परभृतिकामधुकरिके | ... | चेटीद्वयम् । |
| चतुरिका | ... | चेटी । |

सप्तमेऽङ्के—

| | | |
|---|---|---|
| तापसीद्वयम् | ... | सर्वंदमनकरक्षकम् । |
| अदितिः | ... | मारीचपत्नी । |

—०:❀:०—

# अभिज्ञान-शाकुन्तलम्

## प्रथमोऽङ्कः ।

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥१॥

शारदाम्भोजवदनं शारदेन्दुनिभप्रभम् ।
ध्यात्वा सारस्वतमिह महः किञ्चिदलौकिकम् ॥ १ ॥
नाट्यामृतरसोदन्वदूर्मिमज्जनचेतसाम् ।
अनायासेन बोधार्थं रचितेयं सुबोधिनी ॥ २ ॥

"सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥"

इत्यभियुक्त्या इह निखिले खलु जगति मन्दा अपि प्रेक्षावन्तः प्रयोजन-मन्तरेण सुखसाध्येऽपि कर्म्मणि न प्रवर्तन्त इति हि चिरन्तनी विद्वदाचारपरम्परा । तदत्र प्रयोजनाकाङ्क्षायामाह—"काव्यं सत् दृष्टादृष्टार्थं प्रीतिकीर्तिहेतुत्वात् ।" अस्यैव वृत्तौ "काव्यं सत् चारु दृष्टप्रयोजनं प्रीतिहेतुत्वात्, अदृष्टप्रयोजनं कीर्तिहेतुत्वात् ॥" अत्र श्लोकाः—

"प्रतिष्ठां काव्यबन्धस्य प्रतिष्ठां सरणिं विदुः ।
अकीर्तिवर्त्तनीं त्वेवं कुकवित्वविडम्बनाम् ॥
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्तिञ्च निरालोकनरकोद्देशदूतिकाम् ॥
तस्मात् कीर्त्तिमुपादातुमकीर्तिञ्च व्यपोहितुम् ।
काव्यालङ्कारशास्त्रार्थः प्रसाध्यः कविपुङ्गवैः ॥"

अपिच:—

"अतोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति ॥"

अन्यच्च—

'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिञ्च साधुकाव्यनिषेवणम् ॥"

तथाच—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥"

इति वामन—भोजराज-पण्डितराज-मम्मटभट्टप्रभृतिभिः काव्यकरणे प्रयोजन-प्रतिपादनात् प्रेक्षावतां तत्र प्रवृत्तिः प्रवर्तते । सुकुमारकुमारमतयो राजकुमार-प्रभृतयः पुनर्निसर्गदुर्बोधत्वाद्रसानुपलम्भतया च वेदशास्त्राण्यनादृत्य तत्र प्रवृत्ति-र्निष्फलायैवेति सततमुपकल्पयन्तस्तत्र प्रयतमाना न दृश्यन्ते । अतो वेदशास्त्र-विमुखाः स्वल्पमतयो विनेया राजकुमारादयो नूनमत्र प्रवर्तनीयाः ।

अत्रापि केचन तत्तद्रसप्रधानाभिः कविताभिश्चमत्कारकारिणीभिर्गाथादिभिश्च गोष्ठीबन्धमनुबध्नन्ति । केचिच्च ततोऽपि मन्दमतयस्तत्राप्यात्मनो धियः प्रवे-शमलभमाना नितरामलशा नाटकादिप्रसङ्गेन समयं यापयन्ति । अनन्तरोदीरिता उभयेऽप्येतेऽभिमतवस्तुपुरस्कारव्याजेनेक्षुरसजिह्विकया रसास्वादसुखमादौ मुखे दत्वा ततः कटुकौषधपानादाविव प्रवर्त्तयितव्याः ।

यदाहुः—

"स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।
प्रथमं लीढमधवः पिबन्ति कटुकौषधम् ॥"

इति प्रथमान् तान्प्रति श्रव्यरूपमेव काव्यमधिक्रियते, चरमाणान्तु:—

"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न ताः कलाः ।
नासौ नयो न तत्कर्म नाटके यन्न दृश्यते ॥"

इति भरतवचनादभिनेय एवैकाग्र्येण प्रवर्तमानानामनायासेन व्युत्पत्त्याधानमित्येवमन्यापेक्षयास्य प्रयोजने लोकोत्तरं वैलक्षण्यम् ।

अत्रच "समाप्तिकामो मङ्गलमाचरेत्" । "मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्च" इति श्रौतं कापिलञ्च वचनं प्रमाणयन् "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इति महाभाष्यवाक्यञ्चानुसरन्ननुपमप्रतिभः सकलकलाकलितमतिः कविकुलकाननकेसरी महाकविः कालिदासः शाकुन्तलं नाम रसिकजनरसायनं नाटकं निर्मित्सुर्निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामः "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ।" इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात् "रङ्गविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजयेत्" इत्यालङ्कारिकवचनप्रामाण्याच्च विश्वमङ्गलनिदानमवनिदैवताकं लक्ष्मीलाभैकहेतुकं मगणं प्राक्प्रयुञ्जानो नाटकादौ पूर्वरङ्गप्रधानाङ्गभूतामाशीरूपां नान्दीं रङ्गविघ्नोपशान्तये प्रथममवतारयति, अत्र विश्वनाथः—

"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ इति

पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गः, अभिनयशाला । तत्र भवं कर्मापि पूर्वरङ्गशब्देन व्यवह्रियते । अतः पूर्वरङ्गोनाम नाट्यादौ कर्तव्यः कर्मविशेषः । भावप्रकाशिकायामपि:—

"सभापतिः सभासभ्या गायका वादका अपि ।
नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ॥
अतो रङ्ग इति ज्ञेयः पूर्वं यत्स प्रकल्पते ।
तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥"

नान्दीच:—

प्रत्याहारगीतवाद्यादिद्वाविंशत्यङ्गेष्वन्तर्गता पूर्वरङ्गप्रधानाङ्गभूता स्तुतिः । तथा च नाट्यशास्त्रे पञ्चमाध्याये भरतः—"अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः" इत्युपक्रम्य—

"नान्दी शुष्कापकृष्टा च रङ्गद्वारं तथैव च।
चारी चैव ततः कार्या महाचारी तथैव च॥
त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि।
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ तु च॥"

अत्र विश्वनाथः—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दी तु कथ्यते॥"

प्रथमाध्याये भरतोऽपिः—

"पूर्वं कृता मया नान्दी आशीर्वचनसंयुता।
अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसम्मता॥"

तत्रैव षट्त्रिंशाध्यायेऽपिः—

"देवतासुरमानन्द्य यस्माल्लोकश्च नन्दति।
तस्मादयं प्रयोगस्तु नान्दीनामा भविष्यति॥"

सा चेयं द्वादशपदाष्टपदा वा कार्या। अत्र भरतः पञ्चमाध्यायेः—

"सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः।
नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम्॥" इति।

अत्रैव हि नाट्यप्रदीपकारः—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥"

श्लोकतुरीयभागः पदमिति पक्षे प्रथमेऽनर्घराघवीयं श्लोकद्वयमुदाहार्यम्। द्वितीये द्वादशपदपक्षे "इदं कविभ्यः" इत्युदाहार्यम्। अत्र नमोवाकमित्यत्रासमस्तरूपमेव ज्ञेयम्; एतदनङ्गीकारे नान्दीलक्षणायोगात्। केचन नवीना एतत् सूत्रधारादिक्रियमाणं मङ्गलं पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमिति वदन्ति।

यदुक्तम्:—

"यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्॥" इति।

अत्र सूत्रधारक्रियमाणे मङ्गले सर्वप्रथमम् अभिनयो नाट्यव्यापारः यस्मादवतार्यते अतो वागङ्गाभिनयात्मकमिदं रङ्गद्वारमवसेयम् । आशीर्वचनसंयुक्तेत्यादि लक्षणात्तु ग्रन्थारम्भात्प्राङ्निर्विघ्नपरिसमाप्तये कविनाऽपि क्रियते । यदीयमेव नान्दीत्वेनाभ्युपगन्तव्या तदा महाकविकालिदासादिप्रबन्धेषु "वेदान्तेषु यमाहु–" रित्यादिषु अष्टपदत्वद्वादशपदत्वान्यतराभावात् नान्दीलक्षणायोगाल्लक्षणस्याव्याप्तिरिति नेयं नान्दी किन्तु रङ्गद्वारमेव, अतोऽत्र नान्दीलक्षणागमने न दोष इति भावः ।

नन्वेवंविधस्थले नान्द्याः कविकरणपक्षे नटकर्मत्वाभावात्कथं नाटकारम्भ इति चेन्न रङ्गद्वारात्प्रथमं नान्द्या नटैरेव कर्तव्यतया महर्षेर्वचनादिति निरुक्तमहाकविप्रबन्धेषु—

"तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।"

इति वचनं कथं सङ्गँस्यत इति साहित्यसौहित्यपरिणतमतयः सहृदयाः सुधिय एत्र विभावयन्तु ।

ननु नान्दी द्वादशपदाष्टपदा वा कर्तव्येति नियम एव यदि तदाऽत्र द्वादशपदेभ्योऽधिकपदत्वात्कथं नान्दीत्वमिति चेन्न—

"नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम् ।
तां षोडशपदामेके केचिदाहुश्चतुष्पदाम् ।।"

इत्यनुशासनाच्चतुष्पदैवेयमिति केचित् । अपरे चात्र पदनियममेव न स्वीकुर्वन्तिः—

"देवतादेर्नमस्कारो गुरूणामपि च स्तुतिः ।
गोब्राह्मणनृपादीनामाशीर्नान्दीति कोहलः ।।" इति वचनात् ।

कोहलो नाम अतिप्राचीनः कश्चन नाट्याचार्यः ।

वस्तुतस्तु पदसमुदायरूपवाक्येऽपि पदप्रयोगव्यपदेशादत्रत्या नान्दी चतुरस्रतालानुसारिणी नाट्यशास्त्रकार भरततट्टीकाकाराभिनवगुप्तपादाचार्य्यसम्मतावान्तरवाक्यरूपाष्टपदैव । सेयं नान्दी चतुष्प्रकारिका । तथा च दशरूपकम्—

"नमस्कृतिर्माङ्गलिकी आशीः पत्रावली तथा ।
नान्दी चतुर्धा निर्दिष्टा नाटकादिषु धीमता ।।"

तथा च—

"यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नान्दी पत्त्रावली तु सा ॥"

अत्र श्लेषेण नाट्यबीजोपन्यासादस्या नाट्यदर्पणे पत्त्रावलीति विशेष-सङ्केतोऽभिहितः ।

या सृष्टिरिति—या मूर्तिः स्रष्टुः जगन्निर्मातुः परब्रह्मणः, आद्या प्रथमा सृष्टिः प्राथमिकी निर्मितिः, जलमयीत्यर्थः, तथा च मनुः—

"सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥" इति ।

या मूर्तिः, विधिना = वेदोदितेन विधानेन हुतमात्मनि देवतामुद्दिश्य प्रदत्तं, हविराज्यादिकं हवनीयद्रव्यजातं, वहति = उद्देश्यभूतां देवतां प्रापयति, या च मूर्त्तिः, होत्री = हवनफलस्य स्वर्गादेः आत्मनीच्छया द्रव्यत्यागकर्त्री यजमानरूपा, ये च द्वे मूर्ती कालं नक्तन्दिनरूपम् अहोरात्रस्य तिथेश्चारम्भकत्वात्सौरं चान्द्रञ्च विधत्तः कुरुतः, सूर्याचन्द्ररूप इति भावः, या च मूर्तिः, श्रुतेः श्रवणेन्द्रियस्य विषयो गोचरः शब्द एव गुणो यस्याः सा तथाभूता सती विश्वं जगद् व्याप्य स्थिता आकाशलक्षणेत्यर्थः, यां मूर्तिं सर्वेषां बीजानां धान्यादिशस्यानां प्रकृतिः मूलकारण-मित्याहुः विद्वांस इति शेषः, पृथिवीरूपेत्यर्थः । यया च मूर्त्या प्राणवायुलक्षणया, प्राणिनः जीवाः प्राणवन्तो जीवनवन्तः, ताभिः पूर्वोक्ताभिः प्रत्यक्षाभिः बहिरिन्द्रिय-जन्यज्ञानविषयस्वस्वगुणवतीभिः प्रत्यक्षवस्तुस्पष्टमनुभूयमानाभिरितिभावः, अष्टाभिः तनुभिः = मूर्तिभिः, अत्र यादवः—

"पृथिवी सलिलं तेजो वायुराकाशमेव च ।
सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः ॥" इति ।

प्रसन्नः = भक्तजनेषु कृतप्रसादः, ईष्ट इति ईशः = अणिमाद्यष्टविधैश्वर्यसमन्वितः शिवः वः युष्मान् विक्रमादित्यप्रभृतिनृपतीन् विद्वन्मण्डलींश्च अवतु रक्षतु, स्रग्धरा वृत्तम्—तल्लक्षणं यथाः—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥१॥

( नान्द्यन्ते (१) सूत्रधारः (२) )

(१) कृतपूर्वरङ्गे प्रथमप्रविष्टे सूत्रधारे नान्दीं पठित्वावशिष्टञ्च पूर्वरङ्गाङ्गकर्मकलापं सम्पाद्य विनिर्गते तत्सदृशोऽन्यः सूत्रधारः प्रविश्य प्रस्तावयतीत्यर्थः । तदुक्तं दशरूपके:—

"पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥" इति ।

ननु नान्द्यन्ते सूत्रधार इत्यसङ्गतं कथं प्रयुज्यते—"सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः" इत्युक्तत्वात्सूत्रधारपठनीया नान्दी, नान्दीपाठानन्तरञ्च सूत्रधारप्रवेश इति परस्परविरोधात् । अत्रोच्यते—नान्दीनामा सूत्रारस्तदन्ते तन्निष्क्रान्तौ सूत्रधार इव अपरः सूत्रधारः स्थापकः प्रविशतीत्यर्थः ।

उक्तञ्च—श्रीमता भरताचार्य्येण—

"नान्दीं प्रयुज्य निष्क्रामेत्सूत्रधारः सहानुगः ।
स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ॥
पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥"

उक्तञ्च शातकर्णेनापि—

"सूत्रधारगुणाकारः स्थापकः प्रविशेत्ततः ।
उपचारेण सोऽप्यत्र सूत्रधारोऽभिधीयते ॥" इति ।

यद्वा नान्दी अन्येन पठिता तदन्ते सूत्रधारः प्रविश्य वक्ष्यमाणं वदति । तथाच सङ्गीतकल्पतरुः—

"सूत्रधारः पठेन्नान्दीमन्यो वा रङ्गभूमिगः ।
मङ्गलं सूचयित्वा तु ललितेन शुभान्विताम् ॥" इति ।

केचित्तु—पटान्तरित एव नान्दीं पठित्वा सूत्रधारः प्रविशति वदति चेत्याहुः । इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः ।

(२) सूत्रं धारयति प्रयोगानुष्ठानं प्रवर्तयतीति सूत्रधारः ।

यदुक्तम्:—

"नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥"

अलमतिविस्तरेण (१)

मन्दारमरन्देऽपिः—

"यः सूत्रयेन्नायकस्य वस्तुनोऽपि गुणान् कवेः।
रङ्गप्रसाधनकरः सूत्रधारः प्रकीर्तितः॥"

भरताचार्य्यास्तुः—

"चतुरातोद्यकुशलः शास्त्रकर्मसु शिक्षितः।
नानापाखण्डकार्यज्ञो नीतिशास्त्रार्थतत्त्ववित्॥
वेश्योपचारनिपुणः कामशास्त्रविचक्षणः।
नानागीतप्रचारज्ञो रसभावविशारदः॥
नाट्यप्रयोगकुशलो नानाशिल्पसमन्वितः।
पादच्छन्दो विधानज्ञः सर्वशास्त्रविचक्षणः॥
ग्रहनक्षत्रतत्त्वज्ञो देहव्यापारपण्डितः।
पृथिवीद्वीपवर्षाणां पर्वतानां जनस्य च॥
प्रमाणचरितज्ञश्च राजवंशप्रसूतिवान्।
श्रोता शास्त्रार्थकाराणां श्रुत्वा चैवावधारकः॥
अवधार्य प्रवक्ता च शक्तश्चैवोपदर्शने।
एवंगुणस्तथाचार्य्यः सूत्रधारो विधीयते॥"

(१) काव्यार्थस्य शीघ्रं कर्तव्यतया पूर्वरङ्गाङ्गानामतिभूयस्त्वात् सकलपूर्वरङ्गस्य निर्वाहयितुमशक्यत्वाद्वाचामतिप्रसङ्गो माभूदिति वाग्बाहुल्यं निष्प्रयोजनम्। तथा चेत्तत्रानुत्साहेन अभिनवाभिनयाभिदर्शनमात्रपर्युत्सुकानां सामाजिकानां रसभङ्गप्रसङ्गो भवेत्।

तथाचः—

"यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये॥"

इत्युक्तत्वादष्टपदात्मकाभीष्टदेवतास्तुतिरूपनान्दीप्रयोगेणैव विधिनिर्वाहाद्वाग्विस्तृतिर्निष्फलायैवेति भावः। तृतीयान्तपदसमभिव्याहृतालंशब्दस्य निष्फलाभिधायकत्वम्,—यदाहुर्निष्फलपर्याये विश्वः—

"अलं भूषणपर्याप्तिनिष्फलेषु निरर्थके।" इति।

( नेपथ्याभिमुखमवलोक्य । ) आर्य्ये ! यदि नेपथ्यविधानमवसितं तदि-हागम्यताम् ।

नटी ( प्रविश्य ) । अज्ज ! इअह्मि, आणवेदु अज्जो को णिओओ अणु-चिट्ठीअदुत्ति ❀

सूत्र -आर्य्ये ! इयं हि रसभावविशेषदीक्षागुरोर्विक्रमादित्यस्याभिरूप-भूयिष्ठा परिषत्, अस्याञ्च कालिदासग्रथितवस्तुना नवेनाभिज्ञान-शाकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः, तत् प्रतिपात्रमा-धीयतां यत्नः ।

नटी—सुविहिदप्पओअदाए अज्जस्स ण किम्पि परिहाइस्सदि† ।

( ❀ ) आर्य इयमस्मि आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति ।

( † ) सुविहितप्रयोगतया आर्य्यस्य न किमपि परिहास्यते । सुविहितेति सुशिक्षितप्रयोगतयेत्यर्थः ।

( १ ) नेपथ्यं वेशरचनास्थानम् । रङ्गस्थलस्य पश्चाद् यवनिकान्तरितो वेश-परिवृत्तियोग्यः कुशीलवकुटुम्बावस्थानदेशः । तथा च त्रिपुरारिः—

"कुशीलवकुटुम्बस्य स्थली नेपथ्यमिष्यते ।" इति ।

नेतुः पथ्यं नेपथ्यं भूमिकान्तरग्रहणयोग्यं स्थानमित्यर्थः । नेपथ्याभिमुखाव-लोकनं तत्रस्थार्यासम्बोधनार्थं, यस्यां दिशि सम्बोधनीयस्तिष्ठति तद्दिगुन्मुख एव जनः सम्बोधयतीतिलोकव्यवहारः ।

( २ ) "वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्पर"मिति वचनादार्य इत्युक्तिः ।

( ३ ) वेशरचनेत्यर्थः ।

( ४ ) इयमिति । रसाश्च भावाश्च तेषां विशेषास्तेषु दीक्षागुरोः निष्णातस्य अभिरूपभूयिष्ठा पण्डितबहुला बहुशब्दादिष्ठनि बहोर्लोपो भूच बहोरित्यनेन भूरादेशे इष्ठस्ययिट्चेति यिडागमः । अभिरूपो बुधे रम्ये इति मेदिनी ।

( ५ ) शकुन्तैः पक्षिभिर्लालिता शकुन्तला । तथा च महाभारतम्:—

"निर्जनेतु वने यस्मात् शकुन्तैः परिरक्षिता ।
शकुन्तलेति नामास्याः कृतञ्चापि ततो मया ॥"

अत्रैव विश्वनाथोऽपि:—

"नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ॥" इत्युक्तत्वात्—

शकुन्तलाया इदं शाकुन्तलं, अभिज्ञायत इत्यभिज्ञानम्, अभिज्ञानं शाकुन्तलं यत्र तदभिज्ञानशाकुन्तलम् ।

सूत्र—( सस्मितम् )। आर्य्ये ! कथयामि ते भूतार्थम्¹।

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ २ ॥

नटी—( सविनयम् )। एवण्णेदं। अणन्तरकरणिज्जं दाणिं अज्जो आणवेदु*।

सूत्र—आर्य्ये ! किमन्यदस्याः परिषदः श्रुतिप्रमोदहेतोर्गीतात् करणीयमस्ति ?

नटी—अध कदमं उण उदुं अधिकरिअ गाइस्सम्†।

सूत्र—आर्य्ये ! नन्विममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम्। सम्प्रति हि:—

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ३ ॥

---

* एवमिदम्। अनन्तरकरणीयमिदानीमार्य्य आज्ञापयतु।

† अथ कतमं पुनर्ऋतुम् अधिकृत्य गास्यामि।

ऋतुङ्क्षिदुपादाय भारतीं वृत्तिमाश्रित इत्युक्तेरिति भावः।

---

( १ ) भूतार्थमिति। यथार्थमित्यर्थः।

( २ ) आपरितोषादिति। विदुषां पण्डितानामापरितोषात्परितोषपर्यन्तं, विद्वांसो यावत् सन्तुष्टा न भविष्यन्ति तावदित्यर्थः, प्रयोगविज्ञानं प्रकृतनाटकप्रयोगज्ञानं साधु सम्यङ् न मन्ये = न जानामि, शिक्षितानां बलवदपि अस्मिन्नाटके सिद्धहस्तोऽहं, सम्यगभिनेतुं शक्नोमीति सुदृढं कृतनिश्चयमपि चेतो हृदयम् आत्मनि अप्रत्ययं प्रतीत्यभावम् अविश्वासमित्यर्थः उत्पादयति। सभासदां सन्तोषेणैवास्य प्रयोगस्योत्कृष्टत्वमिति भावः। इदं प्ररोचनानामकं प्रस्तावनाङ्गम्। तथा च—मन्दारमरन्दे:—

"सिद्धवद्भाविनोऽर्थस्य सूचना स्यात् प्ररोचनम्।

( ३ ) सुभगेति। शोभनः सलिले जलेऽवगाहः स्नानं येषु ते, पाटलानां पुष्पविशेषाणां संसर्गेण सम्बन्धेन सुरभयः सुगन्धा वनवाता वनवायवो येषु ते, प्रकृष्टा छाया यस्मिन् प्रदेशे प्रच्छायं, प्रच्छाये सुलभा निद्रा येषु ते, प्रचण्डातपत्वादिति भावः। एतादृशाः दिवसाः परिणामरमणीयाः सन्तीति शेषः।

नटी—तह॥ (इति गायति)

ईसीसिचुम्बिआइं भमरेहिं सुउमारकेसरसिहाइं।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं † ॥४॥

सूत्र—आर्य्ये! साधु गीतम्। अहो रागापहृतचित्तवृत्तिरालिखित इव विभाति सर्व्वतो रङ्गः। तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः।

नटी—णं पढमं ज्जेव्व अज्जेण आणत्तं अहिण्णाणसउन्तलं णाम अउव्वं णाडअं अहिणीअदुत्ति‡।

सूत्र—आर्य्ये! सम्यगनुबोधितोऽस्मि। अस्मिन् क्षणे खलु विस्मृतं मयैतत्। कुतः—

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्यन्तः सारङ्गेणाति हंसा ॥ ५ ॥

इति निष्क्रान्तौ।

---

॥ तथा।

† ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेशरशिखानि।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि॥

‡ ननु प्रथममेवार्य्येणाऽऽज्ञप्तमभिज्ञानशाकुन्तलन्नामापूर्व्वन्नाटकमभिनीयतामिति।

---

(४) दयमानाः सदयाः प्रमदाः प्रकृष्टो मदो रूपसौभाग्यजनितो विकारो यासां ताः कामिन्यः, सुकुमारा अतिकोमलाः केसराणां किञ्जल्कानां शिखा अग्रभागा येषान्तानि, अतिकोमलत्वात्तथात्वेन ग्रहणात् सदया इत्युक्तिः। भ्रमरैः कोमलकिञ्जल्कत्वादीषदीषत् चुम्बितानि स्पृष्टानि सौरभातिशयजनितेन आनन्देन प्रतिक्षणं भ्रमरस्पृष्टाग्रभागानीत्यर्थः, शिरीषकुसुमानि शिरीषपुष्पाणि अवतंसयन्ति कर्णभूषणीकुर्वन्ति।

(१) आलिखित इव। निश्चलत्वादितिभावः।

(५) तवेति। अतिरंहसाऽत्यन्तवेगवता सारङ्गेण मृगविशेषेण एष राजा दुष्यन्त इव मनोहारिणा तव गीतरागेण प्रसभं बलात् हृतोऽस्मि अपहृतमनोवृत्तिरस्मीत्यर्थः।

प्रस्तावना[1]।

( ततः प्रविशति रथारूढः सशरचापहस्तो मृगमनुसरन् राजा सूतश्च । )

सूतः—( राजानं मृगञ्चावलोक्य ) । आयुष्मन्[2] !

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम् ॥ ६ ॥

---

( १ ) प्रस्तावयति प्रस्तुतविषयविशेषमुत्थापयति या सा प्रस्तावना । सूत्रधारेण नट्यादिभिः सह प्रकृताभिनेयकथाप्रसङ्गार्थं कथनीया वाक्यावलीत्यर्थः । तथाच विश्वनाथः—

"नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥ इति ॥

सा चेयमुद्घातकादिपञ्चविधभेदेभ्यः प्रयोगातिशयरूपा, तथा च दशरूपके:—

"एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ॥
इत्युक्त्या एष राजेत्यादिना पात्रस्य दुष्यन्तस्य प्रवेशात् ।

विश्वनाथस्तु अवलगिताख्यां प्रस्तावनां मन्यमानो यत्रैकत्र समावेशात्कार्यं मन्यत्प्रसाध्यते । प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितम्बुधैरित्यत्रोदाजहार ।

शकुन्तलोद्वाहरूपे मुख्यफले इदं दुष्यन्तस्य मृगानुसरणं बीजम् । अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति । फलस्य प्रथमो हेतुर्बीजन्तदभिधीयत इत्युक्त्या स्तोकोद्दिष्टस्य मृगयागमनस्य कण्वाश्रमगमनेन विसर्पणात् । अस्य बीजस्य वर्ण्यमानारम्भस्य च सम्बन्धादयं सम्बन्धो मुखसन्धिः, तथाचोक्तम्—

यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम् । इति ।

(२) आयुरस्यास्तीति तस्य सम्बोधने आयुष्मन् । "आयुष्मन् रथिनं सूतः" इति विश्वनाथोक्तेः ।

(६) कृष्णसारे मृगविशेषे अधिज्यं कार्मुकं यस्य तस्मिन् त्वयि चक्षुः ददत् अहं मृगमनुसरतीति तं मृगानुसारिणं धृतमृगरूपं यज्ञमनुसरन्तं साक्षात् पिनाकिनं पिनाकधनुर्धारिणं महादेवं पश्यामि । अत्रत्यमैतिह्यं यथा:—

राजा—सूत! दूरममुना सारङ्गेण वयमाकृष्टाः। सोऽयमिदानीमपि।

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्व्वकायम्।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥७।

(सविस्मयम्) कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तोऽयं मृगः।

सूतः—उद्घातिनी भूमिरिति रश्मिसंयमनात् रथस्य मन्दीभूतो वेगः, तेनैष मृगो विप्रकृष्टः संवृत्तः। सम्प्रति हि समदेशवर्ती न ते दुरासदो भविष्यति।

राजा—तेन हि मुच्यन्तामभीषवः।

सूतः—यथाज्ञापयत्यायुष्मान्। (इति भूयो रथवेगं रूपयित्वा) आयुष्मन्! पश्य पश्य। एते हि—

---

पुरा किल दक्षयज्ञं श्रुत्वा तत्र गता पार्वती निजपतिनिन्दामाकर्ण्यात्मानमग्निसाच्चकार। भूतभावनो भगवान् महेश्वरस्तच्छ्रुत्वा स्वं धनुः पिनाकमादाय तत्राजगाम। क्रतुश्च तमायान्तमवलोक्य मृगरूपं धृत्वा पलायितुमारेभे सोऽपि तमनुजगामेति कथानुसन्धेया।

(७) ग्रीवेति। ग्रीवायाः कन्धरस्य यो भङ्गः परिवर्तनमित्यर्थस्तेनाऽभिरामं सुन्दरं, "यथा तथा" स्यन्दने रथे मुहुर्वारम्वारं दत्ता दृष्टिर्येन तथाभूतः। शरस्य दुष्यन्तनिक्षिप्तबाणस्य पतनभयात् स्वशरीरे पतनभीतेः अपरम् अर्द्ध पश्चार्द्धं तेन देहस्य पश्चाद्भागेनेत्यर्थः। पूर्वकायं देहपूर्वार्द्धं भूयसा अधिकेन प्रविष्टः, श्रमेण शीघ्रगमनजनितायासेन विवृतं व्यात्तं यन्मुखं तस्माद् भ्रंशिभिः पतद्भिः अर्द्धावलीढैः अर्द्धभक्षितैः शष्पैर्बालतृणैः कीर्णं व्याप्तं वर्त्म पन्थाः येन सः तथाभूतः सन्, उदग्रं उन्नतं प्लुतं यस्य तस्य भावस्तत्वं, तस्मात्, वियति आकाशे बहुतरं, उर्व्यां स्तोकमल्पं प्रयाति गच्छति।

(१) उद्घातिनीति। उद्घातयति पादस्खलनं जनयति या उद्घातिनी पादस्खलनयोग्येत्यर्थः, रश्मिसंयमनाद्रज्जुसंकोचात्। विप्रकृष्टो दूरः। उद्घातस्तु पुमान् पादस्खलने समुपक्रमे। उत्तुङ्गे मुद्गरेऽपि स्यादिति मेदिनी।

(२) अभीषवः रश्मयः। 'अभीषुः प्रग्रहे रश्मौ" इत्यमरः।

मुक्तेषु रश्मिषु निरायतपूर्वकाया
स्वेषामपि प्रसरतां रजसामलङ्घ्याः ।
निष्कम्पचामरशिखाश्च्युतकर्णभङ्गाः
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते ॥८॥

राजा—सहर्षम् । नूनमतीत्य हरिणं हरयो वर्त्तन्ते । यतः—

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो—
र्न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात् ॥९॥

सूतः—पश्यैनं व्यापाद्यमानम्[२] ।

( राजा शरसन्धानं नाटयति । )

नेपथ्ये—भो भो राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

---

(८) मुक्तेष्विति । रश्मिषु रज्जुषु मुक्तेषु निरायतपूर्व्वकायाः नितरामायतः पूर्व्वकायो येषान्ते अतिदीर्घपूर्व्वं शरीरा इत्यर्थः । प्रसरतां गच्छतां स्वखुरोत्पन्नानां रजसां धूलीनां अलङ्घ्याः अनुल्लङ्घनीयाः, तथा निष्कम्पा निश्चलाश्चामरसदृशाः शिखा येषान्ते तथाभूताः, च्युतो नष्टः कर्णस्य भङ्गो येषान्ते निश्चलोर्ध्वकर्णा इत्यर्थः ते तव वाजिनोऽश्वा वर्त्मनि मार्गे धावन्ति, तरन्ति प्लवन्ते नु सम्भावनायाम् । मृगजवाक्षमयेव रथ्या इति पाठान्तरे तु मृगस्य जवो वेगस्तस्याऽक्षमया इव अमी रथ्या वाहा अश्वा इत्यर्थः । धावन्ति गच्छन्तीत्यर्थः ।

(१) हरिणं मृगं, हरयो वाजिनः ।

(९) रथवेगातिशयमाह—यदालोक इति—यद् वस्तु आलोके प्रथमावलोकने सूक्ष्मं तद् वस्तु रथजवात् रथवेगात् सहसा तत्क्षणं विपुलतां बृहदाकारत्वं व्रजति प्राप्नोति । यद् वस्तु अतिदूरतया अर्धे अर्द्धभागे विच्छिन्नं खण्डितं "दृश्यते" तदपि रथजवात् कृतसन्धानमिव कृतसंयोगमिव भवति । यच्च प्रकृत्या स्वभावेनापि वक्रं तिरश्चीनं तदपि समा रेखा यस्य तादृशं भवति । तथा किञ्चिदपि वस्तु क्षणमपि स्वल्पकालमपि मे नयनयोः न दूरे न चापि पार्श्वे समीपे वर्तत इति शेषः । रथवेगस्यायं महिमेत्यर्थः ।

(२) व्यापाद्यमानं हन्यमानमित्यर्थः ।

सूतः—( आकर्ण्य अवलोक्य च ) आयुष्मन् ! अस्य खलु ते बाणपातपथवर्त्तिनः कृष्णसारस्यान्तरायौ तपस्विनौ संवृत्तौ ।

राजा—( ससम्भ्रमम् ) गृह्यन्तामभीषवः ।

सूतः—यथाज्ञापयत्यायुष्मान्, ( इति तथा करोति । )

( ततः प्रविशति सशिष्यो वैखानसः । )

वैखा—( हस्तमुद्यम्य ) । भो भो राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः ।
क्व बत हरिणकानां जीवितञ्चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥१०॥
तदाशु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि ॥११॥

(१) वैखानसः—तापसः । "वैखानसो वनेवासी वानप्रस्थश्च तापसः" इति वैजयन्ती ।

(१०) न खल्विति–तूलराशौ कार्पासस्तोमे अग्निरिव मृदुनि अतिकोमले अस्मिन् मृगशरीरे अयं बाणः न खलु नखलु सन्निपात्यः, नैव निक्षेप्यः, अत्रहेतुमुपन्यस्यति बतेति खेदे अतिलोलम् अतिचञ्चलं हरिणकानां क्षुद्रमृगाणां जीवितं क्व निशितः तीक्ष्णः निपातः पतनं येषां ते तथाभूता तथा वज्रस्य इव सारो बलं येषान्ते अतिकठिना इत्यर्थः, ते तव शरा बाणाः क्व, मशकविनाशाय शतघ्नीप्रयोगवदतिक्षुद्रमृगवधाय तव दारुणशरप्रहारो नितरामन्याय इत्यर्थः ।

(११) तदिति । तत्तस्मात्कारणात् आशु शीघ्रं कृतं सन्धानं यस्य एवंभूतं धनुषि स्थापितं सायकं शरं प्रतिसंहर प्रत्यावृत्य स्वं स्थानं प्रापयेत्यर्थः । वः युष्माकं शस्त्रं आर्त्तस्य दुःखितस्य त्राणाय रक्षणाय वर्तत इति शेषः, अनागसि अनपराधवति आगोऽपराधो मन्तुश्चेत्यमरः, प्रहर्त्तुं प्रहारं कर्त्तुं नेत्यर्थः ।

वैखा—सहर्षम् । उचितमेवैतत् पुरुवंशप्रभवस्य नरेन्द्रदीपस्य भवतः ।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥१२॥

इतरोऽपि—( हस्तमुद्यम्य ) सर्व्वथा चक्रवर्त्तिनं पुत्रमाप्नुहि ।

राजा—( सप्रणामम् । ) प्रतिगृहीतं ब्राह्मणवचः ।

वैखा–राजन् ! समिदाहरणाय प्रस्थिता वयम् । एष चास्मद्गुरोः कण्वस्य कुलपतेः सोऽधिदैवत एव शकुन्तलया अनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्य्यातिपातस्तदत्र प्रविश्य प्रतिगृह्यतामतिथिसत्कारः । अपि च—

धर्म्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥१३॥

राजा—अपि सन्निहितोऽत्र कुलपतिः ?

वैखा—इदानीमेव दुहितरं शकुन्तलामतिथिसत्कारायादिश्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

---

(१२) जन्मेति–पुरोः राज्ञः वंशे यस्य जन्म, तस्य तव भवतः इदं युक्तरूपं उचितं रूपं उक्तवंशानुरूपमित्यर्थः, एवं गुणोपेतं मार्जवादिगुणविशिष्टं चक्रवर्तिनं सार्वभौमं पुत्रमाप्नुहि प्राप्नुहि ॥

( १ ) कुलपतेरिति ।

"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः ॥"इति

( २ ) शकुन्तलया साधिदैवत एवाधिदेवतासहित एव ।

( ३ ) अनुमालिनीतीरं मालिनीतीरस्य समीपमित्यर्थः ।

(१३) धर्म्या इति । तप एव धनं येषान्तेषाम्मुनीनामित्यर्थः । प्रतिहता विनाशं गता विघ्ना यासां तास्तथाभूता धर्म्याः क्रिया यागादीन् समवलोक्य दृष्ट्वा मौर्वीघातोत्पन्नं मांसकाठिन्यमेवाङ्कश्चिह्नं यस्यैतादृशो मे मम भुजः कियद् रक्षति इति ज्ञास्यसि अनुभविष्यसीत्यर्थः ।

( ४ ) अपि—प्रश्ने ।

( ५ ) प्रतिकूलमिति । अस्याः शकुन्तलायाः प्रतिकूलमनिष्टं दैवम्भाग्यं शमयितुं नाशयितुमित्यर्थः ।

राजा—भवतु तामेव द्रक्ष्यामि। सा खलु विदितभक्तिर्मां महर्षये निवेदयिष्यति।

वैखा—साधयामस्तावत् (इति सशिष्यो निष्क्रान्तः)

राजा—सूत नोदयाश्वान् पुण्याश्रमदर्शनेनात्मानं पुनीमहे।

सूतः—यदाज्ञापयत्यायुष्मान्। (इति भूयो रथवेगं निरूपयति)

राजा—(समन्तादवलोक्य) सूत! अकथितोऽपि ज्ञायत एवायमाभोगस्तपोवनस्य।

सूतः—कथमिव।

राजा—किं न पश्यति भवान्? इह हि—

नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिस्यन्दरेखाङ्किताः॥१४॥

अपिच:—

कुल्याम्भोभिः प्रसृतिचपलैः शाखिनो धौतमूलाः
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन।

---

(१) साधयामः गच्छाम इत्यर्थः। "प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यते" इति दर्पणवचनात्।

(२) प्रेरय, चालयेति भावः।

(३) आभोगः—आसमन्ताद् भुज्यत इति आभोगः पूर्णता, विस्तार इत्यर्थः।

(१४) नीवारा इति—शुकानां पक्षिविशेषाणां कोटराणि तेषु ये अर्भकाः शिशवः तेषाम्मुखानि तेभ्यः भ्रष्टा नीवाराः तृणधान्यानि, "तृणधान्यानि नीवाराः" इत्यमरः, तरूणाम् अधः दृश्यन्ते, क्वचिदिङ्गुदीनां वृक्षविशेषाणां फलानि भिन्दन्तीति तथाभूता अतएव प्रस्निग्धाः चिक्कणाः उपला अश्मानः सूच्यन्ते लक्ष्यन्ते, क्वचिच्च वल्कलानां वृक्षत्वचां शिखाभ्यः निस्यन्दस्य प्रस्रवस्य या रेखास्ताभिरङ्कितास्तोयाधारपथाश्च जलाधारमार्गाश्च दृश्यन्ते, विश्वासानामुपगमात् प्राप्तेरभिन्ना अस्खलिता गतिः सञ्चारो येषां तथाभूताः मृगाः शब्दं सहन्ते शब्दं श्रुत्वा न पलायन्ते, इति नूनमयमेवाश्रम इत्यर्थः।

(१५) कुल्याम्भोभिरिति—प्रसृत्या प्रसरणेन वायुनेत्यर्थः, चपलैः कुल्यानां

एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥१५॥

सूतः—सर्वमुपपन्नम्[1]

राजा—( स्तोकमन्तरं गत्वा ) [2]आश्रमोपरोधो माभूत्, तदिहैव रथं स्थापय, यावदवतरामि।

सूतः—धृताः प्रग्रहाः[3] अवतरत्वायुष्मान्।

राजा—( अवतीर्य्य आत्मानमवलोक्य च ) सूत ! विनीतवेशेन[4] प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद् गृह्यन्तामाभरणानि धनुश्च ( इति सूतस्यार्पयति )।

राजा—यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्तिष्ये तावदार्द्रपृष्ठाः[5] क्रियन्तां वाजिनः।

सूतः—यथाज्ञापयति आयुष्मान् ( इति निष्क्रान्तः )

राजा—( परिक्रम्योवलोक्य च ) इदमाश्रमपदं तावत् प्रविशामि ( प्रविश्य दक्षिणेन प्रवेष्टकेन [6]निमित्तं सूचयित्वा ) अये !

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।

---

कृत्रिमनदीनामम्भोभिर्जलैः शाखिनः तरवः धौतं मूलं येषान्ते धौतमूलाः, किसलयानां पल्लवानां रुचां कान्तीनां रागः रक्तिमा आज्यस्य हवनीयस्य धूमस्य उद्गमेन धूमसङ्गेनेत्यर्थः, भिन्नः विपरीतः संवृत्तः, एते च पुरोदृश्यमाना हरिणशिशवः मृगपोताः नष्टाशङ्काः शङ्कारहिताः सन्तः छिन्नाः खण्डिताः दर्भाणाम् अङ्कुरा अग्रभागा यस्यां सा तस्याम् उपवनभुवि अर्वाक् समीपे मन्दमन्दं चरन्ति, हिंसाभावेन निर्भया भूत्वा यथेच्छं तृणानि चरन्त इतस्ततः परिभ्रमन्तीत्यर्थः।

(१) युक्तियुक्तं, यथार्थमभिहितमित्यर्थः।

(२) आश्रमस्य उपरोध आश्रमोपरोधः आश्रमवासिनां बाधेत्यर्थः।

(३) प्रग्रहाः रश्मयः, ( लगाम इति भाषायाम् )

(४) अनुद्धतवेशेनेत्यर्थः।

(५) गमनश्रमजन्यग्रीष्मापनयनाय सलिलविप्रुषैरार्द्रं पृष्ठं येषां ते तथाभूताः।

(६) दक्षिणभुजेनेत्यर्थः। "भुजबाहू प्रवेष्टोदोः" इत्यमरः। निमित्तं स्फुरणरूपं स्त्रीलाभसूचकमित्यर्थः। "वामेतरभुजस्पन्दो वरस्त्रीलाभसूचकः" इत्युक्तेः।

(१६) शान्तमिति, इदं पुरोदृश्यमानम् आश्रमपदं तपोवनस्थानं शान्तं शान्तिरसस्यैवानुकूलम्, मे मम बाहुः दक्षिणः भुजः स्फुरति, इह तपस्विजननिवास-

अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥१६॥

( नेपथ्ये ) इदो इदो पिअसहीओ (*)

राजा—( कर्णं दत्वा ) अये दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते यावदत्र गच्छामि। ( परिक्रम्यावलोक्य च ) अये एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः[2] सेचनघटैर्बालपादपेभ्यः पयोदातुमित एवाभिवर्तन्ते। ( निपुणं निरूप्य ) अहो मधुरमासां दर्शनम्।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥१७॥

यावदेताश्छायामिमामाश्रित्य प्रतिपालयामि। ( इति विलोकयन् स्थितः )

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला )

शकु—इदो इदो सहीओ (†)।

एका—हला सउन्तले! तत्तो वि तादकण्णस्स अस्समरुक्खआ पिअदरा त्ति तक्केमि, [3]जेण णोमालिआकुसुमपरिपेलवा वि तुमं एदाणं [4]आलवालपरिऊरणे णिउत्ता (‡)।

---

(*) इत इतः प्रियसख्यौ[1]। (†) इत इतः सख्यौ।

(‡) अयि शकुन्तले! त्वत्तोऽपि तातकण्वस्याश्रमवृक्षाः प्रियतरा इति तर्कयामि येन नवमालिकाकुसुमपरिपेलवापि त्वम् एतेषामालवालपरिपूरणे नियुक्ता। परिपेलवा मृदुलेत्यर्थः।

---

भूते शमप्रधाने आश्रमे अस्य बाहुस्फुरणस्य फलं स्त्रीरत्नलाभरूपं कुतः, सर्वथैवेदमसम्भवमित्यर्थः। अथवा-भवितव्यानाम् अवश्यम्भाविभावानां द्वाराणि लाभसूचका उपायाः "द्वारं पुनर्निर्गमनेऽभ्युपाये" इति विश्वः। सर्वत्र प्रदेशे भवन्ति।

(१) अनुसूयाप्रियंवदे अस्यामस्यान्दिशि आगच्छतमित्यर्थः।

(२) स्वशरीरपरिमाणानुकूलैः।

(१७) शुद्धान्तेति–इदं सम्मुखस्थितं परमसुन्दरं शुद्धान्तेषु अन्तःपुरेषु दुर्लभं दुष्प्रापं वपुः शरीरम् आश्रमवासिनः तपोवननिवासिनः आरण्यकस्येत्यर्थः, जनस्य मुनिकन्यकालोकस्य यदि भवेत् तदा उद्यानलता बहुप्रयत्नसंवर्द्धिता उपवनवल्लयो वनलताभिः अयत्नसंवर्द्धिताभिरित्यर्थः गुणैः सौन्दर्यादिभिः दूरीकृताः पराजिताः खलु।

३. नवमालिकायाः कुसुमानीव अतिकोमलेत्यर्थः।

४. तरुमूले जलरोधनार्थं कृतं यत् मृद्वेष्टनं तस्य परिपूरणे जलेन परिपूरण इत्यर्थः। तथाच—

"आलवालं विदुर्धाराधारणं द्रवतोऽम्भसः॥" इति।

शकु—हला अणसूए ! ण केवलं तादस्स णिओओ मम वि अत्थि सहोअरसिणेहो एदेसु*। ( इति वृक्षसेचनं नाट्यति )।

द्वितीया—सहि सउन्तले ! उदअं लम्भिदा एदे गिह्मआलकुसुमदाइणो अस्समरुक्खआ। दाणिं अदिक्कन्तकुसुमसमये वि रुक्खके सिञ्चह्म, तेण अणहिसन्धिगुरुओ[1] धम्मो भविस्सदि†।

शकु—हला पिअम्वदे ! रमणिज्जं मन्तेसि‡। ( इति भूयो वृक्षसेचनं नाट्यति )।

राजा—( निर्व्वर्ण्य आत्मगतम्[2]। ) कथमियं सा कण्वदुहिता शकुन्तला ( सविस्मयम् )। अहो ! [3]असाधुदर्शी खलु भगवान् कण्वः। य इमामाश्रमधर्मे नियुङ्क्ते—

इदं किलाव्याजमनोहरं वपुस्तपःक्लमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥१८॥

---

* अयि अनसूये न केवलं तातस्य नियोगो ममाप्यस्ति एतेषु सहोदरस्नेहः।

† सखि शकुन्तले उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रमवृक्षाः। इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः तेन [1]अनभिसन्धिगुरुको धर्मो भविष्यति। (क)

‡ अयि प्रियंवदे रमणीयं मन्त्रयसि।

---

(१) नास्ति अभिसन्धिः फलकामना यस्मिन् सः तेन गुरुरेव गुरुकः महान्। लोकाः सद्यः पुष्पप्राप्त्याशया वृक्षान् यथासमयं सिञ्चनादिभी रक्षन्तीति तेषामयं स्वार्थमूलो व्यापारः परमिदानीं पुष्पोद्गमसमयाभावेऽपि निःस्वार्थबुद्ध्या तेषां सेचनं नूनमतिप्रशंसनीयमित्यर्थः।

(२) आत्मगतमिति। "अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" इति विश्वनाथः।

(३) असाधुदर्शीति। अतिकोमलाङ्ग्याः शकुन्तलाया आश्रमधर्मे नियोजनमेवासाधुदर्शित्वम्।

(१८) इदमिति। य ऋषिः न व्याजः सौन्दर्यसम्पादनाय विविधवेशभूषादिच्छलं यत्र तत्तथाभूतं मनोहरं स्वभावत एव परमसुन्दरमिदं वपुः शरीरं तपःक्लमं तपसा तपोनियमादिनेत्यर्थः क्लमः खेदो यस्य तत्तथाभूतं साधयितुं कर्तुं

भवतु, पादपान्तरित एव विश्वस्तां तावदेतां पश्यामि, (इति तथा करोति)।

शकु—हला अणसूए! अदिपिणद्धेण वक्कलेण पियम्वदाए दढ़ं पीडिदाह्मि, ता सिढ़िलेहि दाव णं॥।

अन—तह † (इति शिथिलयति।)

प्रियं—(सहासम्) एत्थ दाव पओहरवित्थारहेतुअं अत्तणो जोव्वणं उवालहस्स, मं किं उवालहसि।‡

राजा—सम्यगियमाह—

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण ॥१९॥

अथवा—काममननुरूपमपि अस्या वपुषो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति[1]। कुतः—

---

॥ अयि अनसूये अतिपिनद्धेन वल्कलेन प्रियंवदया दृढं पीडितास्मि तच्छिथिलय तावदेनत्।

† तथा—

‡ अत्र तावत् पयोधरविस्तारहेतुकम् आत्मनो यौवनमुपालभस्व, मां किमुपालभसे।

---

मिच्छति अभिलषति स ऋषिः नीलोत्पलपत्राणां धारया नीलकमलदलानाम् अग्रभागेन शमीलतां शमीनामकवृक्षलतां छेत्तुं व्यवस्यति उद्युङ्क्त इति ध्रुवम्।

(१९) इदमिति—इदं सम्मुखस्थितम् अस्याः शकुन्तलाया, अभिनवं नूतन वपुः तारुण्यावस्थं शरीरमित्यर्थः, स्कन्धदेशे उपहितो दत्तः सूक्ष्मग्रन्थिर्यस्य तेन, तथा स्तनयुगस्य परिणाहं विशालताम् आच्छादयति आवृणोतीति तथाभूतेन वल्कलेन तरुत्वचा, पाण्डुपत्रोदरेण पाण्डुवर्णानां पर्णानामभ्यन्तरेण पिनद्धं सन्नद्धं कुसुममिव स्वां स्वीयां शोभां न पुष्यति, यथा पक्वपर्णावृतावयवं कुसुमं सम्यङ् न शोभते तथैव वल्कलावृतावयवमिदमस्याः शरीरमपि न शोभत इत्यर्थः।

१ अस्याः शरीरस्य कृते अत्यन्तमयुक्तमपीदं वल्कलं अलङ्कृतिसौन्दर्यं न पुष्यति इति न अपितु पुष्यत्येव।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥२०॥

अपि च—

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपम्,
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति ।
विकचसरसिजायाः स्तोकनिर्मुक्तकण्ठं,
निजमिव कमलिन्याः कर्कशं वृन्तजालम् ॥२१॥

शकुन्तला—( अग्रतोऽवलोक्य । ) एसो वादेरिदपल्लवाङ्गुलीहिं तुवरेदि विअ मं केसररुक्खओ । ता जाव णं संभावेमि* । ( इति तथाकरोति )

प्रियंवदा—हला सउन्दले, एत्थ एव्व दाव मुहुत्तअं चिट्ठ† ।

---

* एष [1]वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः । तद् यावदेनं संभावयामि ।

† हला शकुन्तले, अत्रैव तावन्मुहूर्तं तिष्ठ ।

---

(२०)सरसिजमिति—शैवलेनापि शैवालेनापि "जलनीली तु शैवालं शैवलः" इत्यमरः, अनुविद्धं सम्बद्धं सरसिजं कमलं रम्यं सुन्दरं भवति । हिमांशोः चन्द्रमसः मलिनमपि लक्ष्म चिन्हं कलङ्क इत्यर्थः लक्ष्मीं शोभां तनोति विस्तारयति, इयं पुरोवर्तमाना ललनाललामभूता तन्वी कृशाङ्गी शकुन्तला वल्कलेनापि अतितुच्छेन वृक्षत्वचाऽपि अधिकमनोज्ञा अतिमनोहारिणी–तुच्छवस्तुसम्पर्के यदीदृशं सौन्दर्यं भवति तदा उत्कृष्टवस्तुसम्पर्के का कथेत्यपेरर्थः । हि मधुराणां सुन्दराणामाकृतीनां रूपाणां किमिव मण्डनं भूषणं न अपितु स्वतः सिद्धसुन्दरस्वरूपाणां सर्वमेव स्वसम्बद्धं हीनमहीनं वा वस्तुमण्डनं भवतीत्यर्थः । मालिनीवृत्तम् ।

(२१) कठिनमिति—मृगाक्ष्याः हरिणनयनायाः कठिनमपि अस्याः कोमलाङ्गानं हमपि कान्तरूपं मनोरमरूपं वल्कलं वृक्षत्वक्, विकचसरसिजायाः विकसितकमलायाः कमलिन्याः स्तोकं स्वल्पं यथा तथा निर्मुक्तः जलोपरि उत्थितः कण्ठो यस्य तथाभूतं कर्कशं निजं वृन्तजालमिव मनसि मानसे स्वल्पमपि मनागपि रुचिभङ्गमप्रीतिं न आदधाति न करोति ।

१. वातेरिता वायुकम्पिताः पल्लवा एव अङ्गुल्यस्ताभिरित्यर्थः ।

शकुन्तला—किं णिमित्तम्* ।

प्रियंवदा—जाव तुए उवगदाए लदासणाहो विअ अअं केसर-रुक्खओ पडिभादि † ।

शकुन्तला—अदो जेव्व क्खु पिअंवदा सि तुमं‡ ।

राजा—प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा । अस्याः खलु

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ २२ ॥

अनसूया—हला सउन्दले, इअं सअंवरवहू सहआरस्स तुए किदणा-महेआ वणजोसिणित्ति णोमालिआ । णं विसुमरिदा सि* ।

शकुन्तला—तदा अत्ताणं वि विसुमरिस्सं । (लतामुपेत्यावलोक्य च ।) हला, रमणीए क्खु काले इमस्स लदापाअवमिहुणस्स वइअरो संवुत्तो । णवकुसुमजोव्वणा वणजोसिणी, सिणिद्धपल्लवदाए उवओअक्खमो सह-आरो† (इति पश्यन्ती तिष्ठति ।)

---

* किं निमित्तम् ।

† यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति ।

‡ अतएव खलु प्रियंवदासि त्वम् ।

* हला शकुन्तले, इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्यो-त्स्नेति नवमालिका । एनां विस्मृतवत्यसि ।

† तदात्मानमपि विस्मरिष्यामि । हला, रमणीये खलु काल एतस्य लतापाद-पमिथुनस्य (ख) व्यतिकरः संवृत्तः । नवकुसुमयौवना वनज्योत्स्ना, स्निग्धपल्लवत-योपभोगक्षमः सहकारः । (ग)

---

(२२) अधर इति—अधरोऽधरोष्ठः किसलयस्य इव रागो रक्तिमा यस्य तथाभूतः, बाहू कोमलविटपौ अनुकुरुत इति कोमलविटपानुकारिणौ मृदुलशाखा-सदृशावित्यर्थः, अङ्गेषु शरीरावयवेषु कुसुममिव लोभनीयं स्पृहणीयं यौवनं तारुण्यं सन्नद्धं सम्बद्धम्, सर्वाङ्गीणं नवयौवनजन्यं सौष्ठवमाविर्भूतमस्या इत्यर्थः ।

१ स्वयं वृणोति या सा स्वयंवरा, सा चासौ वधूरिति स्वयंवरवधूः, स्वयंकृता-लिङ्गनेन वधूरिव स्थितेत्यर्थः । वनस्य ज्योत्स्नास्वरूपा भृशमानन्ददायिनीत्यर्थः ।

२ नवानि नवोद्गतानि कुसुमान्येव यौवनं यस्याः सा तथाभूता वनज्योत्स्ना, स्निग्धः पल्लवः स्निग्धपल्लवस्तस्य भावस्तत्ता तया कोमलकिसलयतयेत्यर्थः, सहकार

प्रियंवदा—( सस्मितम् ) अणसूए, जाणासि किं णिमित्तं सउन्दला वणजोसिणीं अदिमेत्तं पेक्खदित्ति❋ ।

अनसूया—ण क्खु विभावेमि ता कधेहि† ।

प्रियंवदा—जह वणजोसिणी अनुरूवेण पाअवेण संगदा । अवि-णाम एव्वं अहं वि अत्तणो अनुरूवं वरं लहेअं त्ति‡ ।

शकुन्तला—एसो णूणं तुह अत्तगदो मणोरहो × । ( इति कलशमा-वर्जयति । )

अनसूया—हला सउन्तले । इअं तादकण्णेण तुमं विअ सहत्थेण सम्वड्ढिदा माहवीलदा, ता कधं इमं विसुमरिदासि❋ ।

शकुन्तला—तदो अत्ताणं वि विसुमरिस्सं ( लतामुपेत्य अवलोक्य च सहर्षम् ) अच्चरीअं, अच्चरीअं !! पिअंवदे ! पिअं दे णिवेदेमि ।†

प्रियंवदा—सहि ? किं मे पिअं ? ‡

शकुन्तला—असमए क्खु एसा आ मूलादो मुउलिदा माहवीलदा । ×

उभे—( सत्वरमुपगम्य ) सहि ! सच्चं सच्चं❋ ।

---

❋ अनसूये, जानासि किं निमित्तं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यतीति ।

† न खलु विभावयामि । तत् कथय ।

‡ यथा वनज्योत्स्नानुरूपेण पादपेन संगता, अपि नामैवमहमप्यात्मनोऽ-नुरूपं वरं लभेयेति ।

× एष नूनं तवात्मगतो मनोरथः ।

❋ हला शकुन्तले ! इयं तातकण्वेन त्वामिव स्वहस्तेन संवर्द्धिता माधवीलता, तत्कथमिमां विस्मृतासि ।

† तदा आत्मानमपि विस्मरिष्यामि । आश्चर्य्यम् ! आश्चर्य्यम् !! प्रियंवदे ! प्रियं ते निवेदयामि ।

‡ सखि ! किं मे प्रियम् ?

× असमये खल्वेषा आमूलान्मुकुलिता माधवीलता ।

❋ सखि ! सत्यं सत्यम् ।

---

आम्रपादपः उपभोगक्षमः सम्भोगयोग्योजातः । अत्र नवं कुसुमं रजोदर्शनं यस्मिन् तथाभूतं यौवनं यस्याः सा एवं स्निग्धश्चासौ पल्लवो विटपश्च तस्य भावस्तत्त्वेति विशेषणसाम्येन लिङ्गसाम्येन च नायकनायिकयोर्व्यवहारसमारोपात् समासोक्तिः ।

शकुन्तला—सच्चं किं ण पेक्खध† ।

प्रियम्वदा—(सहर्षं निरूप्य) सहि। तेण हि पडिप्पिअं दे णिवेदेमि।‡

शकुन्तला—किं मे पडिप्पअं ? ×

प्रियंवदा—आसण्णपाणिग्गहणासि तुमं । +

शकुन्तला—( सासूयमिव ) एस दे अत्तणो चित्तगदो मणोरहो, ता ण दे वअणं सुणिस्सं । $

प्रियंवदा—सहि ! ण क्खु परिहासेण भणामि, सुदं मए तादकण्णस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं त्ति । ❀

अनसूया—हला पिअंवदे । अदो ज्जेव ससिणेहा सउन्तला माहवीलदां सिञ्चदि ।†

शकुन्तला—जदो वहिणी मे भोदि तदो किं त्ति ण सिञ्चेमि ?‡ ( इति कलशमावर्जयति[2] )

राजा—(क) अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् । अथवा कृतं सन्देहेन ।

---

† सत्यं किं न प्रेक्षेथे ।

‡ सखि ! तेन हि प्रतिप्रियं ते निवेदयामि ।

× किं मे प्रतिप्रियम् ।

+ आसन्नपाणिग्रहणासि त्वम् ।

$ एष ते आत्मनश्चित्तगतो मनोरथः तत् न ते वचनं श्रोष्यामि ।

❀ सखि ! न खलु परिहासेन भणामि, श्रुतं मया तातकण्वस्य मुखात्—तव कल्याणसूचकमिदं निमित्तमिति ।[1]

† हला प्रियंवदे ! अतएव सस्नेहा शकुन्तला माधवीलतां सिञ्चति ।

‡ यतो भगिनी मे भवति ततः किमिति न सिञ्चामि ।

---

१ अत्रायं भावः, यत्—माधवीलतायां कुसुमोद्गमातिरिक्ते काले यदा कुसुमोद्गमो भवेत् तदा शकुन्तलाया विवाहो नूनमचिरादेव सम्पत्स्यते ।

२ जलसेकार्थमधोमुखं करोतीत्यर्थः ।

(क) असवर्णमसमानं ब्राह्मणेतरं क्षत्रियादीत्यर्थः, क्षेत्रं कलत्रं तत्र संभवः उत्पत्तिर्यस्याः सा तथोक्ता । अत्रायमाशयः यदीयं ब्राह्मणीगर्भजाता भवेत्तदा प्रतिलोमविवाहनिषेधात् धर्मभीरोः क्षत्रियस्य मे विवाहयोग्या न स्यात् । 'क्षेत्रं पत्नीशरीरयोः'

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥२३॥

तथापि तत्त्वत एनामुपलप्स्ये।

शकुन्तला—( ससंभ्रमम्। ) अम्मो। सलिलसेअसंभमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ*। ( इति भ्रमरबाधां रूपयति। )

राजा—( सस्पृहमवलोक्य ) अहो बाधनमपि रमणीयमस्याः, तथाहि—

यतो यतः षट्चरणोऽभिवर्तते
ततस्ततः प्रेरितवामलोचना।

---

* अम्मो। सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते।[1]

---

इत्यमरः। कृतमित्यलमर्थेऽव्ययम्। तद्योगे 'वारणार्थयोगे तृतीया' इति तृतीया। सन्देहेनालमित्यर्थः।

(२३) असंशयमिति—"इयं शकुन्तला" असंशयं निःसंशयं क्षत्रस्य क्षत्रियजातेः मम परिग्रहक्षमा पत्नीत्वेन स्वीकर्तुं योग्या, यद् यस्मात्कारणात् आर्यं श्रेष्ठं स्वप्नेऽप्यसत्पथगमनानभिलाषीत्यर्थः मे मम पुरुवंशोत्पन्नस्य दुष्यन्तस्य मनः अस्यां शकुन्तलायाम् अभिलाषि आकाङ्क्षि। ननु मनसोऽभिनिवेशमात्रेणैव क्षत्रपरिग्रहक्षमेति कथं निर्णीयत इत्याह—हि यस्मात् सन्देहपदेषु संशयस्थानेषु वस्तुषु पदार्थेषु सतां सत्पुरुषाणां कदाचिदप्यनाचरितपापानामित्यर्थः, अन्तःकरणप्रवृत्तयः अन्तःकरणस्य-मनसः प्रवृत्तयः प्रवर्तनानि एव प्रमाणम् एकतरं पक्षं निर्णेतुं समर्था इत्यर्थः। अनेन "परिन्यास" इत्यङ्गमुपक्षिप्तम्। तथा च:—

"तन्निष्पत्तेस्तु कथनं परिन्यासं प्रचक्षते।

१ अम्मो इति विस्मयार्थे तथा "विस्मये दुःसहे अम्मो नित्यं स्त्रीभिः प्रयुज्यते।" इति भरतः।

(२४) यत इति—षट् चरणा यस्य सः षट्चरणो भ्रमरः यतोयतः यस्यां यस्यां दिशि अभिवर्तते अभिधावति ततस्ततः तस्यां तस्यां दिशि प्रेरिते वामे मनोहरे लोचने नयने यया सा तथा विवर्तिते परिवर्तिते भ्रुवौ यया तादृशी इयं शकुन्तला

विवर्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम् ॥२४॥

अपिच (सासूयमिव)

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती ॥२५॥

अपिच—

लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमाम्
आभुग्नेन विवर्तिता बलिमता मध्येन कम्रस्तनी।

---

अकामा नास्ति कामो यस्याः सा तादृशी शिक्षितुमनभिलाषिणी अपि भयाद् भ्रमरभीतेः अद्य दृष्टिविभ्रमं दृग्विलासं शिक्षते अभ्यस्यति, वंशस्थविलं वृत्तम्।

(२५) चलापाङ्गामिति—हे मधुकर = मधुप! करं हस्तं व्याधुन्वत्याः भ्रमराणामुड्डयनार्थम् इतस्ततः सञ्चालयन्त्या अस्याः शकुन्तलायाः वेपथुमतीं दंशभयात् कम्पमानाम् अतएव चलश्चञ्चलः अपाङ्गः नेत्रप्रान्तभागो यस्यास्तथाभूतां दृष्टिं बहुशो भूयो भूयः स्पृशसि (अनेन नेत्रचुम्बनं व्यज्यते) रहस्यं गोप्यम् आख्यातीति तथोक्तः, गोप्यविषयवक्तुकाम इवेत्यर्थः, कर्णान्तिकचरः कर्णसमीपगः सन् मृदु कोमलं यथा तथा स्वनसि गुञ्जसि (अनेन कपोलचुम्बनं व्यज्यते, कामिनोऽपि रहस्यकथनच्छलेन कपोलं चुम्बन्तीति लोकस्थितिः) तथा रतिसर्वस्वं सम्भोगकाले प्राधान्येन उपादेयं अधरम् अधरोष्ठं पिबसि (रतिकालेऽस्यैव पानविधानात्, अनेन अधर चुम्बनं व्यज्यते) वयं तु तत्वस्य शकुन्तलासम्बधिनो यथार्थवृत्तान्तस्य अन्वेषात् 'केयं, कस्य, किं जातीया, परिणेया नवा परिणेयेत्यादिरूपादनुसन्धानात् हताः हतवृत्तयः प्रतिरुद्धव्यापाराः सञ्जाताः, त्वं खलु कृती कृतार्थः कृतोऽसि विधात्रेति शेषः। अत्र वयं हतास्त्वं खलु कृतीत्युपमानाधिक्याद्व्यतिरेकालङ्कारः। आख्यायी वेति क्रियोत्प्रेक्षा। चरणत्रये भ्रमरस्वभावोक्तिः। नीलोत्पलादिभ्रान्तिसूचनाद् भ्रान्तिमान्। त्वं कृतीत्यत्र चरणत्रयस्य हेतुत्वेनोपात्ततया-काव्यलिङ्गञ्च। इति परस्परं निरपेक्षतयैतेषां संसृष्टिः। शिखरिणी वृत्तम्।

(२६) लोलामिति—इयं पुरोवर्तमाना शकुन्तला भ्रुवौ लते इव भ्रूलते, तयोः विभ्रमेण विलासेन सह वर्तमाना तां लोलां चपलां दृष्टिं दृशम् इतस्ततः सर्वासु दिक्षु

हस्ताग्रं विधुनोति पल्लवनिभं सीत्कारभिन्नाधरा
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्त्तकी ॥२६॥

शकुन्तला—ण एसो दुट्ठो विरमदि। अण्णदो गमिस्सं। (पदान्तरे स्थित्वा सदृष्टिक्षेपम्।) कहं इदो वि आअच्छदि। हला, परित्ताअह मं इमिणा दुव्विणीदेण दुट्ठमहुअरेण पडिहूअमाणं। ❀

उभे—(सस्मितम्।) का वअं परित्तादुं। दुस्सन्दं अक्कन्द। राअरक्खिदव्वाइं तवोवणाइं णाम। †

राजा—(स्वगतम्) अवसरोऽयमात्मानं प्रकाशयितुम्। (प्रकाशम्) न भेतव्यं न भेतव्यम्—(इत्यर्धोक्ते स्वगतम्।) राजभावस्त्वभिज्ञातो भवेत्, भवतु [3]अतिथिसमाचारम् एवावलम्बिष्ये। ण एसो दुव्विणीदो विरमदि, ता अण्णदो गमिस्सं।

शकुन्तला—(पदान्तरेस्थित्वा। सदृष्टिक्षेपम्।) हद्धी! हद्धी! कहं इदोवि मं अणुसरदि, ता परित्ताअह मं। ‡

---

❀ न एष दुष्टो विरमति। अन्यतो गमिष्यामि। कथमितोऽप्यागच्छति। हला, परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेण परिभूयमानाम्[1]।

† के आवां परित्रातुम्। दुष्यन्तमाक्रन्द[2]। राजरक्षितव्यानि तपोवनानि नाम।

‡ हा धिक्! हा धिक्! कथमितोऽपि मामनुसरति, तत्परित्रायेथामाम्।

---

वितनुते प्रेरयति, आभुग्नेन किञ्चिद्वक्रीभूतेन बलिमता त्रिवलियुता, मध्येन शरीरमध्यभागेन विवर्तिता परिवर्तिता कम्रौ कमनीयौ स्तनौ यस्यास्तादृशी तथा सीत्कारेण भ्रमरदंशनत्रासजनितेन सीदितिशब्देन भिन्नः वियुक्तः अधरो यस्यास्तथाभूता सती पल्लवनिभं पल्लवसदृशं हस्ताग्रं विधुनोति कम्पयति। भ्रमरस्य अभिलङ्घनात् आक्रमणाद् या भीः तया हेतुना वाद्यैः विना नृत्यकालीनवाद्यमन्तरेण नर्तकी जाता। अत्र वाक्यार्थं हेतुकं काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥

१. परिभूयमानाम्—बाध्यमानाम्।

२. आक्रन्द—आहूय, "क्रन्दने रोदनाह्वाने" इत्यमरः।

३ अतिथेः अभ्यागतस्य उदासीनस्येत्यर्थः, समः समान आचारो व्यवहारस्तम् अवलम्बिष्ये—आश्रयिष्यामि।

राजा—( सत्वरमुपसृत्य ) आः !—

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यकासु ॥ २७ ॥

( सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः । )

अनसूया—अज्ज ! ण क्खु किंवि अच्चाहिदं । इअं णो पिअसही दुट्ठमहुअरेण अहिहूअमाणा कादरीभूदा । ( इति शकुन्तलां दर्शयति । )*

राजा—( शकुन्तलाभिमुखो भूत्वा । ) अयि तपो वर्धते ।

( शकुन्तला ससाध्वसावनतमुखी तिष्ठति । )

अनसूया—दाणिं अदिहिविसेसलाहेण । हला सउन्दले, गच्छ उडआदो फलमिस्सं अग्घं उवहर । इदं पादोदअं भविस्सदि † । ( इति घटं दर्शयति )

राजा—भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ।

प्रियंवदा—तेण‡ हि इमस्सिं पच्छाअसीअलाए सत्तवण्णवेदिआए मुहुत्तअं उवविसिअ परिस्समविणोदं करेदु अज्जो ।

राजा—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः, तन्मुहूर्तमुपविशत ।

---

* आर्य, न खलु किमप्यत्याहितम् । इयं नौ प्रियसखी दुष्टमधुकरेणाभिभूयमाना कातरीभूता ।

† इदानीमतिथिविशेषलाभेन । हला शकुन्तले, गच्छोटजम् । फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति ।

‡ तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ।

---

(२७) क इति—दुर्विनीतानाम् अविनीतानां, दुष्टानामित्यर्थः, शासितरि दण्डयितरि पौरवे पुरुवंशोत्पन्ने मयि वसुमतीं रत्नप्रसवित्रीं पृथिवीं शासति पालयति सति कः अयं मुग्धासु लौकिकव्यवहारानभिज्ञतया अचतुरासु तपस्विकन्यकासु तापससुतासु अविनयम् अशिष्टव्यवहारम् आचरति करोति । अत्र भ्रमरः, मयि दुष्यन्त इत्यादिविशेषे प्रस्तुते कोऽयमित्यादेः सामान्यस्योक्तेरप्रस्तुतप्रशंसा । आर्यावृत्तम् ।

अनसूया—हला सउन्दले ! उइदं णो पज्जुवासणं अदिहीणं ता एहि एत्थ उवविसम्ह ॐ। ( इति सर्वा उपविशन्ति । )

शकुन्तला—( आत्मगतम् । ) किं णु क्खु इमं जणं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअम्हि संवुत्ता † ।

राजा—( सर्वा विलोक्य ) अहो [2]समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

प्रियंवदा—( जनान्तिकम् । ) हला अणसूए ! को णु क्खु एसो चउरगम्भीराकिदी महुरं पिअं आलवन्तो पहाववन्दो विअ लक्खीअदि ।‡

अनसूया—सहि, मम वि अत्थि कोदूहलं । पुच्छिस्सं दाव णं । ( प्रकाशम् । ) अज्जस्स महुरालावजणिदो वीसम्भो मं मन्तावेदि कदमो अज्जेण राएसिणो वंसो अलंकरीअदि, कदमो वा विरहपज्जुस्सुअजणो किदो देसो, किंणिमित्तं वा सुउमारदरो वि तवोवणगमणपरिस्समस्स अत्ता पदं उवणीदो । ×

शकुन्तला—( आत्मगतम् । ) हिअअ ! मा उत्तम्म । जं तुए चिन्तिदं तं अणसूया मन्तेदि । +

राजा—( आत्मगतम् ) कथमिदानी मात्मानं निवेदयामि, कथं वात्मनः परिहारं करोमि । भवतु । एवं तावदेनां वक्ष्ये । ( प्रकाशम् । ) भवति, यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

---

ॐ हला शकुन्तले, उचितं नः पर्युपासनमतिथीनां, तदेहि अत्रोपविशामः ।

† किं नु खल्विमं जनं प्रेक्ष्य [1]तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ।

‡ अनसूये, को नु खल्वेष चतुरगम्भीराकृतिर्मधुरं प्रियमालपन्प्रभातचन्द्र इव लक्ष्यते ।

× सखि, ममाप्यस्ति कौतूहलम् । पृच्छामि तावदेनम् । आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयति कतम आर्येण राजर्षेर्वंशोऽलंक्रियते, कतमो वा विरहपर्युत्सुकजनः कृतो देशः, किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः ।

+ हृदय, मोत्ताम्य । यत् त्वया चिन्तितं तदनसूया मन्त्रयति ।

---

१ तपोवनस्य विरोधिनः विकारस्य विषयानुरागस्येत्यर्थः ।

२ समानि वयांसि रूपाणि सौन्दर्याणि च तैः रमणीयं मनोहरम् ।

अनसूया—सणाहा दाणिं धम्मआरिणो ।※

( शकुन्तला शृङ्गारलज्जां नाटयति१ । )

सख्यौ—( उभयोराकारं विदित्वा जनान्तिकम् । ) हला सउन्दले, जइ एत्थ अज्ज तादो संणिहिदो भवे ।†

शकुन्तला—तदो किं भवे ।‡

सख्यौ—तदो जीविदसव्वस्सेण वि इमं अदिहिविसेसं किदत्थं करिदि । +

शकुन्तला—तुझे अवेध । किं वि हिअए कदुअ मन्तेध । ण वो वअणं सुणिस्सं ।$

राजा—वयमपि तावद्भवत्योः सखीगतं किञ्चित् पृच्छामः ।

सख्यौ—अज्ज ! अनुग्गहो विअ इअं अब्भत्थणा ।÷

राजा—भगवान्काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशः । इयं च वः सखी तदात्मजेति कथमेतत् ।

अनसूया—सुणादु अज्जो । अत्थि को वि कोसिओत्ति गोत्तणामहेओ महाप्पहावो राएसी ।

राजा—अस्ति । श्रूयते ।

---

※ सनाथा इदानीं धर्मचारिणः ।

† हला शकुन्तले, यद्यत्राद्य तातः संनिहितो भवेत् ।

‡ ततः किं भवेत् ।

+ इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं कुर्यात् ।

$ युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयध्वं । न युवयोर्वचनं श्रोष्यामि ।

÷ आर्य, अनुग्रह इवेयमभ्यर्थना ।

× शृणोत्वार्यः । अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः ।

---

१. परावृत्तेन शिरसा लज्जाकुञ्चितया दृशा च कामजनितव्रीडासूचकविकारमभिनयतीत्यर्थः । एतेन हावाभिधानो नायिकाङ्गजोऽलङ्कारः प्रदर्शितः । तद्यथा—

"भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।
भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ॥" इति ।

अनसूया—तं णो पिअसहीए पहवं अवगच्छ। उज्झिआए सरीरसंवड्ढणादिहिं तादकस्सवो से पिदा।*

राजा—उज्झितशब्देन जनितं मे कौतूहलम्। आ मूलाच्छ्रोतुमिच्छामि।

अनसूया—सुणादु अज्जो। गोदमातीरे पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किंवि जादसङ्केहिं देवेहिं मेणआणाम अच्छरा पेसिदा णिअमविग्घआरिणी।†

राजा—अस्त्येवान्यसमाधिभीरुत्वं देवानाम्।

अनसूया—तदो वसन्तावदाररमणीए समए से उम्मादइत्तअं रूवं पेक्खिअ—( इत्यर्धोक्ते लज्जया विरमति। )‡

राजा—परस्ताज्ज्ञायत एव। सर्वथाप्सरःसंभवैषा।

अनसूया—अह इं।

राजा—उपपद्यते।

मानुषीभ्यः कथं वा स्यादस्य रूपस्य संभवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥२८॥

( सव्रीडा शकुन्तलाधोमुखीतिष्ठति[1]। )

---

* तमावयोः प्रियसख्याः प्रभवमवगच्छ। उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता।

† शृणोत्वार्यः। गोतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा प्रेषिता नियमविघ्नकारिणी।

‡ ततो वसन्तावताररमणीये तस्या उन्मादयितृ रूपं प्रेक्ष्य—

+ अथ किम्।

---

(२०) मानुषीभ्य इति—मनोरपत्यानि स्त्रियो मानुष्यस्ताभ्यः मनुष्यजातिस्त्रीभ्य अस्य पुरोदृश्यमानस्य शकुन्तलासम्बन्धिनोरूपस्य सम्भवः उत्पत्तिः कथं वा स्यात् कुतो भवेत्—अपितु नस्यादेव। क्व मानुष्यः क्व च स्वर्गीयम् इदं रूपम्। तथाहि—प्रभया दीप्त्या तरलं भासुरं ज्योतिः चन्द्रादि वसुधातलात् भूतलात् न उदेति उत्पन्नं न भवतीत्यर्थः।

---

१. स्वस्तुत्याकर्णनेनावनतमुखी जातेत्युत्तमनायिकात्वमस्या ध्वन्यते।

राजा—( आत्मगतम्। ) हन्त ! लब्धावकाशो मे मनोरथः। किन्तु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा [१]धृतद्वैधीभावकातरं मे मनः।

प्रियंवदा—( सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा। ) पुणो वि वत्तुकामो विअ अज्जो लक्खीअदि*।

( शकुन्तला सखीमङ्गुल्या तर्जयति। )

राजा—सम्यगुपलक्षितं भवत्या। अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम्।

प्रियंवदा—तेण हि अलं विआरिदेण। अणिअन्तणाणुजोओ क्खु तवस्सिअणो णाम।†

राजा—इति सखीं ते ज्ञातुमिच्छामि—

वैखानसं किमनया व्रतमा प्रदाना-
व्द्यापाररोधि मदनस्य निषेवितव्यम्।

---

* पुनरपि वक्तुकाम इवार्यो लक्ष्यते।

† तेन हि अलं विचारितेन। अनियन्त्रणानुयोगस्तपस्विजनो नाम।

---

(१) यथा वनज्योत्स्नानुरूपेण पादपेन सङ्गता, अपिनामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेत्याद्याकर्ण्यास्या रूपलावण्यादेरनुरूपवरस्य दुर्लभतया परमार्थतः परिहासजल्पितं वानुरूपवराभिलापयैव वा न निश्चितोऽद्यावधि कश्चन वर इतिसन्देहोऽत्र द्वैधीभावः, तेन कातरं भयशीलमित्यर्थः, यदि निर्णीतो भवेत्तदेयं मया न लप्स्यते यदि न निर्णीतश्चेत्तदापि मयैव लप्स्यत इति कथं कथयितुं शक्यत इतिभावः।

(२९) वैखानसमिति—अनया शकुन्तलया, कोमलाङ्गतया व्रतानुष्ठानानर्हतयेत्यर्थः, मदनस्य भगवतः कामदेवस्य व्यापारं नानाविधालिङ्गनभोगजलक्रीडापुष्पावचयोपवनवासवीणावादनसाकूतावलोकनादिकं रुणद्धि निवारयतीति तथाभूतं विशेषेण खनति कन्दफलमूलानीति वैखानसं तपस्विसम्बन्धि तपोवननिवासलक्षणं व्रतम् अतिकठिनं ब्रह्मचर्यनियमादि, यदुक्तं शुकानुशासने भगवता व्यासेन—

"मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः।
वर्तयन्ति यथान्यायं वैखानसमताश्रिताः॥"

आ प्रदानात् वराय दानपर्यन्तं यावद् वराय न प्रदीयते तावदित्यर्थः, निषेवितव्यम् अनुष्ठातव्यम्, आहो उत अथवेत्यर्थः, मदिरे सञ्जातमदे ईक्षणे नयने यासां तास्तथाभूता वल्लभाः प्रियास्ताभिः हरिणाङ्गनाभिः मृगीभिः समं सह अत्यन्तं

अत्यन्तमेव मदिरेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥२९॥

प्रियम्वदा—अज्ज, धम्माचरणे वि परवसो अअं जणो। गुरुणो उण से अणुरूववरप्पदाणे संकप्पो।*

राजा—( आत्मगतम्। ) न दुरवापेयं खलु प्रार्थना।

भव हृदय साभिलाषं संप्रति संदेहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥३०॥

---

* आर्य, धर्माचरणेऽपि परवशोऽयं जनः। गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः।

---

सुचिरम् एव निवत्स्यति तपोवन एव यावज्जीवं समयं यापयिष्यति, अयमत्रत्य आशयः—

यदीयं कस्मैचन राज्ञे दीयते तदास्या विवाहपर्यन्तमेवेहावस्थानम् अनन्तरञ्च निर्बाधः कामोपभोगः। यदि पुनः कस्मैचन तापसाय दीयते तदा जन्मत एवारण्यकवस्तुजातपरिचया लौकिकव्यवहारदुर्विदग्धमानसेयं विविधसुरतोपभोगप्रकारज्ञानशून्या सती कामकलाविलासरहितं निजं यौवनमतिवाहयन्ती आरण्यकजनवत् सुचिरमत्रैव वने स्थास्यति, अस्याः परिणयावधिकं यावज्जीवं वेहावस्थानमिति प्रश्नद्वयं फलितार्थः। अत्र "समं सहार्थे तुल्ये च" इत्यजयदिशा समशब्दस्य तुल्यवाचित्वादुपमा। वसन्ततिलकं वृत्तम्—"ज्ञेयं वसन्ततिलकं तभजा जगौगः।" इति।

(३०) भवेति—हे हृदय! सम्प्रति इदानीं साभिलाषं शकुन्तलायां साकाङ्क्षं भव प्राक् शकुन्तलायाः स्वसमानजातित्वं, ततस्तापसवराया प्रदानं पुनर्मुनेरनुरूपवरप्रदानसङ्कल्प इति सर्वं सखीद्वारा श्रुते सति स्वस्य तदनुरूपत्वाद्राजर्षिसुताया राजर्षिवरप्राप्तेरुचितत्वात्तत्रापीदानीं सन्निहितस्य मम परित्यागे हेत्वभावाच्च त्वयैवेपा लप्स्यत इति निश्चितमवेहीत्यर्थः। सन्देहस्य इयं मुनिकन्या क्षत्रियकन्या वेतिलक्षणस्य निर्णय एकतरनिश्चयो जातः, जातिनिर्णयं विना मत्परिग्रहयोग्या नवेति निर्णयोऽशक्य आसीत् परमिदानीं स निर्णयो जातः, नाधुनैतस्या लाभे सन्देह इति भावः। तमेव निर्णयं प्रपञ्चयति आशङ्कस इति—

यद् वस्तु "त्वं" अग्निम् अग्निवद्दाहजनकम् आशङ्कसे मन्यसे, मुनिकन्यात्वेन

शकुन्तला—( सरोषमिव । ) अणसूए गमिस्सं अहं ।※

अनसूया—किं णिमित्तं ।†

शकुन्तला—इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए गदुअ णिवेदइस्सं ।‡ ( इत्युत्थातुमिच्छति )

अनसूया—सहि, ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिहिविसेसं विसज्जिअ सच्छन्ददो गमणं । ×

( शकुन्तला न किंचिदुक्त्वा प्रस्थितैव । )

राजा—( स्वगतम् ) कथमियं गन्तुमेव प्रवृत्ता ( ग्रहीतुमिच्छन्निगृह्यात्मानम् । ) अहो [1]चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि—

अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनि वृत्तः ॥३१॥

※ अनसूये, गमिष्याम्यहम् ।

† किंनिमित्तम् ।

‡ इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै गत्वा निवेदयिष्यामि ।

× सखि, न युक्तम् आश्रमवासिनो जनस्य अकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ।

तदुपयमे दोपदर्शनादित्यर्थः,—तद् इदं शकुन्तलारूपं वस्तु स्पर्शक्षमं स्पर्शार्हं रत्नं वर्तते,—

"जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते ।" इत्युक्तेः ।

अनेन समाधानं नामकमङ्गमुपक्षिप्तम् । तल्लक्षणम्—

बीजार्थस्योपगमनं तत्समाधानमुच्यते ।" आर्या जातिः ।

(३१) तामेव मनोवृत्तिं दर्शयति, अनुयास्यन्निति—मुनितनयाम् ऋषिपालितां तदधीनां वा इमां शकुन्तलाम् अनुयास्यन् तत्सौन्दर्यवशादवशः सन् बलाद् गृहीतुमनुगमिष्यन् "अहं" सहसा तत्क्षणं विनयेन जितेन्द्रियतया,—

"इन्द्रियाणां जयं प्राह विनयं भरतो मुनिः" इत्युक्तेः ।

वारितः निवारितः प्रसरो वेगो यस्य तथाभूतः सन् स्थानात् स्वाधिष्ठित-

१ चेष्टाप्रतिरूपिका—चेष्टायाः शारीरक्रियायाः समानरूपा, कायव्यापारानुकूलः कामिजनमनोभाव इत्यर्थः ।

प्रियंवदा—( शकुन्तलां निरूप्य । ) हला, ण दे जुत्तं गन्तुं ⊛ ।

शकुन्तला—( सभ्रूभङ्गम् ) किं णिमित्तं† ।

प्रियंवदा—रुक्खसेअणे दुवे धारेसि मे। तेहिं दाव अत्ताणं मोआवेहि तदो गमिस्ससि ।‡ (इति बलादेनां निवर्तयति ।)

राजा—भद्रे ! वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये ।

तथा ह्यस्याः—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
द्द्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।

---

⊛ हला, न ते युक्तं गन्तुम् ।

† किंनिमित्तम् ।

‡ वृक्षसेचने द्वे धारयसि मे । ताभ्यां तावद् आत्मानं मोचय ततो गमिष्यसि[१] ।

---

प्रदेशात् अनुचलन् न गच्छन्नपि गत्वा किञ्चिद्दूरम् अनुगम्य पुनः प्रतिनिवृत्तः प्रत्यागत इव । अत्र अनुचलन् गत इति विरोधाभासः। परिभावना नाम मुखसन्धेरङ्गमपि अनेन प्रकटितम्—तथा च "कुतूहलोत्तरा वाचो विज्ञेया परिभावना" इति । आर्या जातिः ।

(१) वृक्षसेचनके द्वे धारयसि वृक्षसेचनार्थं द्वौ जलपूर्णकलशौ ऋणत्वेन गृहीतवत्यसि, अत्रायं भावः—पूर्वेद्युः शकुन्तलाप्रियंवदे मिलित्वा वृक्षसेचनम् अकुरुताम्, तत्र शकुन्तला प्रियंवदामभिदधौ यदद्याहं भृशं परिश्रान्तास्मि, इतोऽधिकं जलपूर्णं कलशमुत्तोलयितुं सर्वथा असमर्थानि मेऽङ्गानि, वारद्वयञ्च जलपूर्णकलशाभ्यां वृक्षसेचनमवशिष्यते, तदद्य अवशिष्टं मदीयं वृक्षसेचनद्वयं मदपेक्षया त्वयैव दातव्यं, दिनान्तरे त्वदपेक्षया वृक्षसेचनद्वयमहं दत्वा तव तद् ऋणं परिशोधयिष्यामि, तदेव ऋणरूपजलकलशद्वयार्थमिदानीं प्रियंवदा शकुन्तलाया गमनं प्रतिबध्नाति ।

(३२) तदेव समर्थयति-स्रस्तांसाविति—बाहू भुजौ, घटस्य जलपूर्णकलशस्य उत्क्षेपणात् उत्तोलनात् स्रस्तौ अतिपरिश्रमेण अवनतौ अंसौ स्कन्धौ ययोस्तथाभूतौ, उक्तञ्च सामुद्रिके—

"उन्नतांसः पुमान् श्रेष्ठः सन्नतांसा तु सुन्दरी ।" इत्युक्तेः ।

तथा अतिमात्रम् अत्यन्तं प्रमाणाधिकमित्यर्थः, घटस्य उत्तोलनावतोलनज-

स्रस्तं कर्णशिरीषरोधि वदने घर्माम्भसा जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥३२॥

तदहमेनामनृणां करोमि । (इत्यङ्गुलीयकं ददाति ।)

(सख्यौ प्रतिगृह्य नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः ।)

राजा—अलमन्यथा संभाव्य । राज्ञः परिग्रहोऽयमिति राजपुरुषं मामवगच्छथ ।

प्रियंवदा—तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं । अज्जस्स वअणेण ज्जेव अणिरिणा दाणिं एसा । (किंचिद्विहस्य ।) हला सउन्दले, मोइदा सि अणुअम्पिणा अज्जेण, अहवा महाराएण । गच्छ दाणिं ।❀

---

❀ तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगम् । आर्यस्य वचनेनैवानृणेदानीमेषा । हला शकुन्तले, मोचितास्यनुकम्पिनार्येण, अथवा महाराजेन । गच्छेदानीम् ।

---

नितघर्षणात् लोहितं रक्तं तलं तलभागो ययोस्तादृशौ, करतलस्तु पूर्वमेव सराग आसीदिदानीं कलशोन्नयनादतिशयितरागोजात इत्यर्थः । प्रमाणात् स्वाभाविकनियमाद् अधिकः द्वादशाङ्गुलाधिक इत्यर्थः ।

तथा च—

"देहं व्याप्य स्वनाडीभिः प्रमाणं कुरुते बहिः ।
द्वादशाङ्गुलमानेन तस्मात्प्राणः समीरितः ॥" इति ।

श्वासः निश्वासवायुः अद्यापि इदानीमपि स्तनयोः वेपथुं कम्पं जनयति, घर्मस्य स्वेदस्य अम्भसा जालेन वदने मुखे कर्णयोः शिरीषे शिरीषपुष्पे रुणद्धि इति तत्तथोक्तं जालकं बिन्दुसमूहः बद्धं रचितं तथा बन्धे केशबन्धे स्रंसिनि शिथिलीभवति सति अतएव पर्याकुलाः इतस्ततो विक्षिप्ताः मूर्धजाः केशाः एकेन हस्तेन यमिताः संयम्य धृताः । अत्र वृक्षसेचनजनितपरिश्रमकथनच्छलेन स्वाभिलापोपस्थापितानि रतिविशेषजनितव्यञ्जकानि विशेषणानि सम्यगुपात्तानि, तथाहि—

अंसयोः स्रंसनं, करतलस्य लोहितत्वं, स्तनयोर्वेपथुमत्त्वं प्रमाणाधिकः श्वासः, केशानामाकुलत्वमित्यादीनां विशिष्टरतिकरणानन्तरमेव भावित्वात्तेषां व्यञ्जकत्वे सहृदया एव प्रमाणम् । अत्र अनुमानालङ्कारः काव्यलिङ्गञ्च । शार्दूलविक्रीडितं वृत्तम् ।

शकुन्तला—( आत्मगतम् । ) ण एदं जणं परिहरिस्सं जइ अत्तणो पहविस्सं । ( प्रकाशम् । ) का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा ।*

राजा—( शकुन्तलां विलोक्य आत्मगतम् ) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति तथा स्यात् । अथवा लब्धावकाशा मे प्रार्थना । कुतः—

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमुखीना
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥२३॥

---

* नैतं जनं पर्यहरिष्यं यद्यात्मनः प्राभविष्यम् । का त्वं विसर्जितव्यस्य रोद्धव्यस्य[1] वा ।

---

(१) राजनि दुष्यन्ते सर्वतोभावेनानुरक्तमात्मानमन्यतः प्रवर्तयितुं यदि समर्था भवेस्तदा गमिष्यामि, त्वं पुनः विसर्जितुं योग्यस्य रोद्धुं योग्यस्य वा मम विषये का ।

(२३) वाचमिति—यद्यपि, इयं शकुन्तला मम वचोभिः वचनैः सह वाचं स्वीयां वाणीं न मिश्रयति न मेलयति मया सह नालपतीत्यर्थः, तथापि, मयि भाषमाणे वदति सति अभिमुखं मुखं लक्षीकृत्य कर्णं ददाति अवहिता सती सादरं मदुक्तं शृणोतीत्यर्थः, यद्यपि मम आननस्य मन्मुखस्य सम्मुखीना अभिमुखी कामं यथेच्छं न तिष्ठति तु किन्तु तथापि भूयिष्ठं बहुलं यथा तथा अस्याः दृष्टिः दृक् अन्यः मदाननव्यतिरिक्तः विषयो लक्ष्यो यस्याः तथाभूता न नैवेत्यर्थः । वसन्ततिलकं वृत्तम् । अत्र विलासो नाम स्वभावजो नायिकालङ्कार उक्तो भवति,

तथा च—

"यो वल्लभासन्नगतो विकारो गत्यासनस्थानविलोकनादौ ।
नानाविधाकूतचमत्कृतिश्च पराङ्मुखं चास्यमयं विलासः ॥

इति नागरसर्वस्वम् ।

अत्रैव विश्वनाथोऽपि—

"यानस्थानासनादीनां मुखनेत्रादिकर्म्मणाम् ।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ॥" इति ।

( नेपथ्ये[1] । )

भो भोस्तपस्विनः, तपोवनसन्निहितसत्त्वरक्षायै सज्जीभवन्तु भवन्तः । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

तुरगखुरहतस्तथा हि रेणु—
विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥३४॥

---

अनुरागेङ्गितमपि—यथात्रैव—

"दृष्ट्वा दर्शयति व्रीडां सम्मुखं नैव पश्यति ।
प्रच्छन्नं वा भ्रमन्तं वातिक्रान्तं पश्यति प्रियम् ॥
अन्यैः प्रवर्तितां शश्वत् सावधाना च तत्कथाम् ।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥"

(१) मुखसन्धेरन्तिमं भेदनामकमङ्गमुपक्षिपन् प्रस्तुतां कथामिहैव समाप्य अङ्कान्तरम्प्रारिप्सुः कविराह नेपथ्य इति—

नेपथ्ये यवनिकाभ्यन्तर इत्यर्थः, तपोवनस्य आश्रमस्य सन्निहिताः निकटस्थिताः ये सत्वाः तेषां रक्षायै रक्षणार्थं सन्नद्धा आश्रमसविधभूमिस्थितजीवरक्षणार्थम् अविलम्बितं कटिबद्धा भवत इत्यर्थः ।

(३४) प्रत्यासन्न इति यदुक्तं तत्र श्लोकद्वयेन कारणं विनिर्दिशति—तुरगेति—तथाहि—तुरगाणाम् अश्वानां खुरैः हतः ताडितः चूर्णीकृत इत्यर्थः, रेणुः पर्वतीयं रजः, परिणतः परिणामं गतः अस्तोन्मुख इत्यर्थः, यः अरुणः सूर्यस्तस्य इव प्रकाशो दीप्तिर्यस्य तथाभूतः सन् "अरुणोऽस्फुटरागे च सूर्ये सूर्यस्य सारथौ" इति धरणिः, शलभानां पतङ्गानां समूह इव विटपेषु शाखासु विषक्तानि आसक्तानि जलेन आर्द्राणि वल्कलानि येषु तथाभूतेषु आश्रमस्य तपोवनस्य द्रुमास्तेषु पतति ।

अत्र विटपविषक्तजलार्द्रवल्कलेषु आश्रमद्रुमेषु रेणुः पततीत्यनेन विटपेभ्यो वल्कलापसारणं क्रियताम् अन्यथा तानि धूलिधूसरितानि भविष्यन्तीति ध्वन्यते । अत्रोपमालङ्कारः, ससैन्यो दुष्यन्तः समाययाविति प्रतिपाद्ये तुरगेत्याद्यप्रकृतवाक्येन प्रतिपादनाद् अप्रस्तुतप्रशंसा च । पुष्पिताग्रा वृत्तम् ।

राजा—(स्वगतम्) अहो ! धिक्, मम अन्वेषिणः सैनिकास्तपोवनमभिरुन्धन्ति, तदिह न युक्तमवस्थातुं, गत्वा तान् प्रतिनिवर्तयामि ।

(पुनर्नैपथ्ये ।)

भो भोस्तपस्विनः ! वृद्धस्त्रीकुमारान् पर्याकुलयन् एष गजः प्राप्तः ।

तीव्राघातप्रतिहततरुः स्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥३५॥

(सर्वाः कर्णं दत्त्वा किंचिदिव संभ्रान्ताः ।)

राजा—(आत्मगतम् ।) अहो धिक् [1]कथमपराद्धस्तपस्विनामस्मि । भवतु । प्रतिगच्छामि तावत् ।

सख्यौ—अज्ज, इमिणा आरण्णअवुत्तन्तेण पज्जाउला ह्म । ता अणुजाणीहि णो उडअगमणस्स ।❀

❀ आर्य, अनेनारण्यकवृत्तान्तेन पर्याकुलाः[2] स्मः । तद् अनुजानीहि न उटजगमनाय ।[3]

(३५) तीव्रेति—स्यन्दनस्य दुष्यन्तरथस्य आलोकादवलोकनाद् भीतः त्रस्तः, तथा तीव्रः उत्कटः य आघातः पलायनसमये नैसर्गिको यः सङ्घट्टः तेन प्रतिहता भग्नाः तरवो वृक्षा येन तथाभूतः, तथा स्कन्धे स्कन्धभागे लग्नः पार्श्वावलोकनेनासक्तः एको दन्तो यस्य सः एकं वृक्षस्कन्धमवस्कन्द्य एकस्मिन् दन्ते निक्षिप्य आगच्छतीत्यर्थः, तथा पादाभ्याम् आकृष्टं यत् व्रततीनां लतानां वलयं समूहस्तस्य आसङ्गेन समन्ततः सम्बन्धेन आवेष्टनेनेत्यर्थः, जातः पाशो यस्य सः, भिन्नं भयात् पृथक् कृतं सारङ्गाणां मृगाणां यूथं कुलं येन तथोक्तः एष गजः तपसः तपश्चरणस्य मूर्तः मूर्तिमान् विघ्नः प्रतिबन्ध इव नः अस्माकं धर्मारण्यं विशति प्रविशति । अत्र तपसो मूर्तः विघ्न इवेत्युत्प्रेक्षा, पूर्वक्रमेणाप्रस्तुतप्रशंसा च । भयानकश्चात्र रसः, तत्र आलम्बनं गजः, तद्गतभयं स्थायिभावः, सेनारथाद्यवलोकनमुद्दीपनम्, पार्श्वावलोकनपलायनादयो व्यभिचारिणः । मन्दाक्रान्ता वृत्तम् ।

(१) अनुचराणामपराधस्य स्वापराधत्वात् कृतापराध इत्यर्थः ।

(२) हस्तिसम्भ्रमात्मकसमाचारेण व्याकुलाः स्मेत्यर्थः ।

(३) पर्णशालागमनायानुमन्यतामित्यर्थः ।

अनसूया—(शकुन्तलां प्रति) हला सउन्तले ! पज्जाउला अज्जा गोदमी भविस्सदि, ता एहि सीग्घं एकत्था होम्ह ।※

शकुन्तला—(गतिरोधं रूपयित्वा) हद्धी ! हद्धी ! ऊरुत्थम्भविव्भलह्मि संवुत्ता ।†

राजा—(ससंभ्रमम् ।) स्वैरं स्वैरं गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे ।

( सर्वे उत्तिष्ठन्ति )

सख्यौ—महाभाअ ! विदिदभूइट्ठोसि, सम्पदं उवआरमज्झत्थदाए अवरद्धम्ह, तं मरिसेहि, असंभाविदअदिहिसक्कारं भूओ वि पच्चवेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं ।‡

राजा—मा मैवम् । दर्शनेनैव भवतीनां सम्भूतसत्कारोऽस्मि ।

शकुन्तला—हला अणसूए ! अहिणव-कुससूइ परिक्खदं मे चलणं कुरुवअसाहापरिलग्गञ्च वक्कलं, दाव पडिपालेध मं, जाव णं मोआवेमि । ×

---

※ हला शकुन्तले । पर्याकुला आर्या गौतमी भविष्यति, तदेहि शीघ्रमेकस्था भवामः ।

† हा धिक् ! हा धिक् ! ऊरुस्तम्भविह्वलास्मि संवृत्ता[1] ।

‡ महाभाग ! विदितभूयिष्ठोऽसि, साम्प्रतम् उपचारमध्यस्थतया अपराद्धाः स्मः, तन्मर्षय । असंभावितातिथिसत्कारं भूयोऽपि प्रत्यवेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम् ।

× हला अनसूये ! अभिनवकुशसूचिपरिक्षतं[2] मे चरणं, कुरुबकशाखापरिलग्नञ्च वल्कलं, तावत् प्रतिपालयत मां यावदेनत् मोचयामि ।

---

(१) ऊर्वोः स्तम्भेन अचलनेन कान्तं विहाय गन्तुम् असमर्थतया स्तम्भसदृशेनेत्यर्थः, विह्वला व्याकुला संवृत्तास्मि । अनेन सात्विकोऽयत्नजः स्तम्भरूपोऽनुभावः प्रदर्शितः । तदुक्तं श्रीकृष्णकविना—

"हर्षदुःखभयादिभ्यः स्तम्भो गतिनिरोधनम् ।"

उदाहरणञ्च तत्रैव—

"वीक्ष्य कान्तं प्रिया गन्तुं यतमानापि नाशकत् ।"

दर्पणेऽपि—स्तम्भश्चेष्टा प्रतीघातो भयहर्षामयादिभिः ।

(२) अभिनवा नूतना या कुशस्य सूचिरग्रभागस्तया परिक्षतं विद्धं, कुरुबकतरुशाखासंसक्तञ्चेत्यर्थः ।

( इति शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता । )

राजा—(निश्वस्य) गताः सर्वाः, भवतु अहमपि गच्छामि; शकुन्तला-दर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान्समेत्य नातिदूरे तपोवनस्य निवेशयामि । न खलु शक्नोमि शकुन्तलादर्शनव्यापा-रादात्मानं निवर्तयितुम् । मम हि—

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥३०॥

(इति निष्क्रान्ताः सर्वे[१] ।)

इति प्रथमोऽङ्कः ।

---

(३०) गच्छतीति—मम हि शरीरं पुरः अग्रे गच्छति, प्रतिवातं वातसम्मुखं नीयमानस्य सञ्चाल्यमानस्य केतोः ध्वजदण्डस्य चीनांशुकं चीनदेशजातपट्टवस्त्रम् इव असंस्तुतम् अपरिचितं चेतः "पुनः" पश्चात् धावति शकुन्तलाभिमुखं सत्वरं-चलति, यथा अपरिचितः कश्चित् कमपि सहसा परित्यज्य गच्छति न तं मनागपि प्रतीक्षते तथैवेदं सम्भाव्यत इति गम्योत्प्रेक्षा । तथा च वातसम्मुखं नीयमानः केतुर्यथा पुरः पुरश्चलति तत्र स्थितं वस्त्रं पुनर्वायुवशात् पश्चाद् गच्छति तद्वदेवेद-मपीत्युपमा । अत्रैव पुनः—शरीरं शनैः गच्छति चेतस्तु तद्रहितं सत् पश्चात् धावतीत्यसम्बन्धे सम्बन्धरूपा सम्बन्धेऽसम्बन्धरूपा द्व्यतिशयोक्तिः । आर्यावृत्तम् ।

(१) निष्क्रान्ताः सर्वं इति, तथा च दशरूपके—

"एकाहाचरितैकार्थमित्थमासन्ननायकम् ।
पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥" इति ।

अन्यच्च—तपोवनोपरोधो नाटके साक्षान्न निदर्शनीयः, स चाङ्कान्त एव वर्ण-नीयः, यदुक्तं विश्वनाथ कविराजेन—

"दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरञ्च यत् ।
शयनाधरपानादिनगराद्यवरोधनम् ॥
स्नानानुलेपने चैभिर्वर्णितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥

प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः॥"

दशरूपकेऽपि—

"दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम्।
संरोधं भोजनं स्नानं सुरतञ्चानुलेपनम्॥
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्" इति।

अत्रैव भगवान् भरताचार्य्योऽपि—

"युद्धं राज्यभ्रंशो मरणं नगररोधनञ्चैव।
अप्रत्यक्षकृतानि प्रवेशकैः संविधेयानि॥" इति।

अङ्कलक्षणं यथा दशरूपके—

"यदा तु सरसं वस्तु मूलादेव प्रवर्तते।
आदादेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः॥" इति।

अङ्कपदनिरूढिर्यथा नाट्यशास्त्रे—

"अङ्क इति रूढिशब्दो भावैरसैश्च रोहयत्यर्थान्।
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः॥" इति।

पुनस्तत्रैव—

"प्रस्तुतार्थोपसंहारो यत्राङ्कः सोऽभिधीयते।" इति।

अन्यच्च—

"अङ्के प्रवेशः पात्राणां नाहेतुः परिकीर्तितः।
अर्थप्रसङ्गमालम्ब्य तेषां निर्गम इष्यते॥
विस्तारो गुणसम्पत्तेः स्वभावादुद्धृतिर्नहि।
वैरस्याय भवेदङ्को दीर्घो रोगीव पश्यताम्॥
नैकत्राङ्के प्रशंसन्ति बहुपात्रविभावनाम्।
नचैकैकरसोद्रेकं नापि विस्तरयोजनम्॥
क्रोधप्रसादशोकाः शापोत्सर्गौ च विद्रवोद्वाहौ।
अद्भुतदर्शनमङ्के क्वापि प्रत्यक्षजा न स्युः॥
युद्धं राज्यभ्रंशो मरणं नगरोपरोधश्च।
अप्रत्यक्षाणि भवन्ति प्रवेशकैः संविधेयानि॥

न कार्यं शयनं रङ्गे नाट्ययोगमपेक्षता ।
केनचिद्व्यपदेशेन तद्विच्छेदश्च कारयेत् ।।
शस्त्राघातं वधश्चैव मैथुनं युद्धमेव च ।
नैते प्रत्यक्षतो नाट्ये दर्शनीयाः कथञ्चन ।।
भवेदर्थवशाद्वापि पुरुषः सहितः स्त्रिया ।
न च तच्चुम्बनं कुर्यान्निर्व्याजालिङ्गनं न च ।।
दन्तच्छेदं नखच्छेदं तथा लज्जाकरञ्च यत् ।
भोजनं सलिलं क्रीडां रङ्गमध्ये परित्यजेत् ।।
बीजार्थयुक्तियुक्तञ्च कृत्वा कार्यं यथारसम् ।
निष्क्रमन्तु ततः कुर्यात्सर्वेषां रङ्गवर्तिनाम् ।।"

इति नाटकीयनियमवचनानुरोधादेव तथा समाचरन् कविराह—

"इति निष्क्रान्ताः सर्वे" इति

इत्यभिज्ञानशाकुन्तलटीकायां सुबोधिन्याख्यव्याख्यायां प्रथमोऽङ्कः ।



## द्वितीयोऽङ्कः ।

( ततः प्रविशति विषण्णो विदूषकः ।)

विदूषकः—(निःश्वस्य ।)* भो हदो ह्मि । एदस्स मिअआसीलस्स रण्णो

---

* भो हतोऽस्मि । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि ।

---

( १ ) कथान्तर मारिप्सुः कविर्वस्तुसङ्घटनार्थं भूतभाव्यर्थपरिज्ञानायैकपात्रप्रयोज्यं विदूषकाभिधमर्थोपक्षेपकं प्रस्तौति, तत इति,–तथाहि :—विदुपकः शृङ्गारिनायकस्य परिहाससचिवस्तत्पार्श्ववर्तीच भवति, उक्तञ्च–रसार्णवसुधाकरे—

"एकाकी नीचपात्रो यो भूतभाव्यर्थसूचकः ।
अङ्के ह्यन्तराविष्टः प्रथमाङ्कमनाश्रितः ॥
प्रवेशनार्थं पात्राणां कथ्यतेऽसौ प्रवेशकः ।" इति ।

तत्र विदूषकः—

"विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः ।"

दर्पणेऽपि—

"शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः ।
भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥"

पुनस्तत्रैव—

"कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥" इति च

प्राकृतभाषायामेवायं व्यवहरति, यदुक्तम्—

"विदूषकविटादीनां पाठ्यं तु प्राकृतं भवेत् ।"

नाट्यशास्त्रेऽपि—

"चेटानां राजपुत्राणां श्रेष्ठीनाञ्चार्धमागधी ।
प्राच्या विदूषकादीनां योज्या भाषा अवन्तिजा ॥" इति ।

अस्य विदूषकचरितस्य दूरानुवर्तित्वादियं पताका तथा च—

"दूरानुवर्तिनी या च पताका सा कथा मता ।" इति श्रीकृष्णः ।

वअस्सभावेण णिव्विण्णो ह्मि । अअं मिओ, अअं वराहो, अअं सद्दूलो त्ति मज्झण्णे वि गिह्मविरलपाअवच्छाआसु वणराईसु आहिण्डीअदि अडवीदो अडवी । पत्तसंकरकसाआइं कडुआइं गिरिणईजलाइं पीअन्ति । अणिअदवेलं सुल्लमंसभूइट्ठो आहारो अण्हीअदि । तुरगाणुधावणकण्डिदसंधिणो रत्तिम्पि णिकामं सइदव्वं णत्थि । तदो महन्ते एव्व पच्चूसे दासीए पुत्तेहिं सउणिलुद्धएहिं कण्णोवघादिणा वणग्गमणकोलाहलेण पडिबोधिदो म्हि । एत्तिकेण वि दाणिं पीडा ण णिक्कमदि । तदो गण्डस्स उवरि पिडओ संवुत्तो । हिओ किल अह्मेसु ओहीणेसु तत्तहोदा मआणुसारिणा अस्समपदं पविट्ठेण मम अधण्णदाए तावसकण्णआ सउन्दला

अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि [1]ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यतेऽटवीतोऽटवी । [2]पत्रसंकरकषायविरसानि कटूनि गिरिनदीजलानि पीयन्ते । [3]अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते । [4]तुरगानुधावनकण्डितसंधे रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याः पुत्रैः शकुनिलुब्धकैः कर्णोपघातिना वनगमनकोलाहलेन प्रतिबोधितोऽस्मि । एतावतापीदानीं पीडा न निष्क्रामति । ततो गण्डस्योपरि पिटकः[5] संवृत्तः । ह्यः किलास्मास्ववहीनेषु[6]

(१) ग्रीष्मे विरला न अतिघना पादपानां छाया यासु तथाभूतासु ।

(२) पत्राणां सङ्करः भिन्नजातीयानामेकत्र मिश्रणं तेन कषायाणि अत एव कटूनि विरसानि ।

(३) न नियता वेला यस्मिन् कर्मणि यथा तथा, कदाचित् दिवा कदाचित् रात्रौ कदाचित् सायाह्ने, कदाचित् प्रातः इत्यर्थः । अत्र नियमः—

"दिवा यामद्वयादर्वाग्रात्रौ यामं न लङ्घयेत् ।
अतिक्रमे महाव्याधिं जनयत्येव भोजनम् ॥"

शूल्यमांस भूयिष्ठः लोहशलाकया पक्वमांसबहुल इत्यर्थः । लोहशलाकया मांसं सङ्ग्रथ्य यत्पच्यते तच्छूल्यमांसम् । "अण्हीअदि" इत्यत्र "भुजोभुञ्जजिम जेम कम्माण्हसमाण"—इत्यादिनाण्हादेशः ।

(४) तुरगाणाम् अश्वानाम् अनुधावनेन कुण्डिता कुट्टिता अङ्गानां सन्धिः यस्य स तस्य ।

(५) पिटकः स्फोटकः "स्फोटकः पिटको गण्डः" इत्यभिधानचिन्तामणिः । स्फोटस्योपरि स्फोटः संवृत्त इत्यर्थः ।

(६) ह्यः गतदिवसे अस्मासु अवहीनेषु परस्परं विश्लिष्टेषु सत्सु ।

दिट्ठा। संपदं णअरगमणस्स कहं वि ण करेदि। अज्ज वि से तं एव्व चिन्तअन्तस्स अक्खीसु प्रभादं आसि। का गदी। जाव णं किदाआआरपरिग्गहं पेक्खामि। (इति परिक्रम्यावलोक्य च) एसो वाणासणहत्थो वणपुप्फमालाहारी हिअअणिहिदपिअअणो इदो ज्जेव आअच्छदि पिअवअस्सो। होदु। अङ्गभङ्गविअलो विअ भविअ चिट्ठिस्सं। जइ एव्वं वि णाम विस्समं लहेअं। (इति दण्डकाष्ठमवलम्ब्य स्थितः)

(ततः प्रविशति यथानिर्दिष्टपरिवारो राजा।)

राजा—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते॥ १॥

---

तत्रभवता मृगानुसारिणाश्रमपदं प्रविष्टेन ममाधन्यतया तापसकन्यका शकुन्तला दृष्टा। सांप्रतं नगरगमनस्य कथामपि न करोति। अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्। का गतिः। यावत्तं कृताचारपरिग्रहं पश्यामि। एष बाणासनहस्तो वनपुष्पमालाधारी हृदयनिहितप्रियजन इत एवागच्छति प्रियवयस्यः। भवतु। अङ्गभङ्गविकल इव भूत्वा स्थास्यामि। यद्येवमपि नाम विश्रमं लभेय।

---

(१) काममिति—इयं प्रिया शकुन्तला कामम् अत्यन्तं सुलभा सुखेन लब्धुं शक्या न, तु किन्तु मनः तस्याः भावानां स्वानुरागव्यञ्जकस्मितकटाक्षादीनां दर्शनेन तच्चेष्टावलोकनेन आयासि सप्रयासं, कदा घटते कथं वा घटत इति बहु वितर्कपर्याकुलमित्यर्थः, तथाहि— मनसिजे भगवति कामदेवे अकृतार्थे अकृतकृत्ये तादृक्परस्परालिङ्गनादिरूपसफलतामलभमानेऽपीत्यर्थः, उभयोः तस्याः मम च प्रार्थना समागमाभिलापः रतिम् अनुरागं कुरुते सम्पादयति, "अहं तत्र गमिष्यामि, तया सह एवम् आलपिष्यामि" इत्येवंरूपम् आशानिबन्धनं सन्तोषं जनयतीत्यर्थः।

अत्र—

"रतिः कामस्त्रियां रागे सुरतेऽपि रतिः स्मृता।"

इति धरणिवचनाद् रतिशब्दस्य कामपत्नीपर्यायतया अकृतार्थः अलब्धरतिः कामः रतिं कामपत्नीं कुरुत इति विरोधः, अनुरागार्थत्वादस्य परिहारः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च। आर्या वृत्तम्। अनेन विलासनामकं नाटकाङ्गं प्रदर्शितं भवति यदुक्तम्—

( स्मितं कृत्वा[१] ) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते[२] । कुतः—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेषयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति ॥२॥

---

"समीहा रतिभोगार्था विलास इति कथ्यते ।"

श्रीकृष्णोऽपि—

"विलासः सङ्गमार्थस्तु व्यापारः परिकीर्तितः ।"

रसार्णवसुधाकरेतु—

"सङ्गमोपायरचिता प्रारब्धाध्यवसायतः ।
सङ्कल्पेच्छासमुद्भूतिरभिलाष इतीरितः ॥"

इति पूर्वानुरागविप्रलम्भाद्यभिलाषो नामावस्था प्रदर्शिता ।

अत्रैव भगवान् भरताचार्य्योऽपि—

"व्यवसायात्समारब्धः सङ्कल्पेच्छासमुद्भवः ।
समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः ॥"

(१) ईषद्विहस्येत्यर्थः, यदुक्तम्—

"ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥" इति ।

(२) एवम् इत्थम् आत्मनः स्वस्य अभिप्रायेण आशयेन सम्भाविता सम्भावनया स्थिरीकृता कल्पितेत्यर्थः, इष्टजनस्य प्रियजनस्य चित्तवृत्तिः मनस आशयो येन तथाभूतः, मामेवोद्दिश्य कुशसूचिपरिक्षतव्याजेन तया मयि दर्शितो निजानुराग इति मन्यमान इत्यर्थः, प्रार्थयिता कामी विडम्ब्यते विप्रलभ्यते वञ्चितो भवतीत्यर्थः ।

(२) स्निग्धमिति—अन्यतः मदन्येऽपि विषये नयने प्रेषयन्त्या निक्षिपन्त्या तया प्रियया यत् स्निग्धं सानुरागं वीक्षितं साभिलाषमवलोकितम् इत्यर्थः, एतल्लक्षणं यथाह भगवान् भरताचार्य्यः—

"व्याकोशमध्या मधुरा स्मेरताराभिलाषिणी ।
सानन्दाश्रुकृता दृष्टिः स्निग्धेयं रतिभावजा ॥" इति ।

विदूषकः—(तथास्थित एव ।) *भो वअस्स, ण मे हत्थपाआ पसरन्ति । ता वाआ मेत्तएण जआवीअसि । जअदु जअदु भवं ।

राजा—(विलोक्य स्वगतम्) कुतोऽयं गात्रोपघातः ।

विदूषकः— कधं कुतो त्ति, सअं ज्जेव अच्छिं भञ्जिअ अस्सुकारणं पुच्छसि । †

राजा—न खल्ववगच्छामि, भिन्नार्थमभिधीयताम् ।

विदूषकः—भो वअस्स, जं वेदसो खुज्जस्स लीलं विडम्बेदि तं किं अत्तणो पहावेण, अधवा णईवेअस्स । ‡

---

* भो वयस्य, न मे हस्तपादं प्रसरति तद् वाचा मात्रेण जाप्यसे । जयतु जयतु भवान् । हस्तपादमित्यत्र प्राण्यङ्गत्वात् "द्वन्द्वश्चप्राणितूर्यसेनाङ्गानाम्" इत्येकवद्भावः ।

† कथं कुत इति, स्वयमेवाक्षि भङ्क्त्वाश्रुकारणं पृच्छसि ।

‡ वयस्य ! यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण अथवा नदीवेगस्य ।

---

"विकाशिस्निग्धमधुरा चतुरे बिभ्रती भ्रुवौ ।
कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाभिधीयते ।। इत्यपि केचित् ।

नितम्बयोः कव्याः पश्चात् स्थितावयवयोः गुरुतया भारवत्तया विलासादिव विभ्रमादिव यत् मन्दं मृदु यथा तथा यातं गतं, तथा मा गाः न गच्छ इति इत्थम् उक्त्वा उपरुद्धया सख्या प्रियंवदया निवारितगमनया तया शकुन्तलया, सा अतिप्रियतमा सखी प्रियंवदा यदपि यत् किमपि सासूयं सेर्ष्यं तत्र स्थित्यर्थम् उक्ता तत् सर्वं स्निग्धवीक्षणमन्दगतिसेर्ष्यवचनादि, अहम् एव परम् उत्कृष्टम् अयनम् आश्रयो यस्य तत् तथोक्तमित्यर्थः, अहो आश्चर्यं, कामी कामातुरः सर्वत्र स्वताम् आत्मीयतां पश्यति स्वाभिप्रायरूपतां जानाति, ललितविलोकनादीनां स्वाभाविकत्वेनापि सम्भवात् ममैव अर्थे कृतमिति मन्यत इत्यर्थः । अत्र विलासादिवेति सम्भावनामात्रत्वात् हेतुनिर्देशाच्च हेतूत्प्रेक्षा अनेन विलासो नाम स्त्रीणां सात्त्विकालङ्कारोऽभिहितः । तदुक्तं श्रीकृष्णकविना—

"तात्कालिको विकारस्तु विलासः प्रियदर्शनात् ।"

अत्रैव विश्वनाथोऽपि—

"यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ।।" इति ।

शार्दूलविक्रीडितं वृत्तम् ।

राजा—नदीवेगस्तत्र कारणम् ।

विदूषकः—मम वि भवं । ॐ

राजा—कथमिव ।

विदूषकः—एव्वं राअकज्जाणि उज्झिअ तारिसे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं । जं सच्चं अहं उण ब्रह्मणो पच्चहं सावदसमुच्छारणेहिं संखोहिअसंधिबन्धणाणं मम गत्ताणं अणीसो म्हि संवुत्तो । त्ता पसीद मे, विसज्जिदुं मं एक्काहं वि दाव विस्समिदुं । †

राजा—(स्वगतम् ।) अयं चैवमाह । ममापि कण्वसुतामनुस्मृत्य ‡मृगयाविक्लवं चेतः । कुतः—

न नमयितुमधिज्यमस्मि शक्तो
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥३॥

ॐ ममापि भवान् ।

† एवं राजकार्याण्युज्झित्वा तादृश आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम् । यत्सत्यमहं पुनर्ब्राह्मणः त्यहं श्वापदसमुत्सारणैः ॐसंक्षोभितसंधिबन्धनानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसीद मे विसर्जितुं मामेकाहमपि तावद्विश्रमितुम् ।

‡ मृगयां प्रति पराङ्मुखमित्यर्थः ।

(३) नेति—अधिज्यं ज्याम् अधिगतं सज्यमित्यर्थः, तथा आहितः सायको यस्मिंस्तत् तथोक्तं सशरमित्यर्थः, इदं प्रत्यक्षेण परिदृश्यमानं धनुः मृगेषु आश्रममृगेषु नमयितुम् आकर्णम् आकृष्टुं न शक्तोऽस्मि न समर्थोऽस्मि, यैः मृगैः प्रियायाः शकुन्तलायाः सहवसतिम् एकत्रावासम् उपेत्य प्राप्य मुग्धानि स्वभावमनोरमाणि यानि विलोकितानि अवलोकनानि, तेषाम् उपदेशः अज्ञातज्ञापनं कृत इव । अयमत्राशयः—इयं शकुन्तला तपोवनमृगेभ्यो विविधविधमुग्धावलोकनोपदेशं जग्राह, ततश्च सर्वे एवैते तस्या गुरुस्थानीयाः, तदेकायत्तचित्ततया ममापि तथैवेति नैतेषु शरप्रहारः समुचितः । अत्रोत्प्रेक्षालङ्कारः, काव्यलिङ्गञ्च । अनयोरङ्गाङ्गिभावेन संसृष्टिः । पुष्पिताग्रावृत्तम् ।

ॐ संक्षोभितं सन्धिबन्धनं येषां तथाभूतानाम् , अनवरतं त्वदनुधावतो मम शरीरसन्धिस्थानानि विश्लथानि जातानीत्यर्थः ।

विदूषकः—(राज्ञो मुखं विलोक्य ।) अत्तभवं किं वि हिअए करिअ मन्तेदि । अरएणे क्खु मए रुदिअं आसि । ❀

राजा—(सस्मितम् ।) किमन्यत् । अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदूषकः—(सपरितोषं) तेण हि तुमं चिरं जीअ । † (इति गन्तुमिच्छति ।)

राजा—वयस्य, तिष्ठ । सावशेषं मे वचः ।

विदूषकः—आणवेदु भवं ? ‡

राजा—विश्रान्तेन भवता ममाप्यनायासेऽन्यस्मिन् कर्मणि सहायेन भवितव्यम् ।

विदूषकः—किं मोदअखण्डिआए । ×

राजा—न हि, यत्र वक्ष्यामि !

विदूषकः—तेण हि अअं सुगहीदो खणो । +

राजा—कः कोऽत्र भोः ।

(प्रविश्य ।)

दौवारिकः—(प्रणम्य ।) आणवेदु भट्टा । ÷

राजा—रैवतक, सेनापतिस्तावदाहूयताम् ।

दौवारिकः—तह । (इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य ।) एदु एदु अज्जो एसो अएणावअणुक्कण्ठो भट्टा इदो एव्व दिएणदिट्ठी चिट्ठदि । उवसप्पदु एं अज्जो ।SS

❀ अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये खलु मया रुदितमासीत् ।

† तेनहि त्वं चिरं जीव ।

‡ आज्ञापयतु भवान् ।

× किं मोदकखण्डिकायाम् ।

+ तेन ह्ययं सुगृहीतः क्षणः ।

÷ आज्ञापयतु भर्ता ।

SS तथा । = एतु एतु आर्यः, एप आज्ञावचनोत्कण्ठो भर्तैत एव दत्तदृष्टिः तिष्ठति । उपसर्पतु एनमार्यः ।

सेनापतिः—(राजानमवलोक्य।) दृष्टदोषापि मृगया स्वामिनि केवलं गुणाय एव संवृत्ता। तथा हि देवः—

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम्।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥४॥

(उपेत्य) जयतु जयतु स्वामी। स्वामिन्! गृहीतमृगप्रचारं सूचितश्वापद-मरण्यम्। तत किमिहावस्थीयते।

राजा—भद्रसेन! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन।

सेनापतिः—(जनान्तिकम्) सखे, माधव्य! स्थिरप्रतिबन्धो भव। अहं तावत्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये। (प्रकाशम्) प्रलपत्वेष वैधेयः। ननु प्रभुरेव निदर्शनम्।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्वानामपि लक्ष्यते विकृतिमच्चितं भयक्रोधयोः।

---

(४) मृगया नूनमुपकारायैवेति प्रमाणयन् आह, अनवरतेति—अनवरतं निरन्तरं धनुषः ज्यायाः आस्फालनेन आकर्षणेन क्रूरः कठिनः पूर्वः शरीरपूर्वभागो यस्य तथाभूतं "तथा" रवेः किरणान् सहिष्णु सोढुं समर्थम् आतपेऽप्यक्लान्त-मित्यर्थः, (अनेन दुःखसहिष्णुत्वं ध्वन्यते) स्वेदलेशैः घर्मोदबिन्दुभिः "अपि" अभिन्नं न सम्बद्धं किम्पुनः स्वेदैः, अपचितं कृशम् अपि व्यायतत्वात् दीर्घत्वात् दृढत्वाद्वा अलक्ष्यं कृशत्वेन न प्रतीयमानं प्राणः बलम् एव सारः स्थिरांशो यत्र तथोक्तं गात्रं वपुः गिरिषु चरतीति गिरिचरः पर्वतीयः नागः करीव देवः बिभर्ति धारयति।

एतान्येव विशेषणानि गजगात्रपक्षेऽपि योज्यानि, तथाहि—धनुषः प्रियाल-द्रुमस्य ज्यायां भूमौ आस्फालनेन क्रूरः पूर्वः शरीरपूर्वभागो यस्य तत्तथोक्तं, "धनुः संज्ञा प्रियालद्रौ राशिभेदे शरासने" "ज्या मौर्वी च वसुन्धरा" इति विश्वधरणी। रविकिरणसहिष्णु सूर्यकिरणान् सोढुं समर्थं स्वेदलेशैरभिन्नं स्वेद-बिन्दुरहितं, अपचितम् अपि नातिगुरु अपि व्यायतत्वात् अलक्ष्यम् कृशत्वेन न परि-लक्ष्यमाणम् एवंभूतं गात्रं बिभर्तीति भावः।

(५) मेद इति—मेदसः वसायाः छेदेन स्वल्पीभावेन मृगयाजनितश्रमादित्यर्थः, कृशम् उदरं यस्य तत्, अतएव लघु भारहीनं तत एव उत्थानयोग्यम् उद्योग-

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥५॥

विदूषकः—अवेहि रे उच्छाअहेतुअ ! अत्तभवं पइदिं आपण्णो। तुमं दाव दासीए पुत्तो अडवीदो अडवीं आहिण्डन्तो णरणासिआलोलुवस्स जिण्णरिच्छस्स कस्स वि मुहे पडिस्ससि। ❋

राजा—भद्र सेनापते! आश्रमसंनिकृष्टे स्थिताः स्मः। अतस्ते वचो नाभिनन्दामि। अद्य तावत्—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।

❋अपेहि रे उत्साहहेतुक! अत्रभवान् प्रकृतिमापन्नः। त्वं तावत् दास्याः पुत्रोऽटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णऋक्षस्य कस्यापि मुखे पतिष्यसि।

योग्यं "उद्योगे च तथोत्थानम्" इति धरणिः, वपुः शरीरं भवति जायते। सत्त्वानां प्राणिनां चित्तं मनः भयक्रोधयोः निमित्तयोः विकृतिमत् विकारयुक्तं लक्ष्यते अनुभूयते, जन्तूनां चित्तं भये ईदृक् भवति क्रोधे च ईदृगिति ज्ञायते। चले चञ्चले लक्ष्ये वध्ये इषवः बाणाः सिध्यन्ति सफला भवन्ति इति यत् सः धन्विनां धनुर्धारिणाम् उत्कर्षः, तस्मात् लोकाः मृगयां यत् व्यसनं दोषैकहेतुमित्यर्थः, वदन्ति तन्मिथ्यैव, ईदृक् एतादृशः विनोदः आनन्दः कुतः कस्मात्, मृगयाम् अन्तरेण चेतस ईदृङ् मनोविनोदनोपायो नान्यत्र कुत्रापीति भावः।

अत्र च—यस्त्वया राज्यकार्याणीत्यादिना मृगयाया दोषमुद्भाव्य पुनस्तस्या एव "अनवरत"—इत्यादिना "मेदश्छेद"—इत्यादिना च गुणत्वेन प्रतिपादनात् मृदवं नाम वीथ्यङ्गं प्रदर्शितं भवति—तथा च दर्पणे—

"दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्।"

अत्रैव—श्रीकृष्णोऽपि—

"दोषाणां यद् गुणत्वेन कथनं मार्दवं हि तत्।
गुणानामपि दोषत्वकथनं चापि मार्दवम्॥"

मृगयायां व्यसनस्य मिथ्यात्वे वाक्यत्रयस्य हेतुत्वेनोपात्तत्वात् काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

(६) दीर्घदुःखदग्धहृदयाः सहृदयाः सततमित्थमभिलषन्ति यदपरोऽपि मादृश एवंविधदुःखभागी मा भूयात्, अतएव हि विरहविभिन्नमर्मा पौरवोऽयं

विश्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥६॥

सेनापतिः—यथा प्रभविष्णवे रोचते ।

राजा—तेन हि निवर्तय पूर्वगतान् धनुर्ग्राहिणः, यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति दूरात्परिहरन्ति च तथा निषेद्धव्याः । पश्य—

शमप्रधानेषु तपोवनेषु
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला अपि सूर्यकान्ता-
स्तदन्यतेजोऽभिभवाद्वमन्ति ॥ ७ ॥

---

तिरश्चां सामान्यमपि तापमसहमानो मनसा तेषामानुकूल्यं चिन्तयन्नाह, गाहन्तामिति-महिषाः शृङ्गैः मुहुः वारंवारं ताडितम् उत्फालितम् उच्चालितमित्यर्थः, निपानसलिलम् अल्पजलाशयजलं, गाहन्ताम् आलोडयन्तु, यद्यपि "आहावस्तु निपानं स्यादुपकूप जलाशये" इत्यमरवचनात् निपानशब्देन तादृशः क्षुद्रजलाधारोऽभिधीयते यत्र पशूनां जलपानार्थं कूपादुदकमुद्धृत्य स्थाप्यते तथापीह वने तदसम्भवाल्लक्षणया निरुक्तलक्षण एव जलाशयो ग्राह्यः । छायायाम् अनातपप्रदेशे बद्धं रचितं कदम्बकं समूहो येन तथाभूतं मृगाणां कुलं रोमन्थं भुक्तस्य तृणादेः उद्गीर्य्य चर्वणम् अभ्यस्यतु विदधातु, वराहाणां वनशूकराणां पतिभिः अध्यक्षैः विश्रब्धैः मृगयापरित्यागाद् भयाभावतया कृतविश्वासैः सद्भिः पल्वले अल्पजलाशये मुस्तानां मुस्तेति प्रसिद्धघासविशेषाणां क्षतिः क्षयः भक्षणमित्यर्थः क्रियताम्, इदं हस्तस्थितम् अस्मद्धनुः ज्यया बन्धः ज्याबन्धः मौर्वीबन्धनमित्यर्थः शिथिलः ज्याबन्धो यस्य तथाभूतम् अवरोपितमौर्वीकं सत् विश्रामम् अवकाशं लभतां विश्राम्यतु । अत्र स्वभावोक्तिरलङ्कारः, यौगपद्येन कार्यकारणयोः कथनादतिशयोक्तिश्च । शार्दूलविक्रीडितं वृत्तम् ।

(७) दूरत एव तपोवन परिहारे समुचितं कारणमुपन्यस्यति, शमेति—शमः शान्तिरेव प्रधानं येषां तेषु तपोवनेषु गूढं गुप्तं सामान्यजनादृश्यमित्यर्थः, दाह एव आत्मा यस्य तथाभूतं दाहस्वभावं तेजः अस्ति हि यतः स्पर्शः अनुकूलः येषां तथाविधाः सूर्यं इव कान्ता मनोहरा अपि तपस्विनस्तथा प्रसिद्धाः सूर्यकान्तमणयोऽपि अन्यस्य स्वेतरस्य नृपादेः सूर्यस्य च तेजसा अभिभवात् पराभवात् तत् प्रसिद्धं स्वीयं सुगुप्तं दाहात्मकं तेजः वमन्ति प्रकटयन्ति, अभिभवकर्तारमभिशापादिना भस्मसात्कुर्वन्तीत्यर्थः ।

सेनापतिः—यथाज्ञापयति स्वामी ।

विदूषकः—धंसदु दे उच्छाहवुत्तन्तो। रे उच्छाअहेदुअ ! निक्कम णिक्कम । ❀

( निष्क्रान्तः सेनापतिः । )

राजा—(परिजनाम् विलोक्य ।) अपनयन्तु भवन्तो मृगयावेशम् । रैवतक ! त्वमपि स्वं नियोगमशून्यं कुरु ।

परिजनः—जं देवो आणवेदि ।† ( इति निष्क्रान्तः । )

विदूषकः—किदं भवदा संपदं णिम्मक्खिअं । ता एदस्सिं पादवच्छाआए विरइदलदाविदाणदंसणीआए सुहासणे णिसीददु भवं, जाव अहं वि सुहासीणो होमि । ‡

राजा—गच्छाग्रतः ।

विदूषकः—एदु एदु भवं । ×

( इत्युभौ परिक्रम्योपविष्टौ । )

राजा—सखे माधव्य ! अनवाप्तचक्षुःफलोऽसि । येन त्वया द्रष्टव्यानां परं न दृष्टम् ।

विदूषकः—णं भवं ज्जेव अग्गदो मे वट्टदि । +

राजा—सर्वः खलु कान्तमात्मानं पश्यति । अहन्तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

---

❀ ध्वंसतां त उत्साहवृत्तान्तः । रे उत्साहेतुक ! निष्काम निष्काम ।

† यद्देव आज्ञापयति ।

‡ कृतं भवता सांप्रतं निर्मक्षिकम् । तदेतस्यां पादपच्छायायां विरचितलतावितानदर्शनीये सुखासने निषीदतु भवान् , यावदहमपि सुखासीनो भवामि ।

× एतु एतु भवान् ।

+ ननु भवानेवाग्रतो मे वर्तते ।

---

यथाहि सूर्यकान्तमणिः सुखस्पर्शोऽपि ।सूर्यकिरणसम्पर्काद् दाहात्मकं तेज उद्वमति तथैवैते तपस्विनोऽपीति भावः । अत्र श्लेषानुप्राणितोदृष्टान्तालङ्कारः, उपमा च । उपजाति वृत्तम् ।

विदूषकः—( स्वगतम् । ) होदु, से अवसरं ण दाइस्सं । (प्रकाशम् ।) भो वअस्स ! जइ सा तवस्सिकण्णआ अणब्भत्थणीआ दीसदि ता किं ताए दिट्ठआए । ॐ

राजा—धिङ्मूर्ख !

निवारितनिमेषाभिर्नेत्रपंक्तिभिरुन्मुखः ।
नवामिन्दुकलां लोकः केनभावेन पश्यति ॥ ८ ॥

विदूषकः—ता तुह्मे जेव कधेहि । †

राजा—सखे ! किमन्यत् न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते । तथाहि—

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगमम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥९॥

ॐ भवतु, अस्यावसरं न दास्ये । भो वयस्य ! यदि सा तपस्विकन्यकानभ्यर्थनीया दृश्यते तत् किं तया दृष्टया ?

† तत् त्वमेव कथय ।

(८) नहि लिप्सयैव सर्वः सर्वत्राभिरमत इत्याह, निवारितेति—अरे मूर्ख ! लोकः उन्मुखः सन् निवारिताः निमेषाः यासु ताभिः निर्निमेषाभिरित्यर्थः नेत्रपंक्तिभिः नवां नूतनोदिताम् इन्दुकलां शशिलेखां केन भावेन पश्यति, नहि तत्र कस्यचन लिप्सा भवति तथापि सर्वं एव जनस्तां सादरं सस्नेहञ्च मुहुर्मुहुरवलोकयति परां मुदमप्यधिगच्छति, अत्र आनन्दसन्दोहजनकत्वेन लोकोत्तरं सौन्दर्यम् एव हेतुः।

( ९ ) अपरिहार्यत्वमेव तावदस्या द्रढयति, सुरेति-सुरयुवतिः सुराङ्गना मेनकेत्यर्थः, तस्याः सम्भव उत्पत्तिर्यस्य तत् तथोक्तं "मेनकागर्भसम्भूतमित्यर्थः, किल प्रसिद्धम् । इत्थं यदीयं मेनकासम्भवा, मुनिसम्भवा नेति पुनरस्याः कथं मुन्यपत्यत्वमित्याह-तया मेनकया पूर्वम् उज्झितं परित्यक्तं सत् पश्चात् अधिगतं मुनिनेतिशेषः, मुनेः कण्वर्षेरपत्यम्, अनेन नायं मुनिरस्या जनकः किन्तु पालक इति मुन्यपत्यत्वाभावात् नूनमियं क्षत्रियस्य मम परिणेतुमर्हति प्रतीयते, तत्कीदृशमित्याह, अर्कस्येति—अर्कस्य अर्कवृक्षस्य उपरि च्युतं पतितं शिथिलभावेनावस्थितं नवमालिकाया अभिनववनमल्लिकायाः कुसुमम् इव यथा, "इयं शकुन्तलावर्तत"इति शेषः ।

यथा कस्यचन तरोरुपरि पतितमन्यतरोः कुसुमं केवलं तदीयकुसुमत्वशङ्कामुपजनयति तथैवान्यसम्भवाया अप्यस्याः शकुन्तलाया मुनिहस्तगतत्वादेतत्स-

विदूषकः—( विहस्य । ) भो जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिणीए अहिलासो भोदि, तह इत्थिआरअणपरिभोइणो भवदो इअं अब्भत्थणा । ❀

राजा—सखे ! न तावदेनां जानासि येनैवमवादीः ।

विदूषकः—तं क्खु रमणिज्जं णाम, जं भवदो वि विह्मअं उप्पादेदि ।†

राजा—वयस्य ! किं बहुना—

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥१०॥

❀ यथा कस्यापि ❀पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवति , तथा स्त्रीरत्नपरिभोगिनो भवत इयमभ्यर्थना ।

† तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति ।

स्भवत्वं सम्भाव्यते, न पुनः परमार्थत इयमेतत्सम्भवेत्यर्थः । अत्र कुसुममिवेत्युपमानादुपमालङ्कारः । आर्याजातिः ।

(१०) अस्याः सौन्दर्यमेव द्रढयति; चित्र इति–धातुः विधातुः विभुत्वं प्रभुत्वं सृष्टावितिशेषः, तस्याः शकुन्तलाया वपुः शरीरञ्च अनुचिन्त्य विचार्य्य मे मम "मानसे इत्थम् आयाति" यद् विधिना सकललोकैकशिल्पिना प्रजापतिना चित्रे चित्रफलके निवेश्य रेखामात्रम् आलिख्य "विशेषसौन्दर्यसम्पादनार्थमादावस्याः सामान्यमाकारं केवलमेकेनैव वर्णेन चित्रयित्वा पश्चाद् यथास्थानं विविधैर्वर्णैः सम्भूष्येत्यर्थः" "ततः" परिकल्पितः कृतः सत्वयोगः प्राणसम्बन्धो यस्यास्तथाभूता सर्वप्रपञ्चसृष्टिविलक्षणनिर्माणप्रकारेयं शकुन्तला रूपाणाम् उच्चयो येभ्य इति रूपोच्चयस्तेन चन्द्रचन्दनरोलम्बचकोरकुमुदादितः सङ्गृहीतेन सौन्दर्यसमूहेन "तत्रापि" मनसा ननु कठिनेन करेण कृता निर्मिता किम् ? अतएव अपरा लोकविलक्षणा स्त्रीरत्नसृष्टिः उत्कृष्टा स्त्रीसृष्टिः प्रतिभाति प्रतीयते ।

❀ भाषायां "पेडखजूर" इति कथ्यते। यथा सुचिरं पिण्डखर्जूरभक्षणेनोद्वेजिता लोका अन्तरान्तरा आम्लरस वस्तुभक्षणाभिलाषिणो भवन्ति तथैव वनिताकुलशेखरमणीनामन्तःपुररमणीनां परिभोगेणोद्वेजितस्य तवापि, वने चिरं कृतनिवासायामस्यामभिलाष इत्यर्थः ।

विदूषकः—जइ एव्वं तदो पच्चादेसो दाणिं रूववदीणं । ❀

राजा—इदं च मे मनसि वर्तते—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै—
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥११॥

❀ यद्येवं तदा प्रत्यादेश इदानीं रूपवतीनाम् ।

सर्वाङ्गसुन्दरमद्भुतं किमपि रूपं निर्मित्सुः कुशलश्चित्रकारो यथा प्रथममेकम् आदर्शभूतं चित्रं तथा सर्वाणि सौन्दर्यसारभूतानि द्रव्याणि च पुरतः परितः परिस्थाप्य पट्टिकायामादावेकवर्णाः केवला रेखा एव विलिखति ततश्च आदर्शचित्रं मुहुर्मुहुरवलोक्य ततोऽप्यतिवैलक्षण्येन स्वीयं वैदुष्यमाविष्कर्तुं यथास्थानं विविधैर्वर्णैस्तद्विभूषयति तथैव सृष्टिविलक्षणविचक्षणो भगवान् प्रजापतिरपि स्वकल्पनाकलितमस्याः स्वरूपं हृदि एव निधाय तथा सौन्दर्यराशिभूतान्यस्याः सर्वाण्युपादानकारणानि च सङ्गृह्य नूनमिमामादौ महता सावधानेन मनसा चित्रवदालिलेख, ततश्च नेतः परं सौन्दर्यमुत्पादयितुं मया शक्यत इति जातनिश्चयः सन् प्राणैरियं संयोजयामास, अतएव हि अस्या अलौकिकं सौन्दर्यं लोकोत्तरा कोमलता चेति भावः।

अत्र सन्देहालङ्कारः, स्त्रीरत्नसृष्टिरित्यत्र अभेदे भेदलक्षणाऽतिशयोक्तिः, पूर्वार्द्धवाक्यं प्रति परार्द्धवाक्यस्य हेतुत्वात्काव्यलिङ्गञ्च । वसन्ततिलकं वृत्तम् ।

(११) अस्यां स्वीयं मनोभावं प्रकटयति, अनाघ्रातमिति—अनघं पापरहितं निर्दोषमित्यर्थः, तस्याः शकुन्तलाया रूपम्, अनाघ्रातं केनापि अगृहीतसौरभं पुष्पम् "इव", कररुहैः नखैः न लूनम् अच्छिन्नं किसलयं नवं पल्लवम् "इव", न आ समन्ताद् विद्धं वेधादिदोषरहितमित्यर्थः, उक्तञ्च रत्नसारसमुच्चये :—

"वृत्तं स्निग्धसमुज्ज्वलं शुचि गुरु श्वेतं बृहत्कोमलं ।
स्वच्छान्तं समसूक्ष्मवेधसुरभित्रासादिभिर्वर्जितम् ॥"

अथवा अनाविद्धम् अकुटिलं, तथाभूतस्यापि दुष्टत्वात्—"आविद्धं कुटिलं भुग्नम्" इत्यमरः, रत्नं महार्घं मणिम् "इव," न आस्वादितः रसो यस्य सः तम् अगृहीतास्वादम् अननुभूतरसमित्यर्थः, नवम् अभिनवं तत्कालोपनीतमित्यर्थः मधु क्षौद्रम् "इव," पुण्यानां सुकृतानाम् अखण्डं सकलं सम्पूर्णमित्यर्थः फलम् "इव," स्थितम् इह जगति एतद्विधमूर्तिमन्तं कम् भोक्तारं समुपस्थास्यति लोकोत्तरस्त्रीरत्नसृष्टेः साफल्यार्थमनुरूपं कं वरं सम्प्रापयिष्यति । "इति" अहं न जाने स्वदृशा द्रष्टुमशक्यत्वात् तथाविधरूपानुरूपतरुणसृष्टेरभावाच्चेति भावः।

विदूषकः—तेण हि लहु लहु गच्छदु भवं । मा जाव सा कस्स वि तवस्सिणो इङ्गुदीतेल्लमिस्सचिक्कणसीस्सस्स हत्थे पडिस्सदि । *

राजा—परवती खलु तत्रभवती । न च संनिहितोऽत्र गुरुजनः ।

विदूषकः—अध तुह उवरि कीदिसो से चित्तराओ । †

राजा—वयस्य निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि—

अभिमुखे मयि संहृतमीक्षणं
हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥१२॥

---

* तेन हि लघु लघु गच्छतु भवान् । मा तावत् सा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य हस्ते पतिष्यति ।

† अथ तव उपरि कीदृशोऽस्याश्चित्तरागः ।

---

अत्र शकुन्तलारूपस्यैकस्य वस्तुनो बहूपमानेन निदर्शनान्मालोपमालङ्कारः । शिखरिणी वृत्तम् ।

(१२) अभिमुख इति—मयि अभिमुखे सम्मुखे सति "तया" ईक्षितं मदवलोकनं संहृतम् उपसंहृतं सङ्कोचितमित्यर्थः "अनेन शृङ्गारलज्जा ध्वन्यते" "तया" इति सर्वत्र योजनीयम्, अन्यत् निमित्तं यस्य तदन्यनिमित्तम् अन्यहेतुकं यथा तथा कृत उदयो यस्य तथाभूतं हसितं, अत्र मातृगुप्तः—

"विकासितकपोलान्तमुत्फुल्लामललोचनम् ।
किञ्चिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः ॥"इति"॥

"अनेन चास्या नायिकानुरागो व्यज्यते"

तथाच, विश्वनाथः—

"दृष्ट्वा दर्शयति व्रीडां सम्मुखं नैव पश्यति ।"
"यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा ॥"

महर्षिर्वात्स्यायनोऽपि—

"यत्किञ्चिद् दृष्ट्वा विहसितं करोति ।"

अतः अस्मात्कारणात् तया विनयेन सच्छिक्षाजनितसंस्कारेण वारिता प्रतिषिद्धा वृत्तिः प्रसरो यस्य सः मदनः न विवृतः प्रकटितः नच संवृतः नापि निह्नुतः ।

विदूषकः—'किं दिट्ठमेत्तेण जेव तुह अङ्कं समारोहदु ।❀

राजा—सखीभ्यां मिथःप्रस्थाने पुनः सलीलया तत्रभवत्या काममाविष्कृतो भावः । तथा हि—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १३ ॥

विदूषकः—तेण हि गहीदपाहेओ होहि । किदं तुए उववणं तवोवणं त्ति पेक्खामि । †

राजा—सखे ! तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन पुनः सकृदप्याश्रमे गच्छामः ।

---

❀ किं दृष्टमात्रेण एव सा तवाङ्कं समारोहतु ।

† तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति पश्यामि ।

---

अत्र विवृतसंवृतयोरत्यन्तविरुद्धयोर्धर्मयोः सन्निवेशवशाद्विरोधाभासोऽलङ्कारः । द्रुतविलम्बितं वृत्तम् ।

(१३) भावमेव प्रदर्शयति दर्भेति—तन्वी कृशशरीरा सा शकुन्तला कतिचिदेव द्वित्राण्येव "नतु त्रिचतुराणि" पदानि गत्वा अकाण्डे अनवसरे अकस्मादेवेत्यर्थः दर्भाङ्कुरेण कुशाग्रभागेन "नतु दर्भेण स्थौल्येन तस्य द्रष्टुं शक्यतया व्याजो न स्यादथच विलम्बोऽपि न स्यात् अङ्कुरस्यातिसूक्ष्मतया तस्यालक्ष्यत्वेन विलम्बसम्भवात् ।" चरणः क्षतः परिक्षतः इति एवम् "कथयित्वा" तथा द्रुमाणां वृक्षाणां शाखासु असक्तं न लग्नम् अपि वल्कलम् उत्तरीयस्थानीयां वृक्षत्वचं विमोचयन्ती उन्मोचयन्ती विमोचनच्छलेन गन्तुं विलम्बमाना सती विवृतं मदवलोकनाय परावृत्तं वदनं यया तथाभूता आसीत् ।

अत्र "असक्तमपि विमोचयन्तीति विरोधाभासोऽलङ्कारः नायिकानुरागेङ्गितमपि ध्वन्यते—तथाच, रति विलासे—

"विलम्बस्तु पथिव्याजात्परावृत्यापि दर्शनम् ।" इति ।

वसन्ततिलकावृत्तम् ।

विदूषकः—को अवरो अवदेसो ? णं भवं राआ।*

राजा—ततः किम् ?

विदूषकः—णीवारच्छट्ठभाअं तावसा मे उवहरन्तु त्ति।†

राजा—मूर्ख ! अन्यमेवभागधेयमेते ÷ तपस्विनो मे निर्वपन्ति, यो-रत्नराशीनपि विहायाभिनन्द्यते। पश्य—

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम्।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः॥१४॥

(नेपथ्ये।)

हन्त, सिद्धार्थौ स्वः।

राजा—(कर्णं दत्त्वा।) अये, धीरप्रशान्तस्वरैस्तपस्विभिर्भवितव्यम्।

(प्रविश्य।)

दौवारिकः—जअदु जअदु भट्टा। एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा।‡

---

* कोऽपरोऽपदेशः ? ननु भवान् राजा।

† नीवारषष्ठभागं तापसा मे उपहरन्त्विति।

‡ जयतु जयतु भर्ता। एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ।

---

÷ भागधेयं करं, "बलिः करोभागधेयः" इत्याभिधानचिन्तामणिः।

(१४) तापसलब्धकरस्य वैशिष्ट्यम् प्रदर्शयन्नाह, यदिति—यत् धनं कररूपमितिशेषः, वर्णेभ्यः ब्राह्मणादिभ्यः उत्तिष्ठति उत्पद्यते "लभ्यते" इत्यर्थः, राज्ञां नृपाणां तत् धनं क्षयि विनाशि "कथमपि रक्षितुं न शक्यत–" इति व्यज्यते आरण्यका अरण्ये भवा कृतवननिवासास्तपस्विनः इत्यर्थः, तु क्षेतुम् अशक्यं "कथमपि न विनाशि" इतिध्वन्यते तपसः स्वतपोजनितफलस्य षड्भागं षष्ठम् अंशं नः अस्मभ्यं ददति प्रवितरन्ति। उक्तञ्च भगवता मनुना—

"यदधीते यद् यजते यद्ददाति यदर्चति।
तस्य षड्भागभाग् राजा सम्यग्भवति रक्षणात्॥" इति।

अत्र सामान्यधनादिरूपोपमानान्मुनिदत्ततपःषड्भागरूपसुकृतधनस्याधिक्येन वर्णनाद् व्यतिरेकालङ्कारः। चिन्तयेत्यारभ्यैतदन्तेन विलासो नाम प्रतिमुखसन्ध्यङ्गमपि उपक्षिप्तं भवति, तथा च श्रीकृष्णः—

"विलासः सङ्गमार्थस्तु व्यापारः परिकीर्तितः" इति।

अनुष्टुब्वृत्तम्।

राजा—तेन ह्यविलम्बितं प्रवेशय तौ ।

दौवारिकः—जं भट्टा आणवेदि। ( इति निष्क्रम्य ऋषिकुमाराभ्यां सह प्रविश्य) इदो इदो भवन्तौ ।*

(उभौ राजानं विलोकयतः ।)

प्रथमः—अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । अथवोपपन्न-मेतदृषिभ्यो नातिभिन्ने राजनि । कुतः—

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥१५॥

द्वितीयः—गौतम ! अयं स वलभित्सखो दुष्यन्तः ।

* यद् भर्ता आज्ञापयति । इत इतो भवन्तौ ।

(१५) ऋषिकल्पत्वमेव तावदस्य प्रतिपादयति, अध्याक्रान्तेति—अमुना राज्ञा अपि सता न केवलं मुनिनैवेत्यपेरर्थः, सर्वैः ब्रह्मचारिप्रभृतिभिः भोग्य आश्रयणीये मुनिपक्षे सर्वभोग्ये बटुभिः पठनार्थमाश्रयणीये आश्रमे गृहस्थाश्रमे मुनिपक्षे मठे "आश्रमो व्रतिनां मठ—" इति हेमचन्द्रः, वसतिः अध्याक्रान्ता अङ्गीकृता, उक्तञ्च, पाद्मे:—

"यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्तन्ते चतुराश्रमाः ॥"

अयमपि रक्षायाः योगात् प्रजापालनाद्धेतोः पक्षान्तरे रक्षार्थं शरीररक्षार्थं योगः समाधिः तस्मात् प्रत्यहं प्रतिदिनं तपः अनुष्ठानादिजन्यं लोकोत्तरं धर्मं "तपश्चान्द्रायणादौ स्याद्धर्मे लोकोत्तरेऽपि च" इतिविश्वः, सञ्चिनोति एकत्रीकरोति वशिनः संयमिनः अस्य भूपतेरपि चारणानां स्तुतिपाठकानां द्वन्द्वैः मिथुनैः गीतः सबहुमानं सादरमुपवर्णितः पुण्यः पावनः केवलं राजपूर्वः राजशब्दपूर्वकः "मुनिः" इति शब्दः राजर्षिरित्यर्थः, मुहुः भूयोभूयः द्यां स्वर्गं स्पृशति पक्षान्तरे शिष्य-गणोच्चारितः पुण्यः मुनिः इति शब्दः विशेषणरहितो मुनिशब्दः द्यां स्पृशति !

अत्र अनेकर्थाभिधायिपदसद्भावाच्छ्लेपालङ्कारः, उपमानभूतान्मुनेरुपमेय-भूतस्यभूपतेरीषदूनत्वप्रतिपादनाद्व्यतिरेकालंकारश्च । मन्दाक्रान्तावृत्तम् ।

प्रथमः—अथ किम् ?

द्वितीयः—तेन हि

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवतयो बद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥१६॥

उभौ—( उपगम्य । ) विजयस्व राजन् !

राजा—( आसनादुत्थाय । ) अभिवादये भवन्तौ ।

उभौ—स्वस्ति भवते । ( इति फलान्युपहरतः । )

राजा—( सप्रणामं परिगृह्य । ) आगमनप्रयोजनं श्रोतुमिच्छामि ।

उभौ—विदितो भवानाश्रमसद्भिरिहस्थः, तेच भवन्तं प्रार्थयन्ते ।

राजा—किमाज्ञापयन्ति ।

उभौ—तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि नः इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

राजा—अनुगृहीतोऽस्मि ।

विदूषकः—( अपवार्य । ) एसा दाणिं अणुऊला ते अब्भत्थणा ।*

---

* एषेदानीमनुकूला तेऽभ्यर्थना ।

---

(१६) नैतदिति, नगरस्य परिघ इव अर्गलाविव प्रांशू लम्बमानौ बाहू भुजौ यस्य तथाभूतः "आजानुबाहुरित्यर्थः, अयम् एक एकाकी एव, सहायमन्तरेणापीत्यर्थः, उदधिः समुद्रः एव श्यामः सीमा अवधिः यस्यास्तथाभूतां कृत्स्नां सकलां धरित्रीं पृथिवीं भुनक्ति पालयति इति यत् एतत् चित्रम् आश्चर्यं न, यतः दैत्यैः दानवैः सह बद्धं वैरं विद्वेषः यासां ताः सुरयुवतयः सुरसुन्दर्यः ज्यामधिगतम् अधिज्यं, तस्मिन् सज्य इत्यर्थः, अस्य राज्ञः धनुषि, पुरुहूतस्य इदं पौरुहूतं तस्मिन् इन्द्रसम्बधिनि वज्रे च विजयम् आशंसन्ते अभिलषन्ति ।

अत्र अनेन निजभुजबलेन निखिला वैरिणो विनाशिता इति कारणं वक्तव्यम् आसीत् परं तथा न कृत्वा समस्तपृथिवीविजयलक्षणं कार्यमेवोक्तमिति पर्यायोक्तिः, नैतच्चित्रमिति पूर्ववाक्यार्थं प्रति आशंसन्त इत्युत्तरवाक्यार्थस्य हेतुत्वेनोपन्यासात् काव्यलिङ्गमुपमा च मन्दाक्रान्ता वृत्तम् ।

राजा—( स्मितं कृत्वा । ) रैवतक, मद्वचनादुच्यतां सारथिः सबाणासनं रथमुपस्थापयेति ।

दौवारिकः—जं देवो आणवेदि ।* ( इति निष्क्रान्तः । )

उभौ—( सहर्षम् । )

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १७ ॥

उभौ—( सप्रणामम् । ) गच्छतां पुरो भवन्तौ । अहमप्यनुपदमागत एव ।

उभौ—विजयस्व । ( इति निष्क्रान्तौ । )

राजा—माधव्य ! अप्यस्ति शकुन्तलादर्शने कुतूहलम् ।

विदूषकः—पढमं अपरीवाहं आसी । दाणिं रक्खसवुत्तन्तेण सपरिवाधं ।†

राजा—मा भैषीः, ननु मत्समीप एव वर्तिष्यसे ।

विदूषकः—एसतुह रधचक्करक्खीभूदोह्मि, जइ ण को वि आअच्छिअ विग्घं करेदि ।‡

---

* यद्देव आज्ञापयति ।

† प्रथमम् अपरीबाधमासीत् । इदानीं राक्षसवृत्तान्तेन सपरिवाधम् ।

‡ एष तव रथचक्ररक्षीभूतोऽस्मि यदि न कोऽप्यागत्य विघ्नं करोति ।

---

(१७) अनुकारिणीति—पूर्वेषां पुरुप्रभृतीनां पूर्वपुरुषाणाम् अनुकारिणि शीलेन, सौन्दर्येण, दयया दानेन विनयादिना च समाने त्वयि भवति इदम् अस्मभ्यमभयदानं युक्तरूपम् अनुरूपम् , पौरवाः पुरुवंशीया राजानः आपन्नानां विपद्ग्रस्तानाम् अभयम् एव सत्रं यज्ञविशेषस्तेषु दीक्षा सञ्जाता ऐषां ते दीक्षिताः सञ्जातदीक्षाः ।

अत्र "अनुकारिणि" इत्यंशे उपमा आपन्नाभयमेव सत्रमित्यंशे च रूपकम् , सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च । पथ्यावक्त्रं वृत्तम् ।

दौवारिकः—(प्रविश्य) जअदु जअदु भट्टा सज्जो रधो भत्तुणो विजअप्पत्थाणं अवेक्खदि। एस उण णअरादो देवीणं आणत्तिहरओ करभओ आअदो ।❀

राजा—( सादरम् । ) किमम्बाभिः प्रेषितः ।

दौवारिकः—अह इं ।†

राजा—ननु प्रवेश्यताम् ।

दौवारिकः—तह । (इति निष्क्रम्य करभकेण सह प्रविश्य ।) एसो भट्टा । उवसप्प ।‡

करभकः—जअदु जअदु भट्टा । देवीओ आणवेन्ति। आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो णाम उपवासो भविस्सदि । तहिं दीहाउणा अवस्सं संभावइदव्व त्ति ।×

राजा—इतस्तपस्विकार्यम् । इतो गुरुजनाज्ञा । द्वयमप्यनतिक्रमणीयम् । तत् किमत्र प्रतिविधेयम् ।

विदूषकः—तिसङ्कू विअ अन्तराले चिट्ठ । +

राजा—सत्यमाकुलीभूतोऽस्मि ।

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहां यथा ॥१८॥

---

❀ जयतु जयतु भर्ता सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः ।

† अथ किम् ।

‡ तथा । एष भर्ता । उपसर्प ।

× जयतु जयतु भर्ता । देव्य आज्ञापयन्ति । आगामिनि चतुर्थदिवसे पुत्रपिण्डपालनो नाम उपवासो भविष्यति । तत्र दीर्घायुषावश्यं संभावयितव्या इति ।

+ त्रिशङ्कुरिवान्तराले तिष्ठ ।

---

(१८) स्वीयमाकुलीभावमेव तावत् समर्थयति, कृत्ययोरिति—कृत्ययोः मातृकार्यमुनिकार्ययोः भिन्नः देशः ययोस्तौ तयोर्भावः तत्त्वं तस्मात् राजधान्यां मातृकार्यं तपोवनेषु तापसकार्यमित्युभयोर्देशभेदाद्, युगपदुभयोरनुष्ठानासम्भवादित्यर्थः, मे मम मनो मानसं, पुरः अग्रतः शैले पर्वते स्रोतोवहां नदीनां स्रोतः इव प्रवाहः यथा, अद्वैधं द्वैधं भवतीति द्वैधीभवति संशयाकुलं जायते ।

(विचिन्त्य।) सखे माधव्य! त्वमम्बया पुत्र इति प्रतिगृहीतः। अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति।

विदूषकः—भो! ण क्खु मं रक्खोभीरुअं गणेसि।※

राजा—(सस्मितम्) भो महाब्राह्मण! कथमेतद्भवति संभाव्यते।

विदूषकः—तेण हि राआणुएण जह गन्तव्वं तह गच्छिदुं इच्छेमि।†

राजा—ननु तपोवनोपरोधः परिहरणीय इति सर्वानानुयात्रिकांस्त्वयैव सह प्रस्थापयामि।

विदूषकः—तेणहि जुअराओ ह्मि दाणिं संवुत्तो।‡

राजा—(स्वगतम्।) अति चपलोऽयं ब्राह्मणवटुः। कदाचिदिमामस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत्। भवतु। एनमेवं वक्ष्ये। (विदूषकं हस्ते गृहीत्वा प्रकाशम्) वयस्य! ऋषिगौरवादाश्रमं गच्छामि। न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः। पश्य—

क्व वयं, क्व परोक्षमन्मथो
मृगशावैः सममेधितो जनः।

※ न खलु मां रक्षोभीरुकं गणय।
† तेन हि राजानुजेन यथा गन्तव्यं तथा गन्तुमिच्छामि।
‡ तेन हि युवराजोऽस्मीदानीं संवृत्तः।

अत्र, यथा नदीप्रवाहः पर्वते अवरुद्धः सन् द्विधा भूत्वा द्वयोरेव मार्गयोः प्रचलति तथैव मे मनः अपीत्युपमा, परमाणुरूपस्य मनसो द्वैधीभवनासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिश्च। पथ्यावक्त्रं वृत्तम्।

(१९) शकुन्तलायामनभिलापं द्योतयितुं तावत्स्वायोग्यत्वं प्रदर्शयति क्वेति—हे सखे! वयं विविधकामकलाकोविदा विषयिणः क्व, मृगशावैः हरिणशावकैः समम् एधितः वृद्धिं प्राप्तः "अतएव" अक्ष्णाम् इन्द्रियाणां परः परोक्षः अगोचरः अपरिज्ञात इत्यर्थः, मनांसि मथ्नातीति मन्मथः कामदेवः यस्य तथाभूतः कामकलाशून्यमतिः जनः शकुन्तलारूप इत्यर्थः, क्व "तत्" परिहासेन कौतूहलेन विविधं जल्पितं यत्र तथाभूतं वचः वचनं शकुन्तलायामनुरागरूपमित्यर्थः, परमार्थेन यथार्थतः न गृह्यताम् सत्यतया मावजानीहि।

परिहासविजल्पितं सखे
परमार्थेन न गृह्यतां वचः ॥१९॥

विदूषकः—एवरणेदं। ❀

राजा—माधव्य! त्वमपि स्वनियोगमनुतिष्ठ, अहमपि तपोवन-रक्षार्थं तत्रैव गच्छामि।

( इति निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः

❀ एवमिदम्।

इह क्वशब्दद्वयप्रयोगेण महदन्तरं सूचितं भवति। सकामस्य मम निष्कामया तया सह समागमः स्वर्गपातालाविव वर्तते तत् शकुन्तलासम्बन्ध्यनुरागव्यञ्जकं मम वचनं परिहासकथितमिवाकलयेत्यर्थः।

अत्र विषमालङ्कारः। तथा "राजा—स्वगतम्" इत्यादिनैतदवसानेन संवृति-र्नाम सन्ध्यन्तराङ्गमुपक्षिप्तं भवति, तल्लक्षणं यथाः—

" संवृतिः स्वयमुक्तस्य स्वयं प्रच्छादनं भवेत् " इति।

इत्यभिज्ञानशाकुन्तलटीकायां सुबोधिन्याख्यव्याख्यायां द्वितीयोऽङ्कः।



# तृतीयोऽङ्कः ।

( ततः प्रविशति कुशानादाय यजमानशिष्यः । )

शिष्यः—(विचिन्त्य सविस्मयम्) अहो, महानुभावः पार्थिवो दुष्यन्तः । येन प्रविष्टमात्र एवाश्रमं तत्रभवति राजनि निरुपद्रवाणि नः कर्माणि प्रवृत्तानि भवन्ति ।

---

(२) कथान्तरमारिप्सुः कविर्वस्तुसङ्घटनार्थं विष्कम्भनामार्थोपक्षेपकं प्रस्तौति ततः प्रविशतीत्यादिना, तत्र विष्कम्नाति विषयविशेषमुपक्षिपतीति विष्कम्भकः, । एतल्लक्षणं यथा दर्पणेः—

"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः ।
शुद्धः स्यात् सतु सङ्कीर्णो नीचमध्यमयोजितः ॥

अत्रैव भरतोऽपिः—

"वृत्तवर्तिष्यमाणानां कथाङ्गानां निवेदकः ।
संक्षेपोक्तिः स विष्कम्भो मध्यपात्रप्रयोजितः ॥
कुतोऽपि स्वेच्छया प्राप्तः सम्बन्धो नोभयोरपि ।
विष्कम्भकः स विज्ञेयः कथार्थस्यापि सूचकः।
विष्कम्भको द्विधा ज्ञेयः शुद्धः सङ्कीर्ण एव च ॥
शुद्धोमध्यमपात्रेण सङ्कीर्णो मध्यमाधमैः ।
संस्कृतोक्त्या च शुद्धः स्यात्सङ्कीर्णो नीचभाषया ॥" इति ।

सचात्र शुद्धः, मध्येनैकेन पात्रेण प्रयोजितः। अनेन च प्रकृते राज्ञो दुष्यन्तस्य तपोवनगमनं, यज्ञोपद्रवकारिणां रक्षसाम् अपसारणं तपस्विकार्यं निर्वाह इतिभूत-कथा, तथा आतपोल्लङ्घनच्छलेन शकुन्तलाया विरहावस्थावर्णनं ततश्च शकुन्तला-दुष्यन्तयोर्विच्छेदार्थं शकुन्तलासमीपे भगवत्या गौतम्या आगमनमिति भविष्यत्कथा च सूचिता भवति ।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः।
हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥१॥

यावदिमान्वेदिसंस्तरणार्थं दर्भान्नृत्विग्भ्य उपनयामि। (परिक्रम्यावलोक्य च, आकाशे।) प्रियंवदे! कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते। (आकर्ण्य।) किं ब्रवीषि? आतपलङ्घनाद्बलवदस्वस्था शकुन्तला। तस्याः शरीरनिर्वापणायेति। तर्हि त्वरितं गम्यताम्। सखि! सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम्। अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयामि। (इति निष्क्रान्तः।)

विष्कम्भकः।

(ततः प्रविशति कामयमानावस्थो राजा।)

राजा—(निःश्वस्य।)

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥२॥

---

(१) प्रभावाधिक्यमुपवर्णयति, केति—सः राजा दुष्यन्तः हुङ्कारेण "हुं" इति शब्देन इव धनुषः ज्याशब्देनैव दूरतः दूरात् अत्यन्तमित्यर्थः, विघ्नान् यज्ञे अन्तरायरूपान् राक्षसादीन् अपोहति निवारयति, (अनेनानायासेनैव रिपुनिबर्हणं ध्वन्यते) यथा भगवान् चन्द्रमौलीश्वरः समुपस्थितान् सर्वान् उपद्रवान् एकेन हुङ्कारेणैव भस्मसात्कर्तुमलं भवति तथैवायं दुष्यन्तोऽपि धनुषष्टङ्कारध्वनिनैव सर्वान् विघ्नान् विनाशयितुं समर्थ इति भावः।

अत्र ज्याशब्दस्य हुङ्कारत्वसम्भावनया उत्प्रेक्षा, धनुषि चेतनव्यवहारसमारोपात् समासोक्तिश्च। पथ्यावक्त्रं वृत्तम्।

(१) आकाश इति—तल्लक्षणं यथा दशरूपके

किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥"

इदञ्चाकाशभाषितं प्रत्युक्त्यवसरप्रदानार्थं विधेयम्, यदुक्तम्:—

"प्रश्नो दूतश्च लोपश्च नेपथ्योक्तिस्तथैव च।
आकाशोक्तिश्च पञ्चैते प्रत्युक्त्यवसरप्रदाः ॥"

(२) जान इति—तपसः तपश्चरणस्य वीर्यं सामर्थ्यं जाने सम्यगवगच्छामि "अहमिति शेषः" "एतेन सर्वसंहारकारिकाश्यपमुनिशापभिया शकुन्तलाया बल-

भगवन् मन्मथ ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यम् एतत् । (स्मृत्वा) आं ज्ञातम्—

अद्यापि नूनं हरकोपवह्नि—
स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ ! मद्विधानां
भस्मावशेषः कथमेवमुष्णः ॥३॥

---

पूर्वकं हरणं निरस्तमिति ध्वन्यते", सा त्वय्यनुरक्तेति स्वयमेवागमिष्यतीत्याशङ्क्याह—सा अनुभूता प्रसिद्धा बाला अप्रगल्भा परवती गुर्वधीना चेति मे विदितं मया ज्ञातमित्यर्थः । "अप्रगल्भतया पराधीनतया च सत्यप्यनुरागे सा स्वयमागन्तुं नशक्नोतीत्यपि मया ज्ञायत इति ध्वन्यते" ।

अत्र "मे" इति मयेत्यर्थे निपातः, यदुक्तं वामनाचार्यैः—"ते मे शब्दनिपातौ त्वया मयेत्यर्थे" अथवा नपुंसके भावे क्तस्य शेषविवक्षायाञ्चेति सम्बन्धे षष्ठी ।

तर्हि त्यज्यतामयम्प्रयास इत्यत आह—अलमिति, शकुन्तलाया बलान्नयनं, तस्याश्च मय्यनुरागवशात् स्वयमागमनमित्युभयमपि यद्यपि सर्वथासम्भवमेव प्रतीयते तथापि ततः शकुन्तलासकाशाद् इदं जन्मन आरभ्य मया सह सम्बद्धमपि माम् एकपदे विहाय क्षणमात्रपरिचिते शकुन्तलालक्षणे जने नितराम् आसक्तं हृदयं निवर्तयितुं परावर्तयितुम् अलं न समर्थो नास्मि ।

अत्र वेदनक्रियाया हृदयनिवर्तनक्रियायाश्च परस्परं विरोधः । रतिस्वभावात् तस्य परिहारः ।

अत्रैव श्लोके "न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ।" इति पाठे निम्नात् निम्नप्रदेशात् सलिलं यथा उन्नतप्रदेशे न गच्छति तथैव, ततो मे हृदयं न निवर्त्तत इत्यर्थोऽनुसन्धेयः । अत्रोपमालङ्कारः । उपायाभावदर्शनात् तापनं नाम प्रतिमुखाङ्गम् उक्तं भवति—

यदाह विश्वनाथः—

"उपायादर्शनं यत्तु तापनं नाम तद्भवेत् ।"

आर्यावृत्तम् ।

(३) स्वीयां स्मृतिमेव विवृणोति, अद्यापीति—मनांसि मथ्नातीति तत्सम्बुद्धौ हे मन्मथ ! भगवन् कामदेव ! हरस्य त्रिपुरारेः कोप एव वह्निः कोपानलः अम्बुराशौ समुद्रे और्व इव वाडवाग्निरिव त्वयि भवति मदने अद्यापि बहुकाले गतेऽपि ज्वलति प्रज्वलितस्तिष्ठति नूनम् इत्युत्प्रेक्षे, अन्यथा एवं नो चेत् भस्मा-

अपि च, त्वया चन्द्रमसा चातिविश्वसनीयाभ्याम् अभिसन्धीयते कामिसार्थः। कुतः—

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥४॥

अथवा—

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥५॥

---

वशेषः भस्ममात्रावशिष्टः "अपि" त्वं भवान् मम विधेव विधा येषां तेषां मद्विधानां मादृशानां वियोगिनां "विषये" कथं कस्माद्धेतोः एवम् ईदृक् उष्णः सन्तापकरः? अत्र नूनमित्युत्प्रेक्षा, काव्यलिङ्गानुप्राणितोपमा, हरकोपवह्निरिति रूपकञ्च। उपजातिवृत्तम्।

(४) तदेव वञ्चनाबीजं प्रदर्शयन्नाह, तवेति-तव भवतः कुसुमशरत्वं पुष्पबाणत्वम् इन्दोश्चन्द्रमसः शीतरश्मित्वं शीतलकिरणत्वम् इदं द्वयम् "अपि" मद्विधेषु मादृशेषु विरहिजनेषु अयथार्थं सत्यार्थरहितं विपरीतार्थमित्यर्थः, दृश्यते स्फुटं विभाव्यते न केवलं कर्णाकर्णिकया श्रूयत एवेत्यर्थः। अनयोरयथार्थत्वे कारणद्वयमुपन्यस्यति, विसृजतीति—यतः, इन्दुः चन्द्रः हिमानि गर्भे येषान्तैः तुषारगर्भैः मयूखैः अग्निं वह्निं विसृजति किरति हिमेनाग्निं प्रच्छाद्य मुञ्चतीत्यर्थः, त्वमपि भवानपि कुसुमान्येव बाणाः कुसुमबाणास्तथाभूतान् कौसुमान् शरान् वज्रसारीकरोषि—वज्रस्य इव सारो येषान्ते वज्रसाराः वज्रवत्कठिनाः, अवज्रसारान् वज्रसारान् करोषि वज्रसारीकरोषि अवज्रसारान् कोमलान् वज्रसमानदार्ढ्यान् विदधासि अतिकोमलान्यपि कुसुमानि वज्रवत्तीक्ष्णानि कृत्वा मयि निक्षिपसीति भावः।

अत्र च मयीति विशेषे प्रतिपादनीये मद्विधेष्विति सामान्यशब्देन प्रतिपादनाद् अप्रस्तुतप्रशंसा। वज्रसारीत्यत्र समासगोपमा, इन्दुरग्निं विसृजतीत्यादौ विरोधाभासः। विप्रलम्भस्य स्वभावतया तत्परिहारः। पूर्वार्धवाक्यस्य उत्तरार्धवाक्यम्प्रति हेतुत्वात्काव्यलिङ्गञ्च। मालिनीवृत्तम्।

(५) अनिशमिति—यदि, मकरः केतुः ध्वजो यस्य तथाभूतः कामः, मदिरे विकसितापाङ्गे आयते आकर्णदीर्घे च नयने यस्यास्तथाभूतां, शकुन्तलां

भगवन् ! एवमुपालब्धस्य ते न माम्प्रति अनुक्रोशः— ?

वृथैव सङ्कल्पशतैरजस्र—
मनङ्ग ! नीतोऽसि मयातिवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे
मय्येव युक्तस्तव बाणमोक्षः ॥६॥

( सखेदं परिक्रम्य ) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । ( निःश्वस्य ) न खलु मे प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । ( ऊर्ध्वमवलोक्य ) इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति ।❀

---

एतल्लक्षणमाह—यथा नाट्यसूत्रे भगवान् भरतः—

"दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे" ।

अधिकृत्य उद्दिश्य प्रहरति विध्यति, कथमयं शकुन्तलायाः कृते अत्यन्तं कातरो भवेदिति धिया यदि मां हिनस्तीत्यर्थः, तदा अनिशं निरन्तरं मनसः रुजं पीडाम् आवहन् कुर्वन्नपि मे मम अभिमतः सम्मतः । नाहमुद्विग्नो भवामि, मदनजनितां पीडामामरणमपि सहर्षं सोढुं सर्वदा सन्नद्धोऽस्मि यदि सा शकुन्तलां विषयीकृत्य कृता भवेदितिभावः । अत्र रुजमावहन्नपि अभिमत इति विरोधः, विरहिण उक्तौ तत्परिहारः । आर्याजातिः ।

(६) वृथेति—हे अनङ्ग ! हरलोचनानलभस्मीभूतसर्वावयव ! मया अजस्रम् अविरतं सङ्कल्पशतैः कल्पितप्रियासमागमादिरूपमानसकर्म्मशतैः. वृथैव व्यर्थमेव अतिवृद्धिं नीतः प्रापितः असि । किं मयातेऽपकृतं येनैवमुपालभस इत्याशङ्क्याह, आकृष्येति—श्रवणस्य उपकण्ठं श्रवणोपकण्ठं तस्मिन् कर्णसन्निधौ, आकर्णमित्यर्थः, चापम् आकृष्य मयि वर्द्धयितरि एव तव बाणमोक्षः शरप्रक्षेपः युक्तः उचितः ? यो हि यस्य उपकरोति तम् उपकृतः प्रत्युपकारेण प्रसादयति—इत्येषः सनातनो धर्मः किन्तु वर्धयितरि मय्येव प्रहरति त्वयि सर्वथा तद्विपरीतं दृश्यत इति वृथैव मया वर्द्धितोऽसीत्याशयः ।

अत्र पूर्ववाक्यम् प्रति उत्तरवाक्यस्य हेतुत्वात्काव्यलिङ्गमलङ्कारः । उपजातिवृत्तम् ।

❀ कर्मणि तपोवनरक्षणलक्षणे संस्थिते अवसिते सति सदस्यैः यज्ञियविधिदर्शिभिः ।

भवतु तत्रैव तावद्गच्छामि। (परिक्रम्य अवलोक्य च) अनया वालपादपवीथ्या सुतनुरचिरंगतेति तर्कयामि, कुतः—

सम्मीलन्ति न तावद् बन्धनकोषास्तयावचितपुष्पाः।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः॥७॥

(स्पर्शं रूपयित्वा) अहो प्रवातसुभगोऽयमुद्देशः।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः॥८॥

(परिक्रम्यावलोक्य च) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया तया भवितव्यम्। तथा हि (अधो विलोक्य)—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा॥९॥

(७) तत्र तर्के हेतुमुपन्यस्यति, सम्मीलन्तीति—तया शकुन्तलया अवचितानि आच्छिद्य एकत्रीकृतानि पुष्पाणि येभ्यस्तथोक्ताः अमी सम्मुखस्थिताः बन्धनस्य वृन्तस्य कोषाः गर्भाः न तावत् सम्मीलन्ति न सम्यङ् मुकुलिता भवन्ति, अमी किसलयानां पल्लवानां छेदाः खण्डाः क्षीरेण तन्निर्यासेन स्निग्धा मसृणा दृश्यन्ते, कुसुमबन्धनानां विवृतमुखत्वाद् वृक्षाणाञ्च पत्रभङ्गस्थानेषु दुग्धोपलक्ष्यमाणत्वादधुनैवैतत्कार्यं संपाद्य सा शकुन्तला अनेन पथा गतेत्याशयः। अत्र स्वभावोक्तिः। आर्या जातिः।

(८) शक्यमिति—अरविन्दैः कमलैः सुरभिः सुगन्धिः मालिनीतरङ्गाणां मालिनीनदीलहरीणां कणान् जलबिन्दून् वहतीति तथाभूतः पुनातीति पवनः वायुः अनङ्गेन मन्मथेन तप्तानि अनङ्गतप्तानि तैः कामसन्तप्तैः अङ्गैः न विरलं गाढं यथा तथा आलिङ्गितुम् आश्लेष्टुं शक्यम् योग्यम्।

शक्यमित्यत्र "शकिसहोश्च" इति कर्मणि यकि कृते निष्पन्नेन शक्यमित्यनेन भिन्नलिङ्गस्य पवनस्य सामानाधिकरण्ये "शक्यञ्च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्" इति महाभाष्यवचनं तथा "शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्।" इति वामनवचनञ्चानुसन्धेयम्।

अत्र अरविन्दवन्मनोज्ञः शीतलः पवनः पवित्रः सखेव आलिङ्गनयोग्य इति समासोक्तिः। आर्या जातिः।

(९) अभ्युन्नतेति—पुरस्तात् पादाग्रभागे अभित उन्नता पश्चात् पार्ष्णिभागे गुल्फक्षेपदेशे जघनगौरवात् स्त्रीकट्याः भारवत्वाद् अवगाढा अवनता अभिनवा नूतना

यावद्विटपान्तरेणावलोकयामि। (परिक्रम्य तथा कृत्वा सहर्षम् ।) अये ! लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु, लतान्तर्हितः श्रोष्याम्यासां विस्रम्भकथितानि । ( इति विलोकयन्स्थितः )

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ।)

सख्यौ—( उपवीज्य सस्नेहम् ) हला सउन्दले, अवि सुहाअदि दे णलिणीपत्तवादो ।*

शकुन्तला—किं वीजअन्ति मं सहीओ ।†

( सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः । )

राजा—बलवदस्वस्थशरीरा शकुन्तला दृश्यते । (सवितर्कम् ।) तत्किमयमातपदोषः स्यात्, उत यथा मे मनसि वर्तते । (साभिलाषं निर्वर्ण्य।) अथवा कृतं संदेहेन ।

स्तनन्यस्तोशीरं शिथिलितमृणालैकवलय
प्रियायाः साबाधं किमपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥१०॥

* हला शकुन्तले, अपि सुखयति ते नलिनीपत्रवातः ।
† किं वीजयतो मां सख्यौ ।

सद्योविहितेत्यर्थः, पदपङ्क्तिः प्रवेशसूचिका पदचिन्हश्रेणिः, अस्य लतामण्डपस्य पाण्डुः सिकता यस्मिन् तस्मिन् पाण्डुवालुकामये द्वारे प्रवेशमार्गे दृश्यते ।

अत्र पर्यायोक्तिरनुमानञ्च, तथा "इष्टनष्टानुसरणं परिसर्पश्च कथ्यते ।" इति विश्वनाथवचनाद् "भवतु तत्रैव गच्छामि—" इत्यारभ्यैतदन्तेन परिसर्पो नाम प्रतिमुखसन्धेरङ्गमपि प्रदर्शितं भवति । आर्या जातिः ।

(१०) स्तनेति—प्रियायाः स्तनयोः न्यस्तं कामसन्तापशान्तये निहितम् उशीरं वीरणतृणमूलसम्बन्ध्यनुलेपो यत्र तथोक्तं, शिथिलितं शरीरस्य तापातिशयाच्छुष्कतया शिथिलं सञ्जातं मृणालस्य एकं मुख्यं वलयं कङ्कणं यत्र तथाविधम् अतएव आ समन्ताद् बाधया पीडया सहितं किमपि लोकोत्तरचमत्कारि इद पुरो दृश्यमानं वपुः कमनीयं मनोरमम् । तथाहि, मनसिजः कामः निदाघप्रसरः

प्रियंवदा—(जनान्तिकम्।) अणसूए, तस्स राएसिणो पढमदंसणादो आरहिअ पज्जुस्सुआ विअ सउन्तला। ण क्खु से अण्णणिमित्तो अअं आतङ्को भवे।*

अनसूया—सहि! मम वि ईदिसी आसङ्का हिअअस्स। होदु। पुच्छिस्सं दाव णं। (प्रकाशम्) सहि! पुच्छिदव्वासि किंपि। बलवं क्खु दे संदावो।†

राजा—वक्तव्यमेव—

शशिकरविशदान्यस्यास्तथाहि दुःसहनिदाघशंसीनि।
भिन्नानि श्यामिकया मृणालनिर्माणवलयानि॥ ११॥

---

* अनसूये! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला। न खलु अस्या अन्यनिमित्तोऽयमातङ्को भवेत्।

† सखि! ममापीदृश्याशङ्का हृदयस्य। भवतु। प्रक्ष्यामि तावदेनाम्। सखि! प्रष्टव्यासि किमपि। बलवान्खलु ते संतापः।

---

ग्रीष्मवेगश्च तयोः कामग्रीष्मवेगयोः तापः सन्तापः कामम् अत्यन्तं समः तुल्यः तु किन्तु ग्रीष्मस्य निदाघस्य अपराद्धं सन्तापरूपोऽपराधः युवतिषु तरुणीषु विषये एवं सुभगं सुन्दरं लावण्यशेषतया लोकोत्तरकमनीयता सम्पादकं न भवति। यथा मान्मथे सन्तापे कृशीभूतमपि शरीरमदृष्टपूर्वां कामपि सर्वाङ्गीणलावण्यसम्पदम्पुष्णाति न तथा नैदाघे सन्तापे, तत्र तु तत् केवलं कृशीभूय वैरूप्यमेवावहति, तन्मूनमयं सन्तापो मान्मथ एव नतु नैदाघ इति भावः, अत्र "युवतिषु" इति सामान्येन प्रतिपादनादप्रस्तुतप्रशंसा। शिखरिणी वृत्तम्।

(११) कामजनितशरीरसन्तापबलीयस्त्वमेव समर्थयन्नाह, शशीति—शशिनश्चन्द्रमसः कराः किरणा इव विशदानि धवलानि मृणालेन पद्मनालेन निर्माणं येषां तथाभूतानि वलयानि कङ्कणानि श्यामिकया सन्तापजनितमलिम्नेत्यर्थः, भिन्नानि भेदङ्गतानि अतएव दुःसहं दुःखेन सोढुं शक्यं निदाघं तापं शंसन्ति कथयन्तीति तानि अस्या अङ्गानि दृश्यन्त इति शेषः।

अत्र शशिकिरणविशदानीत्यत्र समासगोपमा, उत्तरार्धे च वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। आर्या जातिः।

शकुन्तला—( पूर्वार्धेन शयनादुत्थाय ) *हला ! भण जं वत्तुकामासि ।

अनसूया—हला सउन्दले ! अणव्भन्तरा क्खु, अम्हे मदणग दस्स वुत्तन्तस्स । किंदु जादिसी इदिहासणिबन्धेसु कामअमाणाणं अवत्था सुणीअदि तादिसीं दे पेक्खामि । कहेहि किंणिमित्तं दे संदावो । विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ।†

राजा—अनसूययाप्यवगतो मदीयस्तर्कः । नहि स्वाभिप्रायेण मे दर्शनम् ।

शकुन्तला—( आत्मगतम् ) ‡ बलवं क्खु मे अहिणिवेसो । दाणिं वि सहसा एदाणं ण सक्कणोमि णिवेदिदुं ।

प्रियंवदा—+सहि सउन्दले ! सुट्ठु एसा भणादि । किं अत्तणो णिगूहसि आतङ्कं । अणुदिअहं क्खु परिहीअसि अङ्गेहिं । केवलं लावण्णमई छाआ तुमं ण मुञ्चदि—

राजा—अवितथमाह प्रियंवदा । तथा हि—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।

---

* हला, भण, यद् वक्तुकामासि ।

† हला शकुन्तले ! अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशीतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तव पश्यामि । कथय किंनिमित्तं ते संतापः । विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य ।

‡ बलवान्खलु मेऽभिनिवेशः । इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम् ।

+ सखि शकुन्तले ! सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे । अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति ।

---

(१२) प्रियंवदाकथितमस्याः शरीरकार्श्यं स्वयमपि प्रत्यक्षीकुर्वन् समर्थयति, क्षामेति—अस्याः आननं मुखं क्षामक्षामौ विरहपरम्पराजनितदुःखेन कृशतरौ कपालौ गण्डौ यस्य तथाभूतम्, उरः वक्षःस्थलं काठिन्येन दार्ढ्येन मुक्तौ स्तनौ यत्र तथाभूतम्, मध्यः मध्यभागः कृशोदरीत्वात् स्तनजघनभाराभ्यां पूर्वं क्लान्तः आसीत् अधुना कार्श्याद् क्लान्ततरः अतिशयेन क्लान्त इत्यर्थः, अंसौ पूर्वमेव स्तनभारेण विनतौ आस्ताम् अधुना प्रकामम् अत्यन्तं यथा तथा विनतौ पूर्वापेक्षयापि

शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी॥१२॥

शकुन्तला—सहि ! कस्स वा अण्णस्स कहइस्सं । किन्तु आआसइत्तिआ दाणिं वो भविस्सं।*

उभे—अदो ज्जेव क्खु णिब्बन्धो। सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदणं होदि।†

राजा—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि॥ १३॥

* सखि ! कस्य वान्यस्य कथयिष्यामि। किन्तु आयासयित्रीदानीं वां भविष्यामि।

† अत एव खलु निर्बन्धः। स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति।

अवनतौ, छविः शरीरकान्तिः पाण्डुरा पाण्डुवर्णा, पूर्वमविद्यमाना सम्प्रति केवलं विरहकार्य्याज्जातेत्यर्थः, अतएव मदनेन अनङ्गेन क्लिष्टा क्लेशं प्रापिता इयं शकुन्तला पत्राणां शोषणेन शोषणकारिणा मरुता वायुना स्पृष्टा कृतस्पर्शा माधवी वासन्ती लता इव वल्लीव शोच्या एतादृक्पुष्टशरीरावयवानामेवंविधक्षामतादिजननेन शोचनीया, प्रियं दर्शनं यस्याः सा प्रियदर्शना अवयवक्षामतादिमत्वेऽपि लावण्यस्यातिशयितत्वेन स्वविषयकानुरागजनितक्षामतादिमत्वेन च मनोरमावलोकना। रम्याणां वस्तूनां विकृतिरपि शोभामेवावहतीत्यर्थः।

अत्र "शोच्या च प्रियदर्शना च" इत्यंशे विरोधाभासः, शोच्या अनुकम्पार्हेति तस्य परिहारः। मदनक्लिष्टेति शोच्यत्वे हेतुत्वोपादानात् काव्यलिङ्गञ्च। शार्दूलविक्रीडितं वृत्तम्।

(१३) सखीजनेन साग्रहमाधिहेतुमनुयुक्ताया अपि तस्या उत्तरदाने विलम्बं वीक्ष्य साशङ्कमाह, पृष्टेति—समं दुःखं सुखञ्च यस्य सः तेन, यः जनः यस्याः दुःखे दुःखमनुभवति सुखे च सुखमनुभवति तथाभूतेन सखीजनेनेत्यर्थः, मनोगतं मनोनिगूहितम् आधिहेतुं मनःसन्तापकारणं पृष्टा अनुयुक्ता इयं परिदृश्यमाना

शकुन्तला—सहि ! जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा राएसी, तदो आरहिअ तग्गदेण अहिलासेण एतद्वत्थह्मि संवुत्ता ।॰

उभे—दिट्ठिआ दे अनुरूए वरे अहिलासो, अधवा साअरं उज्झिअ कहिं महाणईए पविसिदव्वम् ।

राजा—( सहर्षम् । ) श्रुतं श्रोतव्यम्—

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ १४ ॥

॰ सखि ! यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः, तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता ।

बाला न वक्ष्यति इति न किन्तु वक्ष्यत्येव "सम्भाव्यमाननिषेधस्य विनिवृत्तये नञ्द्वयम्" आत्मनो दुःखस्यैतन्निमित्तत्वमाह, दृष्ट इति—अनया शकुन्तलया बहुशः अनेकवारं विवृत्य मुखं परावृत्य सतृष्णं सस्पृहं दृष्टः अपि अहम् अत्र सखीप्रश्ने उत्तरस्य श्रवणे प्रतिवचनाकर्णने कातरतां भीरुतां गतोऽस्मि, मदनजनितोऽयमस्या आयासो मन्निमित्त उत अन्यनिमित्तः, मन्निमित्तश्चेज्जितमस्माभिरन्यनिमित्तश्चेद् भयङ्करं किमपि भविष्यतीति सभयत्वमिति भावः ।

अत्र यतः इयं बाला अतश्चातुर्यानभिज्ञा सत्यवाक्यमेव कथयिष्यति, अतश्च मनोगतम् आधिहेतुं नूनं कथयिष्यतीति हेतुहेतुमद्भावात् काव्यलिङ्गमलङ्कारः । वसन्ततिलकं वृत्तम् ।

( १४ ) स्मर इति—स्मरः भगवान् कामदेव एव तापस्य सन्तापस्य हेतुः कारणं, परन्त्विदानीं स एव, तपस्य ग्रीष्मस्य अत्यये अवसाने अभ्रैः सजलमेघैः श्यामः दिवसः जीवलोकस्य इव मे मम निर्वापयिता तापशमयिता जातः, वर्षाकाले यथैकः दिवस एव कञ्चित्कालं तपन् असुखदो भवति पुनः स एव पश्चादभिवर्ष्य सुखदो जायते तथैवायमपि प्रथमं मम शकुन्तलायामनुरागमुत्पाद्य विरहपरम्परया सन्तापकरो जातः पश्चादस्या अपि अनुरागं मयि सम्पाद्य मदर्थमेव तामेतावदवस्थामानीय तस्य निर्वापयिता जात इति भावः ।

अत्र य एव तापहेतुः स एव तच्छमनहेतुरपीति विरोधाभासः, नायिकागतत्वेनास्य प्रशमनहेतुत्वं, स्वगतत्वेन च सन्तापकरत्वमित्याश्रयभेदात्तत्परिहारः । आर्या जातिः ।

शकुन्तला—तं जइ वो अणुमदं ता तहवट्टह जह तस्स राएसिणो अणुकम्पणिज्जा होमि। अण्णहा अवस्सं सिञ्चध मे तिलोदअं*

राजा—संशयच्छेदि वचनम्। एतदेव कामफलं, यन्नफलमन्यत्। एतावदवस्थापि मां सुखयति।

प्रियंवदा—(जनान्तिकम्) अणसूए! दूरगओ से मम्महो, अक्खमा इअं कालहरणस्स। जस्सिं बद्धभावा एसा सो ललामभूदो पोरवाणं। ता जुत्तं से अहिलासो अहिणन्दिदुं। †

अनसूया—तह, जह भणसि। ‡

प्रियंवदा—सहि! को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि। ×

राजा—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते। +

अनसूया—*को उण उवाओ भवे जेण अविलम्बिअं णिहुअं अ सहीए मणोरहं संपादेह्म।

प्रियंवदा—णिहुअं त्ति चिन्तणिज्जं भवे। सिग्घं त्ति ण दुक्करं। ÷

अनसूया—कहं विअ। =

---

* तद्यदि वामनुमतं तदा तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि। अन्यथावश्यं सिञ्चतं मे तिलोदकम्।

† अनसूये! दूरगतोऽस्या मन्मथः, अक्षमेयं कालहरणस्य। यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम्। तद्युक्तमस्या अभिलाषोऽभिनन्दितुम्।

‡ तथा, यथा भणसि।

× सखि! क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते।

+ कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः।

÷ निभृतमिति चिन्तनीयं भवेत्। शीघ्रमिति न दुष्करम्।

= कथमिव।

---

*विशाखानक्षत्रयुगं यदि शशाङ्कलेखामनुसरति तदा किं चित्रम् (सखीद्वयमुद्दिश्य विशाखेत्यत्र द्विवचनं शकुन्तलामभिप्रेत्य शशाङ्कलेखेति च बोध्यम्।

प्रियंवदा—णं सो॰ राएसी इमस्सिं सिणिद्धदिट्ठीए सूइदाहिलासो इमेसुं दिअएसुं पजाअरकिसो विअ लक्खीअदि।

राजा—(आत्मानमवलोक्य) सत्यमित्थंभूत एवास्मि। तथाहि—

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः।
अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥१५॥

॰ ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाप एषु दिवसेषु प्रजागरकृशो लक्ष्यते।

(१५) स्वीयं कार्श्यं स्वयमेव प्रदर्शयति, इदमिति—अन्तस्तापात् हृदि सततं दह्यमानकामानलसम्भवात् सन्तापात् निशि निशि प्रतिरात्रं, दर्शनदिवसमारभ्याद्यपर्यन्तमित्यर्थः, भुजे हस्ते न्यस्तो निहितो योऽपाङ्गस्तस्मात् प्रवर्तिभिः निःसरद्भिः "विरहजनितया अरत्या शय्योपधानाद्युपचारमन्तरेण, अन्यकान्तासम्भोगसम्भावनाभावाच्च निजभुजमेवोपधानीकृत्य शयने क्रियमाणेऽपाङ्गस्य तत्संलग्नत्वेन ततः सर्वदा प्रसरणशीलैरिति भावः। अशिशिरैः उष्णैः अश्रुभिः बाष्पैः विवर्णा निष्प्रभा मणयो यत्र तद् विवर्णमणि, अविवर्णमणि विवर्णमणि सम्पादितं विवर्णमणीकृतं निष्प्रभरत्नीकृतं मुखबाष्पादिसम्बन्धेन दर्पणादिवदुष्णजलादिसम्बन्धेन कान्तिमन्तोऽपि मणयो विवर्णा भवन्तीति भावः, अनभिलुलितः अस्पृष्टः ज्यायाः प्रत्यञ्चाया आकर्षणजनितस्य आघातस्य अङ्कश्चिन्हं येन तत्तथोक्तं; शकुन्तलानुरागात् प्राक्स्वस्थदशायां शरीरस्य दार्ढ्याद् वलयं मणिबन्धादुपरिभागेऽतिसंश्लिष्टमासीदतोऽस्य ज्याघातस्य अस्पृष्टत्वं स्वाभाविकम् इदानीं विरहावस्थायां सर्वाङ्गीणकार्श्यात्तस्य ततो गलनं सम्भाव्यते। कनकवलयं स्वर्णवलयं, मणेः बन्धनं यस्मिंस्तस्मात् पाणिमूलात् "मणिबन्धः पाणिमूलम्" इत्यमरः, स्रस्तं स्रस्तं गलितं गलितं शरीरस्य कार्श्याद् वारं वारं करमूलमागतमिति भावः, मुहुः पुनः पुनः प्रतिसार्यते ऊर्ध्वं नीयते स्वस्थानं प्राप्यत इत्यर्थः।

अत्र स्वभावोक्तिः, प्रजागरत्वे कृशत्वे च कारणमनुक्त्वा अश्रुवैवर्ण्यमणिबन्धनप्रतिसारणरूपकार्याभ्यां यत्तयोरुक्तिः सलेशः। तथा च, विश्वनाथः—

"स लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम्।"

हरिणीवृत्तम्।

प्रियंवदा—( विचिन्त्य । ) हला ! मअणलेहो से करीअदु । इमं देवप्पसादस्सावदेसेण सुमणोगोविदं करिअ तस्स हत्थअं पावइस्सं । ❀

अनसूया—रोअइ मे सुउमारो पओओ । किं वा सउन्दला भणादि । †

शकुन्तला—सही णिओओ वि विकप्पीअदि । ‡

प्रियंवदा—तेण हि अत्तणो उवण्णासाणुरूअं चिन्तेहि दाव ललिअपदवन्धं गीदिअं । ×

शकुन्तला—हला ! चिन्तेमि अहं । अवहीरणभीरुअं पुणो वेवइ मे हिअअं । +

राजा—( सहर्षम् । )

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥१६॥

---

❀ हला ! मदनलेखोऽस्य क्रियताम् । इमं देवप्रसादस्यापदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि ।

† रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ।

‡ सखी नियोगोऽपि विकल्प्यते ।

× तेन ह्यात्मन उपन्यासानुरूपां चिन्तय तावल्ललितपदवन्धां गीतिकाम् ।

+ हला ! चिन्तयाम्यहम् । अवधीरणभीरु पुनर्वेपते मे हृदयम् ।

---

(१६) शकुन्तलाया वचनमाकर्ण्य राजा स्वाशयं प्रकटयति, अयमिति—हे भीरु ! भयशीले ! यतः यस्मात् मल्लक्षणात् जनात् "त्वम्" अवधीरणां मत्तः प्रत्याख्यानरूपां स्वावमाननां विशङ्कसे आशङ्कसे सः अयं त्वत्पुरोवर्ती ते तव सङ्गमे उत्सुकः सोत्कण्ठः सन् तिष्ठति, दृष्टान्तेनामुमेवार्थं प्रमाणयति, लभेतेति—प्रार्थयिता याचकः पुरुषः, श्रियाः सकाशात् श्रियं सम्पल्लक्षणां लक्ष्मीं "लक्ष्मी वाणी-धात्रीत्रिवर्गसम्पद्विभूतिशोभासु । उपकरणवेपरचनाविशेषेषु च श्रीरिति प्रथिता ।" इति नाममाला । लभेत वा प्राप्नुयाद् वा, न वा लभेत वा न प्राप्नुयाद्वा, किन्तु श्रिया लक्ष्म्या ईप्सितः आप्तुम् इष्टः कथं दुरापः दुर्लभः भवेत् , श्रियं याच्यमानस्य जनस्य श्रीलाभः कादाचित्को भवति परन्तु श्रिया याच्यमानः जनः न तथा भवति स नूनं तया लभ्यत एवेति भावः । वंशस्थं वृत्तम् ।

अपिच—

अयं स यस्मात्प्रणयावधीरणा-
मशङ्कनीयां करभोरु ! शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो
न रत्नमन्विष्यति मृग्यते हि तत् ॥१७॥

सख्यौ—अइ अत्तगुणावमाणिणि ! को दाणिं सरीरणिव्वावइत्तिअं सारदिअं जोसिणिं पडन्तेण वारेदि ।*

शकुन्तला—( सस्मितम् । ) णिओइआ दाणिं ह्मि ।† ( इत्युपविष्टा चिन्तयति । )

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥१८॥

* अयि आत्मगुणावमानिनि ! क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ।

† नियोजितेदानीमस्मि ।

(१७) पुनः प्रकारान्तरेणाह, अयमिति—हे करभोरु ! करभाविव मणिबन्धाकनिष्ठिकामूलपर्यन्तभागाविव ऊरू यस्याः सा तत्सम्बुद्धौ हे करभोरु ! यस्मात् जनात् अशङ्कनीयां शङ्कितुम् अयोग्याम् अवधीरणाम् अवमाननां शङ्कसे विचारयसि प्रणये तव प्रेम्णि उत्सुकः उत्कण्ठितः सः अयं पुरोवर्तमानः जनः त्वां भवतीम् उपस्थितः, हि यतः रत्नं न अन्विष्यति न कमपि गवेषयति तद् एव जनैः मृग्यते अन्विष्यते । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । वंशस्थविलं वृत्तम् ।

( १८ ) अनुरागमेवाविष्कुर्वन्नाह, उन्नमितेति—पदानि सुप्तिङन्तलक्षणानि रचयन्त्या निर्मितवत्या अस्याः शकुन्तलायाः उन्नमिता उत्क्षिप्ता एका भ्रूलता भ्रूवल्ली यस्मिंस्तत् तथाविधम् आननं कण्टकितेन रोमाञ्चितेन कपोलेन मयि मम विषये अनुरागं स्वीयं प्रीतिविशेषं प्रथयति शंसति । उक्तञ्च सुधाकरैः—

"राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः ।
यावदाश्रयवृत्तिश्चेदनुराग इतीरितः ॥" इति ।

अत्र भ्रून्नमनादिलिङ्गेन दुष्यन्तविषयकानुरागस्य अनुमानादनुमानालङ्कारः । आर्या जातिः ।

शकुन्तला—हला ! चिन्तिदं मए गीदवत्थु । ण क्खु सरिणहिदाणि उण लेहणसाहणाणि ।*

प्रियंवदा—इमस्सिं सुओदरसुउमारे णलिणीपत्ते पदच्छेदभत्तीए णहेहिं आलिहिअदु । †

शकुन्तला—(यथोक्तं रूपयित्वा ।) हला ! सुणुह दाणिं संगदत्थं ण वेत्ति ।‡

उभे—अवहिद ह्म । ×

शकुन्तला—( वाचयति । )

तुज्झ ण आणे हिअअं, मम उण मअणो दिवावि रत्तिम्मि । +
णिग्घिण ! दावइ वलीअं तुइ वुत्तमणोरहाइं अङ्गाइं ॥१९॥

---

* हला चिन्तितं मया गीतवस्तु । न खलु संनिहितानि पुनर्लेखनसाधनानि ।

† एतस्मिंच्छुकोदरसुकुमारे नलिनोपत्रे पदच्छेदभक्त्या नखैरालिख्यताम् ।

‡ हला ! श्रृणुतमिदानीं संगतार्थं न वेति ।

× अवहिते स्वः ।

+ तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रावपि ।
निर्घृण ! तापयति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥

---

(१९) तव भवतः हृदयं कथं वर्तते इति न जाने न वेद्मि, किन्तु पुनः हे निष्कृप ! हे निर्दय ! "मदर्थम् एवेयमेतावदवस्थां गतेत्यधिगतवतोऽपि तव दयाया अनुदयादिति भावः", त्वयि भवति वृत्ता जाता मनोरथा अभिलाषा येषां तानि मम अङ्गानि† मदनः कामः दिवा दिनेऽपि रात्रावपि बलीयः भृशं यथा तथा तापयति, मदनो यथा मां बाधते त्वां तथा न बाधत इति भावः ।

---

† तत्प्रकारश्च यथाः—

गाढालिङ्गनं भुजयोर्मनोरथः, त्वल्लावण्यपयःप्रवाहपानं नयनयोः, त्वद्वाङ्माधुरीसुधासरसीनिमज्जनं कर्णयोः, त्वदाननसरोजश्वाससौरभाघ्राणं नसोः, इन्दुकोमलत्वदङ्काधिरोहणं नितम्बस्य, त्वत्करतलमृदुमर्दनं स्तनयोः, दृढापीडनं वक्षसः, पत्रावलीविरचनं कपोलयोः, कोमलकराङ्गुलीभिः गुद्‌गुदीकरणं बाहुमूलयोः, दन्तक्षतमधरयोः, नखक्षतं स्तनमूलयोरिति संक्षेपः, अस्य विस्तरस्त्वाकराद्‌वगन्तव्यः ।

राजा—अवसरः खलु अयमात्मानं दर्शयितुम्। ( सहसोपसृत्य । )

तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥२०॥

सख्यौ—( सहर्षम् ।) साअदं जधासमीहिदफलस्स अविलम्बिणो मणोरहस्स ।✽ ( शकुन्तलाभ्युत्थातुमिच्छति )

राजा—अलमलमायासेन ।

संदष्टकुसुमशयनान्याशुविमर्दितमृणालवलयानि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ २१ ॥

---

✽ स्वागतं यथासमीहितफलस्य अविलम्बिनो मनोरथस्य ।

---

अथवाः—

तव हृदयं क्षत्रियस्य भवतः उरस्थलं "हृदयं मानसोरसोः" इति विश्वः, अरिशरशतैरप्यभेद्यमित्यर्थः, "अहं" न जाने ? अपितु कर्णाकर्णिकया जाने एव इति काकुः, अतएव मदनस्तत्र अकिञ्चित्करः सन् अबलाया मम अङ्गानि दिवापि रात्रावपि भृशं तापयति ।

(२०) शकुन्तलावाक्यस्योत्तरच्छलेन नैजं दशाविशेषम्प्रदर्शयन्नाह, तपतीति-तनूनि गात्राणि यस्यास्तस्याः सम्बुद्धौ हे तनुगात्रि ! हे तन्वङ्गि ! मदनः कामस्त्वां तपति यदा कदा केवलं तापं ददाति, कोकिलालापमलयानिलभ्रमररुतादिश्रवणाद्वेदनामात्रं जनयति, कृशाङ्गत्वात्स्त्रीत्वाच्च न निरवशेषं हिनस्तीति भावः, मां पुनरनिशं निरन्तरं दिवापि रात्रावपि दहति भस्मसात्करोति एव, दृष्टान्तेनामुमेवार्थं समर्थयति, दिवसः शशाङ्कं चन्द्रमसं यथा ग्लपयति म्लापयति कुमुद्वतीं तथा न, तां तु केवलं सङ्कोचयति, समानसन्तापदातर्यपि दिवसे चन्द्रमसि यथा मलिनिमा दृश्यते न तथा कुमुदिन्यामित्यर्थः ।

एतेन स्वान्तःपुररमणीभ्यः शकुन्तलारूपलावण्यातिशयतया तासु वैमुख्यं तेन च नान्तःपुरस्त्रीनिमित्तं शरीरकार्श्यादि किन्तु त्वन्निमित्तमेवेति स्वावस्था सूच्यते ।

अत्र वाक्ययोर्बिम्बप्रतिबिम्बभावेनावस्थानाद् दृष्टान्तालङ्कारः । आर्या जातिः ।

(२१) उपचारवारणे कारणमाह, सन्दष्टेति-गुरुः परितापो येषान्तानि अधिकसन्तापानि, अतएव सन्दष्टं संसक्तं सन्तापाधिक्याद् दृढं संलग्नं कुसुमानां शयनम् आस्तरणं यैस्तानि तथोक्तानि, राजानमागच्छन्तमवलोक्य तदुपचाराय कुसुमशयनादुत्थातुमभिलषन्त्याः शकुन्तलायास्तापबाहुल्येन शरीरसंलग्नं पुष्पशयनमपि

अनसूया—इदो सिलातलेक्कदेसं अलंकरेदु वअस्सो ।❀

( शकुन्तला किंचिदपसृत्य सलज्जा तिष्ठति । )

राजा—( उपविश्य ) कच्चित् सखीं वो नातिबाधते शरीरतापः ?

प्रियंवदा—( सस्मितं ) दाणिं लद्धोसधो उवसमं गमिस्सदि । †

प्रियंवदा—दुवेणं णु वो अण्णोण्णाणुराओ पच्चक्खो । सही-सिणेहो मं पुणरुत्तवादिणिं करेदि । ‡

राजा—भद्रे ! नैतत्परिहार्यम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

प्रियंवदा—तेण हि सुणादु अज्जो ।×

राजा—अवहितोऽस्मि ।

प्रियंवदा—आवण्णस्स अस्समवासिणो जणस्स रण्णा अत्तिहरेण होदव्वं त्ति णं एसो वो धम्मो ।+

राजा—नास्मात्परम् ।

प्रियंवदा—तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवता मअणेण आरोविदा । ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बइदुं ।ऽऽ

---

❀ इतः शिलातलैकदेशमलंकरोतु वयस्यः ।

† इदानीं लब्धौषध उपशमं गमिष्यति ।

‡ द्वयोर्नन्नु युवयोरन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहो मां पुनरुक्तवादिनीं करोति ।

× तेन हि श्रृणोतु आर्य्यः ।

+ आपन्नस्य आश्रमवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमिति नन्वेष युष्माकं धर्मः ।

ऽऽ तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम् ।

---

उत्तिष्ठतीत्यर्थः, तथा आशु तत्क्षणं विमर्दितं विलुलितं मृणालवलयं यैस्तथाभूतानि ते गात्राणि उपचारम् आगतजनस्य अभ्युत्थानादि योग्यव्यहारं नार्हन्ति ।

अत्र उत्तरार्धवाक्यं प्रति पूर्वार्धवाक्यार्थस्य हेतुत्वात्काव्यलिङ्गम्, सार्थकविशेषणानां बाहुल्यात्परिकरश्च । आर्या जातिः ।

राजा—भद्रे ! साधारणोऽयं प्रणयः । सर्वथानुगृहीतोऽस्मि ।

शकुन्तला—( प्रियंवदामवलोक्य । ) हला ! किं अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण ।*

राजा—

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते ! हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे !
मदनबाणहतोऽपि हतः पुनः ॥ २२ ॥

* हला ! किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ।

(२२) अन्तःपुरविरहपर्युत्सुकस्येत्यनेन शकुन्तलया विभाव्यमानमन्यनायिकानुरागमपाकर्तुमाह, इदमिति—हे मदिरेक्षणे ! मदिरे ईक्षणे यस्याः सा तत्सम्बुद्धौ, तल्लक्षणमाह, आदिभरते—

"आघूर्णमानमध्या या क्षामा चञ्चिततारका ।
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥"

अथवा मदिरावदीक्षणं यस्याः सा तत्सम्बुद्धौ, मदिरा यथा मोहजननी तथा त्वदपाङ्गावलोकनमपि मोहजनकमित्यर्थः, इदं जन्मप्रभृति येन मया सह स्थितं तमपि मां परित्यज्य तवावलोकनादेव त्वदधीनम् , अनन्यपरायणं नान्याधीनं हृदयम् अन्यथा अन्यनिष्ठं समर्थयसे सम्भावयसि यदि तदा हे हृदयसन्निहिते ! सदा मद्हृद्वासिनि ! मदनस्य बाणैः हतोऽपि पुनः भृशं हतोऽस्मि । अयमत्रत्य आशयः—यो हि जनः यस्य सन्निहितो भवति स तस्य सर्वं चेष्टितं सम्यक् जानाति त्वञ्च मम हृदयसन्निहिता, अतः कथं मामन्यासक्तं कल्पयसि, अन्यच्च—त्वल्लावण्यलोलहृदयोऽहं त्वदलाभेन कुसुमशरजर्जरीभूतशरीरोऽपि त्वल्लाभाशया जीवितमवलम्ब्य कथमपि समयमत्यवाहयम्, एवं स्थितेऽपि पुनर्यदि त्वमन्यथा सम्भावयसि तदा जीवितुमेव न शक्नोमीत्यर्थः ।

अत्र मदिरेक्षणेत्यत्रोपमा, हृदय-हृदयेति हतो हत इत्यत्र च लाटानुप्रासः । अनेन सामेति सन्ध्यन्तराङ्गमप्युपक्षिप्तं भवति—

"तत्र साम प्रियं वाक्यं सानुवृत्तिप्रकाशकम् ।"

द्रुतविलम्बितं वृत्तम् । इति ।

अनसूया—वअस्स ! वहुवल्लहा क्खु राआणो सुणीअन्ति । तं जह णो पिअसही बन्धुअणसोअणिज्जा ण होइ तह णिव्वत्तेहि ।❀

राजा—भद्रे ! किं वहुना ।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्रवसना चोर्वी सखी च युवयोरियम् ॥ २३ ॥

उभे—णिव्वुद म्ह ।† ( शकुन्तला हर्षं सूचयति )

प्रियस्वदा—( जनान्तिकम् ) अणसूए ! पेक्ख पेक्ख मेहवादाहदं विअ गिह्मे मोरीं क्खणे क्खणे पच्चाअदजीविदं पिअसहीम् ।‡

शकुन्तला—हला ! मरिसावेध लोअपालं, जं अह्मेहिं विस्सद्धपलाविणीहिं उवआरादिक्कमेण भणिदं ।+

---

❀ वयस्य ! बहुवल्लभाः खलु राजानः श्रूयन्ते । तद् यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय ।

† निर्वृते स्वः ।

‡ अनुसूये ! पश्य पश्य मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागतजीवितां प्रियसखीम् ।

+ हला ! मर्षयतं लोकपालं, यदस्माभिर्विश्रब्धप्रलापिनीभिरुपचारातिक्रमेण भणितम् ।

---

(२३) अनसूयावचनमाकर्ण्य तत्र स्वीयमाशयमाविर्भावयति, परिग्रहेति-परिग्रहाणां दाराणां "दाराः क्षेत्रं वधूर्भार्याजनी जाया परिग्रहः" इत्यभिधानचिन्तामणिः, बहुत्वेऽपि बाहुल्येऽपि समुद्र एव वसनम् आच्छादनं सीमासूचकं यस्यास्तथाभूता उर्वी, युवयोः भवत्योरियं पुरो वर्तमाना सखी च एते द्वे एव मे कुलस्य वंशस्य प्रतिष्ठे गौरवहेतू, "प्रतिष्ठागौरवे स्थितौ" इति हैमः ।

यथाऽन्ये राजानो विषयायत्तचित्ताः प्राक् स्वकार्यं साधयन्ति पश्चादन्यथा चरन्ति तथा न मामवगन्तव्यम्, नैषा भोगार्थं परिगृह्यते किन्त्विमामेव पट्टमहिषीं विधायैतज्जनितपुत्र एव सम्राड् भविष्यति, राज्यञ्च मे निष्कण्टकमित्यादिसर्वं "मे कुलस्य, समुद्रवसनेत्यादिभिर्ध्वन्यते" । अत्रोर्वीशकुन्तलयोः प्रकृतयोरेकधर्माभिसम्बन्धात् तुल्ययोगिता एवं प्रतिष्ठाहेतौ प्रतिष्ठात्वाध्यवसायोपपादनाद् भेदेऽभेदरूपातिशयोक्तिश्च । पथ्यावक्त्रं वृत्तम् ।

सख्यौ—( सस्मितम् ) जेण तं मन्तिदं सोज्जेव मरिसावेदु, अण्णस्स को अच्चओ ?*

शकुन्तला—अरिहदि क्खु महाराओ इमं विसोढुं, परोक्खं वा ण किं को मन्तेदि ?†

राजा—( सस्मितम् )

अपराधमिमं ततः सहिष्ये
यदि रम्भोरु ! तवाङ्गसङ्गमृष्टे ।
कुसुमास्तरणे क्लमापहेऽत्र
स्वजनत्वादनुमन्यसेऽवकाशम् ॥२४॥

प्रियंवदा—( सोपहासम् ) णं एत्तिकेण उण तुट्ठो भविस्सदि ?‡

शकुंतला—( सरोपमिव ) विरम विरम दुव्विणीदे ! एदावदवत्थं गदाए मए कीलसि ? ×

प्रियवंदा—( बहिः सदृष्टिक्षेपम् । ) अणसूए ! एसो इदोदिण्ण-दिट्ठी उस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि । संजोएम णं +

( इत्युभे प्रस्थिते । )

---

* येन तन्मन्त्रितं स एव मर्षयतु अन्यस्य कोऽत्ययः ?

† अर्हति खलु महाराज इदं विसोढुम् , परोक्षं वा न किं को मन्त्रयति ।

‡ नन्वेतावन्मात्रेण पुनस्तुष्टो भविष्यति ?

× विरम विरम दुर्विनीते ! एतावदवस्थां गतया मया क्रीडसि ?

\+ अनसूये, एष इतोदत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनम् ।

---

(२४) स्वीयं कामकलाकोविदत्वमाविष्करोति, अपराधमिति–हे रम्भोरु ! रम्भे कदलीस्तम्भाविव ऊरू यस्यास्तत्सम्बुद्धौ, यदि तव अङ्गानां सङ्गेन संसर्गेण मृष्टे शुद्धे "अनेनाङ्गानां भाग्यवत्ता सूचिता भवति" अतएव क्लमं शरीरतापमपहन्तीति तस्मिन् कुसुमानामास्तरणे कुसुमशयनीये स्वजनत्वाद् आत्मीयोऽयमिति बुद्ध्या, अतिथिरयमतः सर्वथामान्य इति बुद्ध्या नेत्यर्थः, अवकाशं स्थानम् अनुमन्यसे आदिशसि तदा इमम् अपराधम् मदुपचारातिक्रमलक्षणं सहिष्ये क्षमिष्ये ।

अत्र "रम्भोरु" इत्यत्र समासगतोपमा । औपच्छन्दसिकं वृत्तम् ।

शकुन्तला—हला ! असरण ह्मि । अण्णदरा वो आअच्छदु ।*

उभे—पुहवीए जो सरणं, सो तुह समीवे वट्टइ। (इति निष्क्रान्ते।)†

शकुन्तला—कहं गदाओ एव्व पिअसहीओ ।‡

राजा—सुन्दरि ! अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते । तदुच्यताम्—

किं शीतलैः क्लमविनोदिभिरार्द्रवाता-
न्संचारयामि नलिनीदलतालवृन्तैः ।
अङ्के निधाय करभोरु ! यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥२५॥

* हला ! अशरणास्मि । अन्यतरा युवयोरागच्छतु ।
† पृथिव्या यः शरणं, स तव समीपे वर्तते ।
‡ कथं गते एव प्रियसख्यौ ।

(२५) आराधनाप्रकारमुपवर्णयति, किमिति—शीतलैः शीतलस्पर्शैः, क्लमं शरीरसन्तापं नुदन्तीति तैः सन्तापापनोदिभिः, नलिनं पद्मं विद्यते यस्याः सा नलिनी तस्या दलानि कमलिनीदलानि, तान्येव तालवृन्तानि व्यजनानि तैः कमलिनीपलाशव्यजनैः, आर्द्रवातान् शीतलपवनान् सञ्चारयामि रचयामि मन्दं मन्दं सर्वावयवेषु सम्यग् वीजयामि किम् ? यतः शीतलानि नलिनीदलानि दृष्टानि-स्पृष्टान्याघ्रातानि च सन्ति स्वयं क्लमं छिन्दन्ति, ततस्तज्जन्यो वायुः कथं न तच्छेत्स्यतीति भावः ।

उत अथवा करभाविव करबहिर्भागाविव ऊरू यस्यास्तत्सम्बुद्धौ हे करभोरु ? "मणिबन्धादाकनिष्ठं करस्य करभोबहिः" इत्यमरः, ते पद्मवत् ताम्रौ कुशेशयलोहितौ चरणौ पादौ अङ्के नैजे क्रोडे निधाय संस्थाप्य यथासुखं सुखमनतिक्रम्य संवाहयामि मन्दंमन्दं संमर्दयामि ।

यदाह वात्स्यायनः—

एवं चित्तानुगां बालामुपायेन प्रसाधयेत् ।
तथा चेत्सानुरागा च विश्रब्धा चापि जायते ॥
नात्यन्तमानुकूल्येन न चाति प्रातिकूल्यता ।
सिद्धिं गच्छति कन्यासु तस्मान्मध्येन साधयेत् ॥

शकुन्तला—ण माणणीएसु अत्ताणं अवराहइस्सं।❀

(इत्युत्थाय गन्तुमिच्छति।)

राजा—(बाहुभ्यामवष्टभ्य) सुन्दरि! अनिर्वाणो दिवसः। इयं च ते शरीरावस्था।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः॥ २६॥

(इति बलादेनां निवर्तयति।)

---

❀ न माननीयेष्वात्मानमपराधयिष्ये।

---

आत्मनः प्रीतिजननं योषितां मानवर्द्धनम्।
कन्याविश्रम्भणं वेत्ति यः स तासां प्रियो भवेत्॥
अतिलज्जान्वितेत्येवं यस्तु कन्यामुपेक्षते।
सोऽनभिप्रायवेदीति पशुवत्परिभूयते॥इति॥

अत्र नलिनीदले तालवृन्तत्वारोपणस्य प्रकृतोपयोगितया परिणामालङ्कारः। तथा करभोरुपद्यताम्राविन्युभयत्र अनुवृत्तत्व कोमलत्व-ताम्रत्वादिसाधर्म्येणोपमालङ्कारः। विशेषणानां साभिप्रायात् परिकरश्च।

अनेनोपन्यासो नाम प्रतिमुखसन्ध्यङ्गमप्युपक्षिप्तं भवति, यदुक्तं दर्पणकृता विश्वनाथेन—

"उपन्यासः प्रसादनम्" इति। वसन्ततिलकं वृत्तम्।

(२६) शकुन्तलायाः शरीरदौर्बल्यप्रदर्शनपूर्वकं गमनं निवारयन्नाह, उत्सृज्येति—कुसुमशयनं पुष्पशय्यां उत्सृज्य परित्यज्य नलिन्या दलैः कल्पितं रचितं स्तनयोः आवरणम् आच्छादनं यस्यास्तथाभूता त्वं परितः बाधा परिबाधा तया पेलवैः मृदुलैः अङ्गैः आतपे उष्णे कथं गमिष्यसि नैव गन्तुं शक्ष्यसि, स्वभावतः सुकुमारशरीरा, मदनजनिततापा बलवदसुस्थावस्था च त्वं कुसुमशयनं परित्यज्य कथमपि गन्तुं नार्हसि, मद्विरहजनितज्वरोपशमनार्थमेव त्वया कुसुमशयनादिशीतोपचार आचरितः, अथ मय्यागतेऽपि पुनः कथं मामुपेक्षसे उपेक्ष्यापि च कथं गतुं शक्यते तथा सति नूनमहं बलवद् ग्रहीष्यामि निवारकेतरजनसन्निधानाभावादिति कथं गमिष्यसीति शब्दार्थः। परिकरः, काव्यलिङ्गम्। आर्य्या जातिः।

शकुन्तला—पोरव ! पोरव ! मअणसंतत्तावि ण हु अत्तणो पहवामि, रक्ख अविणअं अधवासरणा किं दाणिं एत्थ करिस्सं। *

राजा—धिग् व्रीडितोऽस्मि।

शकुन्तला—ण क्खु अहं महाराअं भणामि देव्वं उवालहामि। †

राजा—अनुकूलकारि दैवं कथमुपालभ्यते।

शकुन्तला—कधं दाणिं ण उवालहिस्सं ? जं मं अत्तणो अणीसं कदुअ परगुणेहिं लोहावेदि। ‡

राजा—( स्वगतम् )

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वात्
आबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः॥ २७॥

( शकुन्तला गच्छत्येव )

---

* पौरव ! पौरव ! मदनसंतप्तापि न खल्वात्मनः प्रभवामि। रक्षाविनयम्। अथवाशरणा किमिदानीमत्र करिष्यामि।

† न खलु अहं महाराजं भणामि, दैवम् उपालभे।

‡ कथमिदानी नोपालप्स्ये ? यन्मामात्मनोऽनीशां कृत्वा परगुणैर्लोभयति।

---

(२७) वाचैव चातुर्यमभिव्यञ्जयन्तीं शकुन्तलामप्रस्तुतेन प्रशंसयन्नाह, अपीति—कुमार्यः अजाततरुणसम्बन्धास्तरुण्यः महति अत्यधिके औत्सुक्ये औत्कण्ठ्ये सत्यपि दयितप्राप्तौ जातोत्कण्ठायामपीत्यर्थः, दयितस्य प्रियतमस्य प्रार्थना कार्यविशेषसिद्ध्यर्थं याच्ञा तासु प्रतीपाः विपरीताः, प्रियतममनोरथपराङ्मुख्य इत्यर्थः, तथा व्यतिकरे अन्योन्यसमागमे यत् सुखं परस्परसङ्गमजनितमानन्दं तत् काङ्क्षन्त्यः अभिलपन्त्यः अपि स्वाङ्गानां दाने समर्पणे कातराः भीरुका भवन्ति अत एव क्षिप्तः परिक्षिप्तः कालः सुरतसमयो याभिस्ताः सुरतोपयोग्यं कालं लब्ध्वापि लज्जारूपप्रमादवशात्तं व्यर्थीकृत्य स्थिताः सत्यः, लब्धान्तरत्वात् प्राप्तावसरत्वात् मदनेन कामेन एव न आबाध्यन्ते न पीड्यन्ते किन्तु मनसिजमपि काममपि आबाधन्ते पीडयन्ति।

यौवने विनिहितपदाः कुमार्यः प्रियसङ्गमार्थमतिशयमुत्कण्ठन्ते, भाग्येन रहसि

राजा—न कथमात्मनः प्रियं करिष्ये ? ( उपसृत्य पटान्तमवलम्बते )

शकुन्तला—पोरव ! रक्ख रक्ख विणअं, इदोतदो इसिओ सञ्चरन्ति ।*

राजा—भीरु ! अलं गुरुजनभयेन । न ते विदितधर्मा तत्रभवान् कण्वः कुलपतिः तत्र दोषं ग्रहीष्यति । अपि च—

गान्धर्वेण विवाहेन बह्वचो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ २८ ॥

* पौरव ! पौरव ! रक्ष रक्ष विनयम् इतस्ततः ऋषयः सञ्चरन्ति ।

समुपलब्धे प्रियसङ्गमसमये लज्जया किमपि कर्तुं कथयितुं वा न प्रभवन्ति प्रियतमोऽपि प्रथमसमागम इति मत्वा—

"सहसा वाप्युपक्रान्ता कन्याभावमविन्दता ।
भयं चिन्तां समुद्वेगं सद्यो द्वेषञ्च गच्छति ॥"

इति वात्स्यायनीयवचनमनुस्मृत्य प्रणयभङ्गभिया च सुरतप्रस्तावनामात्रमुपस्थाप्य बलात् किमपि न विदधाति, तरुणी पुनरेवमेव तं सुवर्णसंयोगमतिवाह्य मदनेन पूर्ववत्पीडिता भवति, भगवान् मदनोऽपि "प्रियसङ्गमं प्रापितासि, यथासुखमनुभवेदानीमन्योन्यव्यतिकरसुखम् ।" इत्येवं लक्षणस्य स्वादेशस्य तयाऽननुष्ठानात् स्वयमपि पीडितो भवतीत्यर्थः ।

अत्र उभयोराराधनारूपैकक्रियाभिसम्बन्धादन्योन्यालङ्कारः, क्षिप्तकाला अत एव मदनेन आबाध्यन्त इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, शकुन्तलेति विशेषेऽभिधानीये कुमार्यं इति सामान्येनाभिधानादप्रस्तुतप्रशंसा च । मन्दाक्रान्ता वृत्तम् ।

(२८) ननु मर्यादाविरुद्धमीदृशं दुराचारमाकर्ण्य गुरुजनः किं कथयिष्यतीत्याशङ्कयाभिसरणभीरुकां शकुन्तलां कामशास्त्रकोविदो दुष्यन्तः कन्याविश्रम्भणोपायं सम्यङ्मनसि निधाय समाधत्ते गान्धर्वेणेति—बह्वयः असङ्ख्याः राजर्षीणां कन्यकाः गान्धर्वेण विवाहेन गान्धर्वनाम्ना विवाहेन, अन्योन्यसमुपजातस्नेहात्कृतो विवाहो गान्धर्वविवाहः, यदुक्तं याज्ञवल्क्येन—

"गान्धर्वः समयान्मिथः ।" इति

तथाचोक्तं मनुनापि—

"इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः ॥"

शकुन्तला—मुञ्च दाव मं, भूओ वि सहीजणं अणुमाणइस्सं ।*

राजा—भवतु, मोक्ष्यामि ।

शकुन्तला—कदा ।†

राजा—

अपरिक्षतकोमलस्य यावत्
कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते
सदयं सुन्दरि ! गृह्यते रसोऽस्य॥२९॥

(इति मुखमस्याः समुन्नमयितुमिच्छति, शकुन्तला नाट्येन परिहरति, राजा च मण्डपोद्धिरात्मानमवलोक्य दिशोऽवलोकयति) ।

---

* मुञ्च, तावन्मां, भूयोऽपि सखीजनमनुमानयिष्ये ।

† कदा ।

---

परिणीता ऊढाः, (अनेन राजर्षेर्विश्वामित्रस्य दुहितुस्तवापि गान्धर्वविवाहः प्रशस्यतर एवेति सूचितं भवति ।)

न च स्वस्य गान्धर्वविवाहमुद्दिश्य मे काचन आशंका किन्तु गुरुजनेभ्यः सङ्गोप्य स्वातन्त्र्येण क्रियमाणेऽस्मिन् विवाहे आत्मानं सापराधं मन्य इत्याशङ्क्याह—गान्धर्वविवाहानन्तरं ताश्च कन्यकाः पितृभिः गुरुजनैः अभिनन्दिता अनुमोदिता श्चेति पुराणादिषु श्रूयन्त अतो गुरुजनापेक्षया त्वया स्वल्पोऽपीह विपरीतस्तर्को नानुसन्धेयः । पथ्यावक्त्रं वृत्तम् ।

(२९) मोचनाभिसन्धिमेव तावत्कथयति, अपरिक्षतेति—न विद्यते परिक्षतं यस्य स चासौ कोमलश्च तस्य भ्रमरादिना अनुपहतमार्दवस्य नाद्यावधि केनाप्यनुभूतस्य च, नवस्य नूतनस्य सद्योविकसितस्य प्रथमास्वाद्यस्य च, कुसुमस्य इव ते तव अधरस्य मद्भाग्योपचयलब्धस्येत्यर्थः, षट्पदेन भ्रमरेण इव पातुमिच्छता मया रसः अधरसुधाद्रवः सदयं यावद् गृह्यते अधरपानं क्रियत इत्यर्थः ।

अत्र सुन्दरीतिपदेन गाढालिङ्गनाभिलापः सूचितो भवति ।

नाटके सम्भोगशृङ्गारस्य साक्षाद्वर्णनेन रसभङ्गप्रसंगो भवतीति नाट्येन परिहरतीत्यादिना सूचितं भवति, यदुक्तं भगवता भरताचार्य्येण—

"न च तच्चुम्बनं कुर्यान्निर्व्याजालिङ्गनं न च ।
दन्तच्छेदं नखच्छेदं तथा लज्जाकरञ्च यत् ॥" इति ।

कथं प्रकाशं निर्गतोऽस्मि ।

( शकुन्तलां हित्वा तैरेव पदैर्निवर्तते )

शकुन्तला:—( पदान्तरे प्रति निवृत्य साङ्गभङ्गम् ) पोरव ? अणिच्छापूरओवि सम्भाषणमेत्त परिचिदो अग्रं जणो ण विसुमरिदव्वो ।※

राजा—सुन्दरि !

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिवावसाने छायेव पुरो मूलं वनस्पतेः ॥३०॥

शकुन्तला—( स्तोकमन्तरं गत्वा आत्मगतम् ) हद्दी हद्दी, इमं सुणिअ ण मे चलणा पुरोमुहा पसरन्ति । भोदु, इमेहिं पज्जन्तकुरुवएहिं ओवारिदसरीरा भविअ पेक्खिस्सं दाव से भावाणुबन्धं ।†

राजा—प्रिये ! कथमेवमनुरागैकरसं मामुत्सृज्य निरपेक्षैव गतासि—

अनिर्दयोपभोगस्य रूपस्य मृदुनः कथम् ।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥३१॥

---

※ पौरव ! अनिच्छापूरकोऽपि सम्भाषण मात्रपरिचितोऽयं जनो न विस्मर्तव्यः।

† हा धिक् हा धिक्, इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः । भवतु, एभिः पर्यन्तकुरुवकैरपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धम् ।

---

मालभारिणी वृत्तम्-तल्लक्षणं यथा—

"विषमे ससजे नगे नगे नाविषमस्त्रेण तु मालभारिणीयम् " इति ॥

(३०) त्वमिति—हे सुन्दरि ! दिवावसाने अपराह्णकाले पुरः अग्रे दूरम् अपि गच्छन्ती वनस्पतेः अश्वत्थादितरोः छाया मूलं मूलदेशमिव, दूरं गच्छन्ती अपि त्वं मे हृदयं स्वान्तं न जहासि न परित्यजसि, सर्वदैव मे निकट एव तिष्ठसि, कथं विस्मरिष्यामि । उपमालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(३१) अस्याः परित्यागक्रौर्यंप्रदर्शयति, अनिर्दयेति—अनिर्दयम् अगाढं यथास्यात्तथा उपभोगः सम्भोगो यस्य तथोक्तस्य मृदुनः कोमलस्य रूपस्य आकृतेः शिरीषस्य तदाख्यपुष्पस्य बन्धनं वृन्तम् इव, ते भवत्याः चेतः हृदयं कठिनं कठोरं कथं वर्तते खलु ।

यथातिकोमलस्य शिरीषपुष्पस्य कठिनं वृन्तं सर्वथा तदसदृशं प्रतिभाति तथैव इदं मत्परित्यागलक्षणं कर्मापि ईदृश्या भवत्याः कोमलाकृतेः सर्वथा विपरीतं वर्तते ।

शकुन्तला—एदं सुणिअ दाणिं ण मे अत्थि विहवो गच्छिदुं।*

राजा—सम्प्रति प्रियाशून्ये अस्मिन् लतामण्डपे किं करोमि। (अग्रतो विलोक्य) हन्त! व्याहतं मे गमनम्।

मणिबन्धाद्गलितमिदं सङ्क्रान्तोशीरपरिमलं तस्याः।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः॥३२॥

(सबहुमानमादत्ते)

शकुन्तला—(हस्तं विलोक्य) अम्मो दोव्वल्लसिढिलदाए परिब्भट्टं एदं मिणालवलअं ण मए परिण्णादं।†

राजा—(मृणालवलयमुरसि निक्षिप्य) अहो! स्पर्शः—

अनेन लीलाभरणेन ते प्रिये!
विहाय कान्तं भुजमत्र तिष्ठता।

* इदं श्रुत्वेदानीं न मेऽस्ति विभवो गन्तुम्।
† अहो दौर्बल्यशिथिलतया परिभ्रष्टम् एतन् मृणालवलयं न मया परिज्ञातम्।

अत्र हेतुं विना कोमलवस्तुनिष्ठचित्तवृत्तेः काठिन्यरूपकार्योत्पत्तौ विभावना मार्दवकारणे सत्यपि चित्तस्य तथात्वाभावाद्विशेषोक्तिश्च, शिरीषस्येवेत्यत्रोपमापि, सर्वेषामेतेषां मिथोऽनपेक्षया एकत्र संस्थित्या संसृष्टिः। पथ्यावक्त्रं वृत्तम्।

(३२) तदेव गमनव्याघातं सहेतुकमाह, मणिबन्धादिति—तस्याः शकुन्तलायाः मणिबन्धात् कलाचिकायाः, कङ्कणस्थानादित्यर्थः, "अधस्तस्यामणिबन्धात् स्यात् प्रकोष्ठः कलाचिका" इत्यभिधानचिन्तामणिः। गलितं प्रभ्रष्टम्, संक्रान्तस्तस्याः शरीरसंस्पर्शात् संल्लग्नः उशीरस्य वीरणतृणमूलानुलेपनस्य परिमलो विमर्दोत्थः सुगन्धः यस्मिन् तत् इदं पुरोवर्तमानं अग्रे पतितमित्यर्थः, मृणालवलयं मृणालनिर्मितं कङ्कणं मे हृदयस्य निगडमिव लौहनिर्मितबन्धनशृङ्खलमिव पुरतः अग्रतः स्थितम्।

शकुन्तलाहस्तगलितमिदं मृणालकङ्कणमवलोक्य यतो न मे पादावेकपदमपि गन्तुं प्रभवतस्ततः सम्भावयामि यत्तया मम हृदयस्य निगडनाय बन्धनमेतदिह स्थापितमिति भावः। उत्प्रेक्षा। आर्य्या।

(३३) अचेतनमपि मृणालवलयं कामावेशवशात् चेतनाचेतनेषु प्रकृतिकृपणतया उपकृतिपक्षे प्रक्षिपन्नाह, अनेनेति—हे प्रिये! कान्तं रमणीयं भुजं

जनः समाश्वासित एष दुःखभाक्
अचेतनेनापि सता, न तु त्वया ॥३३॥

शकुन्तला—अदो बरं ण समत्थह्मि विलम्बिदुं, भोदु एदेण ज्जेव अवदेसेण अत्ताणं दंसइस्सं। * ( इत्युपसर्पति )

राजा—( दृष्ट्वा सहर्षम् ) अये ! जीवितेश्वरी मे प्राप्ता, परिदेवनानन्तरं प्रसादेन उपकर्तव्योऽस्मि खलु दैवस्य—

पिपासाक्षामकण्ठेन याचितश्चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥३४॥

* अतः परं न समर्थास्मि विलम्बितुं, भवतु, एतेन एव अपदेशेन आत्मानं दर्शयिष्यामि ।

बाहुं विहाय परित्यज्य अत्र वने तिष्ठता अनेन मन्निकटस्थितेन ते भवत्याः लीलाया आभरणेन विलासालङ्करणेन अचेतनेनापि जडेनापि सता, दुःखं त्वद्वियोगवेदनां भजति इति तथाभूतः कामसन्तापतापितः एष मल्लक्षणो जनः समाश्वासितः, तु किन्तु सचेतनेनापि सता त्वया न समाश्वासितः न सान्त्वनां प्रापितः ।

तव हस्तगतमचेतनमपि मृणालवलयं विरहकातरं मामवलोक्य दयालुतया समाश्वासयितुं त्वां तत्याज परन्तु सचेतना मम दुःसहविरहवेदनां जानाना अपि त्वं मामवमत्य गतासीत्यहो ते हृन्नैष्ठुर्यमिति भावः। व्यतिरेकालङ्कारः। वंशस्थविलं वृत्तम् ।

(३४) तमेव प्रसादम् अप्रस्तुतप्रशंसया प्रकटयति, पिपासेति—पातुमिच्छा पिपासा तया क्षामः कण्ठो यस्य सः तेन तृषा शुष्ककण्ठेन पक्षिणा चातकेन अम्बु सलिलं याचितं प्रार्थितं अथ नवेन मेघेन अभिनवपयोधरेण उज्झिता मुक्ता धारा जलधारा न तु जलबिन्दुः, अस्य मुखे चातकवदने निपतिता ।

चातको यथाभिनवजलधारया मेघेनोपकृतस्तथैवाहमपि पुनरागतयानयोपकृत इत्यर्थः ।

अत्र "समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके । खले कपोतिकान्यायात् तत्करः स्यात्परोऽपि चेत् ।" इति दर्पणकारवचनात् प्रार्थनापतनक्रिययोरेककालिकत्वकीर्तनात् समुच्चयालङ्कारः। पथ्यावक्त्रं वृत्तम् ।

शकुन्तला—(राज्ञः सम्मुखे स्थित्वा) अज्ज ! अद्धपधे सुमरिअ एदस्स हत्थब्भंसिणो मिणालवलअस्स किदे पडिणिवुत्तह्मि, कधिदं मे हिअएण तुए गहीद त्ति, ता णिक्खिव एदं, मा मं अत्ताणञ्च मुणिअणेसुं पआसइस्ससि ।*

राजा—एकेन अभिसन्धिना प्रत्यर्पयामि ।

शकुन्तला—केण उण ।†

राजा—यदि इदमहमेव यथास्थानं निवेशयामि ।

शकुन्तला—आ ! का गदी, भोदु एदं दाव ।‡ ( इत्युपसर्पति )

राजा—इतः शिलापट्टैकदेशं संश्रयावः । ( इत्युभौ परिक्रम्योपविष्टौ )

राजा—( शकुन्तलाया हस्तमादाय ) अहो ! स्पर्शः—

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा ।
प्ररोहः सम्भृतो भूयः किंस्वित् कामतरोरयम् ॥३५॥

शकुन्तला—( स्पर्शं रूपयित्वा ) तुवरदु तुवरदु अज्जउत्तो ।×

---

* आर्य ! अर्द्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते प्रतिनिवृत्तास्मि, कथितं मे हृदयेन त्वया गृहीतमिति, तन्निक्षिपेदं, मा मामात्मानञ्च मुनिजनेषु प्रकाशयिष्यसि ।

† केन पुनः ।

‡ आः ! का गतिः, भवतु एवं तावत् ।

× त्वरतां त्वरतामार्यपुत्रः ।

---

(३५) अस्याः स्पर्शं प्रशंसन्नाह, हरेति—हरस्य कोपाग्निस्तेन दग्धस्तस्य त्रिलोचननयनाग्निना भस्मीकृतस्य कामतरोः मदनपादपस्य, अमृतवर्षिणा पीयूषवर्षिणा दैवेन अनुकूलभागधेयेन, अयम् अनुभूयमानसुखस्पर्शः करः, भूयः पुनः प्ररोहः अङ्कुरः सम्भृतः जनितः किम् ? किं स्विदित्यत्रैकैकस्यापि प्रश्नवितर्कोभयार्थत्वे एकः प्रश्नपरोऽपरो वितर्कपर इत्यवसेयम् । अस्याः कररूपेण कामतरुरङ्कुरितः किमित्यर्थः ।

अस्मिन् पद्ये कामतरोः प्ररोह इत्यत्र रूपकं, स्विदित्यत्र सन्देहश्च । अनुष्टुप् छन्दः ।

राजा—( सहर्षमात्मगतम् ) इदानीमस्मि विश्वसितः, भर्त्तुः आभाषण-पदमेतत् । ( प्रकाशम् ) सुन्दरि ! नातिश्लिष्टः सन्धिः अस्य मृणालवलयस्य, यदि तेऽभिमतं, तदन्यथा घटयिष्यामि ।

शकुन्तला—( स्मितं कृत्वा ) जधा दे रोअदि ।*

राजा—( सव्याजं विलम्ब्य प्रतिमोच्य ) सुन्दरि ! दृश्यताम्—

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिमाश्रितः ॥३६॥

शकुन्तला—ण दाव णं पेक्खामि, पवणकम्पिदकण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी ।†

राजा—( सस्मितम् ) यद्यनुमन्यसे तदहमेनां वदनमारुतेन विशदां करवाणि ।

शकुन्तला—तदो अणुकम्पिदा भवेअं, किन्तु उण अहं ण दे वीससेमि ।‡

राजा—मा मैवं, नवो हि परिजनः सेव्यानाम् आदेशात् परं न वर्त्तते ।

---

* यथा ते रोचते ।

† न तावदेनं प्रेक्षे, पवनकम्पितकर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः ।

‡ तदा अनुकम्पिता भवेयम्, किन्तु पुनरहं न ते विश्वसिमि ।

---

(३६) वलयमन्यथा घटयित्वा तदेव प्रशंसन्नाह, अयमिति—अयं सः सर्वलोकविदितः नवः अभिनवोदितः कलामात्रेण स्थित इति भावः, निशाकरो निशापतिः उज्झितं परित्यक्तम् अम्बरं व्योम येन तथोक्तः सन् श्यामा चासौ लता श्यामलता तद्वन्मनोहरो मनोरमस्तं ते भवत्याः करं हस्तं मृणालरूपेण मृणालव्याजेन समेत्य विशेषा समधिका या शोभा तस्या इदं शोभाविशेष—सम्पादनार्थम् उभयकोटिं प्रान्तभागद्वयम् आश्रितः आश्रित्य स्थित इत्यर्थः । वंशस्थविलं वृत्तम् ।

शकुन्तला—अअं ज्जेव अच्चाअरो अविस्सासजणओ ।*

राजा—( स्वगतम् ) नैवमहमात्मनो रमणीयं सेवावसरं शिथिलयिष्ये ।

( इति मुखमुन्नमयितुं प्रवृत्तः, शकुन्तला च प्रतिषेधं रूपयन्ती विरमति )

राजा—अयि मदिरेक्षणे ! अलमस्मदविनयाशङ्कया ।

( शकुन्तला किंचित् दृष्ट्वा व्रीडावनतमुखी तिष्ठति )

राजा—( अङ्गुलिभ्यां मुखमुन्नमय्य आत्मगतम् )

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥३७॥

शकुन्तला—परिण्णाणमन्थरो विअ अज्जउत्तो ।†

राजा—कर्णोत्पलसन्निकर्षादीक्षणमूढोऽस्मि । ( मुखमारुतेन चक्षुः सेवते )

शकुन्तला—भोदु, पइदित्थदंसणह्मि संवुत्ता । लज्जेमि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स ।‡

राजा—सुन्दरि ! किमन्यत् ?

इदमध्युपकृतिपक्षे सुरभिमुखं ते यदाघ्रातम् ।
ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण ॥३८॥

---

* अयमेव अत्यादरोऽविश्वासजनकः ।

† परिज्ञानमन्थर इव आर्यपुत्रः ।

‡ भवतु प्रकृतिस्थदर्शनास्मि संवृत्ता । लज्जे पुनरनुपकारिणी प्रियकारिण आर्यपुत्रस्य ।

---

(३७) अधरं वर्णयन् स्वाभिप्रायं प्रकाशयति, चारुणेति-अयं हस्तोन्नमितः अपरिक्षतः न केनापि दशनैः दष्टपूर्वः अतएव कोमलः सुकुमारः न केनाप्यास्वादितपूर्वः, प्रियाया अधरः रदच्छदः "ओष्ठोऽधरो रदच्छदः" इत्याभिधानचिन्तामणिः, चारुणा मनोहरेण स्फुरितेन स्पन्दितेन पातुम् इच्छतः पिपासतः अधरम् अभिलषतः मे मह्यम् अनुज्ञां पाने अनुमतिं ददातीव । एतेन स्पृहानामकं नाट्यालङ्करणमुक्तं भवति, तद् यथा विश्वनाथः—

"आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा ।" इति ।

अत्र क्रियोत्प्रेक्षा । अनुष्टुब्वृत्तम् ।

(३८) ननु यस्त्वयानुमतं तदेव तावद्बहूपकृतमित्याह, इदमिति—ते भवत्याः सुरभि कमलामोदि मुखं यद् आघ्रातं इदमपि ते कमलामोदिमुखा-

शकुन्तला—( सस्मितम् ) असन्तोसे उण किं करेदि ।❀

राजा—इदम् ( इति राजा तथा कर्तुं व्यवसितः, शकुन्तला च वक्त्रं ढौकते )

( नेपथ्ये । )

चक्कवाअवहु ! आमन्तेहि सहअरं । उअट्ठिआ रअणी ।†

शकुन्तला—( ससंभ्रमम् ) पोरव ! असंसअं मम सरीरवुत्तन्तोवलम्भणणिमित्तं तादकण्णस्स धम्मकणीअसी अज्जा गोदमी इदो एव्व आअच्छदि । जाव विडवन्तरिदो होहि ।‡

राजा—तथा । (इति विटपान्तरितो भवति)

( ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च । )

सख्यौ—इदो इदो अज्जा गोदमी । ×

गौतमी—जादे ! अचाहिदं सुणिअ आअदा, तुमं पुणो इध देवदासहाइणी चिट्ठसि ?

शकुन्तला—दाणिं ज्जेव अणसूआपिअंवदाओ मालिणीं ओदीण्णाओ ।

गौतमी—( शकुन्तलामुपेत्य ) जादे ! णिराबाधा मे चिरंजीव । अवि लहुसंदावाइं दे अङ्गाइं । +

शकुन्तला—अम्मो अत्थि मे विसेसो ।ऽऽ

---

❀ असन्तोषे पुनः किं करोति ।

† चक्रवाकवधूः, आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।

‡ पौरव ! असंशयं मम शरीरवृत्तान्तोपलम्भननिमित्तं तातकण्वस्य धर्मकनीयसी आर्या गौतमीत एवागच्छति । यावद्विटपान्तरितो भव ।

× इत इत आर्या गौतमी ।

+ जाते ! निराबाधा मे चिरंजीव । अपि लघुसंतापानि तेऽङ्गानि ।

ऽऽ अहो अस्ति मे विशेषः ।

---

घ्राणमपि उपकृतिपक्षे उपकृतिकोटावेव मया गणितम्, ननु मधुकरः भ्रमरः "अपि" कमलस्य गन्धमात्रेण गन्धेन एव सन्तुष्यति परितोपमाप्नोति, अत्र गन्धमात्रेणेत्यत्र केवलेन गन्धेनैव सन्तुष्यति, यावल्लभ्यते तावदेव गृह्णातीत्यर्थः, नान्यत् किमपि याचते इति मात्रपदेन प्रार्थनीयं किमपि विशिष्टं वस्तु ध्वन्यते । प्रतिवस्तूपमालङ्कारः । आर्या जातिः ।

गौतमी—( शान्त्युदकेन शकुन्तलामभ्युक्ष्य ) इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि । ( शिरसि शकुन्तलामभ्युक्ष्य ) वच्छे ! परिणदो दिअहो । एहि । उडजं एव्व गच्छह्म ।❀

( इति प्रस्थिताः । )

शकुन्तला—( आत्मगतम् ) हिअअ ! पढमं सुहोवणदे मणोरहे कालहरणं करेसि, सम्पदं अणुभव दाव दुक्खं । ( पदान्तरे स्थित्वा प्रकाशम् ) लदाघर संदावहारअ ! आमन्तेमि तुमं भूओ वि परिभोअत्थं ।†

( इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः )

राजा—( पूर्वस्थानमुपेत्य सनिःश्वासम् ) अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः । मया हि—

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥३९॥

---

❀ जाते ! अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । वत्से ! परिणतो दिवसः । एहि । उटजमेव गच्छामः ।

† हृदय ! प्रथमं सुखोपनते मनोरथे कालहरणं करोषि । साम्प्रतम् अनुभव तावत् दुःखम् । लतागृह संतापहारक ! आमन्त्रये त्वां भूयोऽपि परिभोगार्थम् ।

---

(३९) प्रार्थितार्थसिद्धयो विघ्नवत्य इत्यत्र हेतुं प्रदर्शयति, मुहुरिति—मुहुः भूयो भूयः प्रतिषेधाक्षरेण "मा, मा, अलं, एवं मा" इति लक्षणेन वर्णप्रयोगेण यः विक्लवः व्याकुलीभावः प्रियपरवशतेत्यर्थः, तेन अभिरामं रमणीयं, "निषेधार्थं हस्तौ न व्यापारयन्त्याः केवलं वाचा प्रतिषिध्यमानायास्तस्या गाढाश्लेषाभिलाषः सूचितो भवति" एवम् अङ्गुलीभिः करशाखाभिः संवृतः सम्यक् प्रच्छादितः अधरोष्ठः यस्य तत् अंसयोः स्कन्धयोः विवर्तते विवलत इत्यंसविवर्ति स्कन्धदेशपरावर्ति चुम्बनशङ्काजनितलज्जयेत्यर्थः, पक्ष्मले मृदुललोमशालिनी अक्षिणी यस्याः सा पक्ष्मलाक्षी तस्याः मुखम् आननं कथमपि महता प्रयासेन उन्नमितं चुम्बनार्थं- मूर्ध्वीकृतं तु किन्तु न चुम्बितं, चुम्बनविचारचर्चायामेव समयमत्यवाहयमित्यर्थः । गौतमीसमागमभिया न चुम्बितमिति कल्पना न रसविशेषमुत्कर्षतां नयति, कमलपरागकलुषितामस्या दृष्टिं मुखमारुतेन विशदीकर्तुं चिरादस्य प्रवृत्तत्वात् । गौतम्याश्च बहोः कालादनन्तरं तत्रोपस्थितत्वात् तत्प्रागेव निर्मक्षिकतया बहुवारं सुचिरञ्च तथाकर्तुं शक्यत्वात् ।

अत्र कथमपीत्यस्यार्थस्प्रति विशेषणत्रयस्य हेतुत्वकथनात् काव्यलिङ्ग

क नु खलु संप्रति गच्छामि । अथवा । इहैव प्रियापरिभुक्तमुक्ते लता-मण्डपे मुहूर्तं स्थास्यामि । ( सर्वतोऽवलोक्य )

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्रान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद् भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि ॥४०॥

( विचिन्त्य ) अहो ! धिक् असम्यक् चेष्टितं प्रियां समासाद्य काल-हरणं कुर्वता मया । तदिदानीम्—

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि, प्रकृतिदुरवापाहि विषयाः ।

---

स्वभावोक्तिश्च । औपच्छन्दसिकं वृत्तम्, तल्लक्षणं यथा—"गौपच्छन्दसकम्" इति । वैतालीये छन्दसि'अन्ते गकारश्चेदधिको भवति तदा औपच्छन्दसकं नामच्छन्द इत्यर्थः।

(४०) तत्रत्यं तदुपभुक्तं पदार्थजातमवलोक्य भृशमारूढां स्वीयामासक्तिमेव व्यनक्ति, तस्या इति-तस्याः पुरः इव स्थिताया मम प्रियायाः, शरीरेण कामसन्ताप-सन्तप्तेन देहेन लुलिता विमर्दिता बहुविधसुरतक्रियानिपुणतया इतस्ततो विक्षिप्ता वा शिलायां उपलपट्टिकायाम् इयं सम्मुखस्थिता पुष्पमयी पुष्पनिर्मिता शय्या, एषः पुरस्थितः नलिन्याः कमलिन्याः पत्रे दले नखैः अर्पितः दत्तः लिखित इत्यर्थः, कान्तः मनोहरः मन्मथस्य कामस्य लेखः लिपिः, हस्तात् प्रियायाः कराद् भ्रष्टं पतितम् इदं पुरो दृश्यमानं बिसाभरणं मृणालालङ्करणम् इति इत्थं निरुक्ततर्क-पूर्वकं, आसमन्तात् सज्जमाने वस्तुभिः सम्बध्यमाने अवलोकयितुं प्रवृत्त इत्यर्थः, ईक्षणे नयने यस्य तथाभूतोऽहं सहसा प्रियाप्रेमकातरीभूतं मनः प्रकृतौ स्थापनमन्तरेण शून्यादपि प्रियाविरहितादपि अस्माद् वेतसगृहाद् वेतसलतामण्डपात् निर्गन्तुं बहिर्गन्तुं न शक्नोमि न प्रभुरस्मि, शकुन्तलाशरीरलुलितान्युपभोगचिह्नानि दर्शंदर्शं मुग्धं मम मनो मुहुर्मुहुर्मोहमनुभवति, इहैव तदुपभुक्तलतामण्डपे चिरं स्थित्वा तच्छरीरलुलितैः शयनादिभिः स्वशरीरसम्बन्धं बहु मन्यत इति भावः ।

अत्र शकुन्तलाभावरूपनिर्गमनकारणस्य सद्भावादपि निर्गमनाभावप्रतिपा-दनाद्विशेषोक्तिः । शकुन्तलासद्भावरूपकारणस्याभावात्तत्स्थितिरूपकार्यकथनाद्विभा-वना, अनयोश्च साधकबाधक प्रमाणाभावात्सन्देहसङ्करः । शार्दूलविक्रीडितम् ।

(४१) स्वकृतकालहरणमनुशोचन्नाह, रह इति—सुवदना सुन्दरं वदनं

इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥४१॥

(नेपथ्ये।)

भो भो राजन्!

सायंतने सवनकर्मणि संप्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम् ॥४२॥

राजा—(आकर्ण्य सावष्टम्भम्) भो भोस्तपस्विनः! न भेतव्यं न भेतव्यम्, अयमहमागच्छामि। (इति निष्क्रान्तः)

इति तृतीयोऽङ्कः।

---

यस्याः सा सुवदना सुमुखी "सा मे प्रिया" यदि पुनः रहः एकान्ते प्रत्यासत्तिं मम सन्निधिं यास्यति प्राप्स्यति तदा इदानीमिव कालम् अवसरं न हास्यामि न त्यक्ष्यामि स्वाभिलषितं न साधयता कालक्षेपं न करिष्यामि, हि यतः विषयाः कामाः प्रकृत्या स्वभावेन "एव" दुरवापाः दुष्प्रापाः, इति इत्थं विघ्नैः अन्तरायैः क्लिष्टं क्लेशमापन्नं मे मम मूढहृदयं मुग्धान्तःकरणं प्रियायाः शकुन्तलायाः प्रत्यक्षं प्रत्यक्षोपस्थितिं गणयति भावयति तथा किमपि कातरमिव इतिकर्तव्यताज्ञान-शून्यमिव भवति। उत्प्रेक्षालङ्कारः, शिखरिणी वृत्तम्।

(४२) सायन्तन इति—सायंभवः सायन्तनस्तस्मिन् सायन्तने सान्ध्ये सवनस्य यज्ञस्य कर्म तस्मिन् यज्ञकर्मणि संप्रवृत्ते सम्यक् प्रारब्धे सति हुताशन-वतीम् अग्निसहितां वेदिं यज्ञियभूमिं परितः समन्ततः यज्ञभूमेश्चतुर्षु भागे-ष्वित्यर्थः, प्रकीर्णा इतस्ततः प्रसृता अतएव भयम् आदधानाः भीतिं जनयन्तः सन्ध्यापयोदवत् सान्ध्यमेघवत् कपिशाः कृष्णपीतमिश्रवर्णाः पिशितम् अश्नन्ति ये ते पिशिताशनास्तेषां राक्षसानां छायाः पुरोनिहितघृतपात्रपतितानि प्रति-बिम्बानि बहुधा नैकप्रकारं चरन्ति यातायातं कुर्वन्ति।

अत्र सन्ध्यापयोदकपिशा इत्यत्रोपमा, यतः परितः प्रकीर्णा अतो भयमा-दधाना इति काव्यलिङ्गञ्च। वसन्ततिलकं छन्दः।

इत्यभिज्ञानशाकुन्तलटीकायां सुबोधिन्याख्यव्याख्यायां तृतीयोऽङ्कः।

---

# चतुर्थोऽङ्कः ।

( ततः प्रविशतः कुसुमावचयं नाट्यन्त्यौ सख्यौ । )

अनसूया—पिअंवदे ! जइ वि गन्धव्वेण विहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूवभत्तिभाइणी संवुत्तेति णिव्वुदं मे हिअअं, तह वि एत्तिअं चिन्तणिज्जं ।❀

प्रियंवदा—कहं विअ । ❀

अनसूया—अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं वुत्तन्तं सुमरदि वा ण वेत्ति ।†

प्रियंवदा—एत्थ दाव वीसद्धा होहि, ण हि तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । एत्तिअं उण चिन्तणीअं, तादो दाणिं पडिणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।‡

अनसूया—जह अहं दक्खामि, तह तस्स अणुमदं भवे । ×

प्रियंवदा—कहं विअ । +

अनसूया—गुणवदे कण्णआ पडिबादणिज्जे त्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो ।SS

---

❀ प्रियंवदे ! यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा शकुन्तलानुरूपभर्तृभागिनी संवृत्तेति निर्वृतं मे हृदयं, तथाप्येतावच्चिन्तनीयम् ।

❀ कथमिव ।

† अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति ।

‡ अत्र तावद् विस्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । एतावत्पुनश्चिन्तनीयम् । तात इदानीं प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

× यथाहं पश्यामि, तथा तस्यानुमतं भवेत् ।

+ कथमिव ।

SS गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः । तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः ।

प्रियंवदा—एवएणेदं ( पुष्पभाजनं विलोक्य । ) सहि ! अवइदाइं बलि-कम्मपज्जत्ताइं कुसुमाइं ।*

अनसूया—णं सहीए सउन्दलाए वि सोहग्गदेवआ अच्चणीआ ता अवराइं पि अवचिणुह्म ।†

प्रियंवदा—जुज्जदि ।‡ ( इति तदेव कर्मारभेते । )

( नेपथ्ये । )

अयमहं भोः ।

अनसूया—( कर्णं दत्त्वा ) सहि ! अदिधीणं विअ णिवेदिदं ।×

प्रियंवदा—णं उडजसंणिहिदा स न्दला । ( आत्मगतम् । ) अज्ज उण हिअएण असंणिहिदा ।+

अनसूया—होदु । अलं एत्तिएहिं कुसुमेहिं ।SS

( इति प्रस्थिते । )

( पुनर्नेपथ्ये । )

आः अतिथिपरिभाविनि !

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

* एवमिदं, सखि ! अवचितानि बलिकर्मपर्याप्तानि कुसुमानि ।

† ननु सख्याः शकुन्तलायाः अपि सौभाग्यदेवतार्चनीयास्तदपराण्यपि अवचिनुवः ।

‡ युज्यते ।

× सखि ! अतिथीनामिव निवेदितम् ।

+ ननूटजसंनिहिता शकुन्तला । अद्य पुनर्हृदयेनासंनिहिता ।

SS भवतु । अलमेतावद्भिः कुसुमैः ।

(१) स्वकृतापमानस्यावश्यम्भोक्तव्यफलमाह, विचिन्तयन्तीति—न अन्ये स्वप्रियतमादतिरिक्ते जने मानसं यस्याः सा तदेकायत्तचित्तेत्यर्थः, त्वं यं स्वाभिलापविषयकं पुरुषं विचिन्तयन्ती मनसि भावयन्ती सती उपस्थितं तव सम्मुखे सन्तिष्ठमानं तपोनिधिं तपसामाधारं, सुलभकोपं दुर्वाससं मां यतः न वेत्सि न

प्रियंवदा—( उभे श्रुत्वा विषण्णे ) हद्धी हद्धी । तं एव्व संवुत्तं । जं मए चिन्तिदं, कस्सिं पि पूआरुहे अवरद्धा सुण्णहिअआ सउन्दला । ( पुरोऽवलोक्य ) ण हु जस्सिं कस्सिं पि । एसो दुव्वासो सुलहकोवो महेसी । तह सविअ वेअबलुफुल्लाए दुव्वाराए गईए पडिणिवुत्तो । को अण्णो हुदवहादो दहिदुं पहवदि ।*

अनसूया—गच्छ, पादेसु पणमिअ णिवत्तेहि णं जाव अहं अग्घोदअं उवकप्पेमि ।†

प्रियंवदा—तह । ( इति निष्क्रान्ता )‡

अनसूया—( पदान्तरे स्खलितं निरूप्य ) अव्वो । आवेअक्खलिदाए गईए पब्भट्टं मे अग्गहत्थादो पुप्फभाअणं । ( इति पुष्पावचयं रूपयति । )×

( प्रविश्य । )

प्रियंवदा—सहि ! पकिदिवक्को सो कस्स अणुणअं पडिगेण्हदि । तहा वि उण साणुक्कोसो किदो । +

---

* हा धिक्, हा धिक्, तदेव संवृत्तं यन्मया चिन्तितम् । कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभवति ।

† गच्छ । पादयोः प्रणम्य निवर्तयैनं यावदहमर्घोदकमुपकल्पयामि ।

‡ तथा ।

× अहो ! आवेगस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम् ।

+ सखि ! प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति । तथापि पुनः सानुक्रोशः कृतः ।

---

जानासि अतः सः तवाभिलाषविषयः पुरुषः बोधितोऽपि सम्यग् विज्ञापितोऽपि प्रमत्तः प्रमादी जनः प्रथमं प्राक् कृताम् उक्तां कथां वार्ताम् इव त्वां न स्मरिष्यति मया गान्धर्वेण परिणीतेयं शकुन्तलेति न ज्ञास्यतीत्यर्थः ।

यथा स्वनिकटवर्तिनमपि मां मया बहुधा बोध्यमानाऽपि भवती न ज्ञातवती तथैव सोऽपि तव प्रियो दुष्यन्तस्त्वया मुहुर्मुहुर्बोध्यमानोऽपि त्वां न ज्ञास्यतीति भावः ।

अत्र यतो विचिन्तयन्ती अतएव अनन्यमानसेति हेतुनिर्देशाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रमत्त इत्यत्र श्लेषानुप्राणितोपमा च । वंशस्थविलं वृत्तम् ।

अनसूया—( सस्मितम्। ) तस्सिं बहु एदं पि। ता कहेहि कधं तुए पसादिदो।*

प्रियंवदा—जदा णिवत्तिदुं ण इच्छदि तदा पाएसु पडिअ विण्णविदो मए। भअवं! पढमं त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वोत्ति।†

अनसूया—तदो तदो।‡

प्रियंवदा—तदो मे वअणं अण्णहाभविदुं णारिहदि। किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदि त्ति मन्तअन्तो सअं अन्तरिहिदो।×

अनसूया—सक्कं दाणिं अस्ससिदुं। अत्थि तेण राएसिणा संपत्थिदेण सणामहेअङ्किअं अङ्गुलीअअं सुमरणीअं त्ति सअं पिणद्धं। तस्सिं साहीणोवाआ सउन्दला भविस्सदि।+

प्रियंवदा—सहि! एहि, देवकज्जं दाव णिव्वत्तेह्न।ऽऽ

( इति परिक्रामतः। )

प्रियंवदा—( विलोक्य। ) अणसूए! पेक्ख दाव, वामहत्थोवहिदवअणा आलिहिदा विअ पिअसही। भत्तुगदाए चिन्ताए अत्ताणं पि ण एसा विभावेदि। किं उण आअन्तुअं।—

---

* तस्मिन्बह्वेतदपि। तत् कथय कथं त्वया प्रसादितः।

† यदा निवर्तितुं नेच्छति तदा पादयोः पतित्वा विज्ञापितो मया भगवन्! प्रथम इति प्रेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति।

‡ ततस्ततः।

× ततो मे वचनमन्यथाभवितुं नार्हति। किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन्स्वयमन्तर्हितः।

+ शक्यमिदानीमाश्वसितुम्। अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम्। तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति।

ऽऽ सखि! एहि, देवकार्यं तावन्निर्वर्तयावः।

— अनसूये! पश्य तावत्, वामहस्तोपहितवदनालिखितेव प्रियसखी। भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति। किं पुनरागन्तुकम्।

अनसूया—पिअंवदे! दुवेण एव्व णं णो मुहे एसो वुत्तन्तो चिट्ठदु। रक्खिदव्वा क्खु पकिदिपेलवा पिअसही।*

प्रियंवदा—को णाम उण्होदएण णोमालिअं सिञ्चेदि।†

( इत्युभे निष्क्रान्ते । )

## विष्कम्भकः ।

( ततः प्रविशति सुप्तोत्थितः शिष्यः । )

शिष्यः—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासात्प्रतिनिवृत्तेन कण्वेन। प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति। ( परिक्रम्यावलोक्य च । ) हन्त प्रभातप्राया रजनी। तथा हि—

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ २ ॥

---

* प्रियंवदे! द्वयोरेव ननु नौ मुख एष वृत्तान्तस्तिष्ठतु। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी।

† को नामोष्णोदकेन नवमालिकां सिञ्चति।

---

( २ ) रजन्याः प्रभातप्रायत्वमेव तावद्विवृणोति, यातीति—एकतः एकत्र पश्चिमभागे ओषधीनां मरणादिविविधविपत्तिसहस्रसंहारकारिणीनां पतिः चन्द्रोऽपि अस्तशिखरं याति ह्राससमयतया निस्तेजस्को भवतीति भावः। एकतः एकत्र पूर्वभागे अर्कः सूर्यः अरुणः अनूरुः पुरस्सरोऽग्रेसरो यस्य स तथाभूतः सन् आविष्कृतः आविर्भूतः, वृद्धिसमयतया तेजस्वी जायत इति भावः, तेजोद्वयस्य चन्द्रसूर्यलक्षणस्य युगपद् एकस्मिन् क्षण एव व्यसनोदयाभ्यां अस्तोदयाभ्यां पक्षे ह्रासवृद्धिभ्यां लोकः सुखदुःखवान् जनः आत्मदशान्तरेषु निजसुखदुःखावस्थाभेदेषु नियम्यत इव शिक्ष्यत इव, सुखदुःखयोरवश्यं भावितया तयोः प्राप्तयोः तदवस्थानुभवविकारो दुःखहर्षलक्षणो न कर्तव्य इत्युपदिश्यत इवेति भावः।

अत्र नियम्यत इवेति सम्भावनामात्रत्वात्क्रियोत्प्रेक्षा, पूर्वार्धे—यः कश्चिद् अतिसमृद्धिसम्पन्नोऽपि दैवाद् विपन्नो विलयं गत्वा जातनिर्वेदः सन् स्वबन्धुजनान् हित्वा सुदूरं गत्वा निर्जनस्थानं पर्वतादि समाश्रयति, अथवा सहसा

अपि च—

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ३ ॥

अपि च—

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥ ४ ॥

---

जाताभ्युदयः स्वं बन्धुजनम् अभ्युदयं नयति तथैवात्रापि तेजोद्वये तथाविधपुरुषद्वयव्यवहारसमारोपात् समासोक्तिः । प्रभातवर्णने प्रकृते द्वयोरपि प्राकरणिकत्वाद् अरुणपुरःसरत्वस्य तुल्यतया तुल्ययोगिता, उत्तरार्धे तेजोद्वयस्य व्यसनोदयाभ्यां यथासंख्यञ्चेत्येषां साङ्कर्यम् । वसन्ततिलकं वृत्तम् ।

( ३ ) प्रातःकालीनलावण्यालोकलोललोचनो ह्रदे दत्तदृष्टिः कश्चित् कुमुदिनीं निभालयन्नाह, अन्तर्हित इति—शशिनि चन्द्रमसि अन्तर्हिते अन्तर्धानं गते सति या पूर्वं रात्रौ चन्द्रकिरणयोगाद् विकासवत्तया सकलजनानन्ददायिनी दृष्टा सैव इयं ममपुरोवर्तमाना कुमुद्वती संस्मरणीया स्मरणविषयिणी एव शोभा यस्याः सा संकोचवत्तया वीतशोभात्वाद् इदानीं केवलं चिन्तनीयच्छविः सती दृष्टिं चक्षुः न नन्दयति न प्रीणयति, तथाहि—इष्टस्य प्रियजनस्य प्रवासेन देशान्तरावस्थानेन जनितानि उत्पादितानि दुःखानि दीर्घविरहजनितकार्श्यवैवर्ण्यादीनि मनसोऽरतिकराणि भावानि नूनम् अतिमात्रम् अत्यन्तं सुदुःसहानि सोढुमशक्यानि, मरणान्तफलानि जायन्त इत्यर्थः ।

अत्र पूर्वार्धे—यथा लोकलोचनललामभूता ललना नायकेऽन्तर्हिते दृष्टिं न नन्दयति तथैवेयं कुमुद्वती अपि चन्द्रमस्यन्तर्हिते न प्रीणयतीति व्यवहारसमारोपात् समासोक्तिः । उत्तरार्धे च सामान्येन विशेषसमर्थनाद् अर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् ।

( ४ ) कर्कन्धूनामिति—अग्रा सन्ध्या अग्रसन्ध्या प्रातःसन्ध्या कर्कन्धूनां बदरीफलानाम् उपरि स्थितं तुहिनं हिमं रञ्जयति रागसहितं करोति तत्रस्थं

अपि च—

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैः-
रत्यारूढिर्भवति महतामप्यभ्रंशनिष्ठा ॥ ५ ॥

( प्रविश्यापटीक्षेपेण । )

अनसूया—एव्वं णाम विसअपरम्मुहस्स वि जणस्स एदं ण णिवडिदं जधा तेण रण्णा सउन्दलाए अणज्जं आअरिदं ।*

---

* एवं नाम विषयपराङ्मुखस्यापि जनस्यैतन्न निपतितं, यथा तेन राज्ञा शकुन्तलायामनार्यमाचरितम् ।

---

शैत्यं विनाश्य लौहित्यमापादयतीत्यर्थः, वीता विगता निद्रा यस्य तथाभूतो मयूरः-दार्भं दर्भनिर्मितम् उटजपटलं पर्णकुटीछर्दिं मुञ्चति त्यजति, एषः पुरोवर्तमानः हरिणः खुरविलिखितात् खुरकुट्टितात् वेदिप्रान्तात् यज्ञियदेशात् स्वाङ्गं स्वशरीरम् आयच्छमानः निद्रालस्यजनितदेहसन्धिकण्डूतिं शरीरमोट्टायितेन दूरीकुर्वन् पश्चात् शरीरस्य पश्चार्धभागेन उच्चैः भवति, स्वीयावग्रचरणौ पुरतः प्रसार्य सशिरः पूर्वशरीरभागं नमयति, पश्चात्पादावग्रभागे निवेश्य अङ्गत्रोटनव्याजेन शरीरपश्चिमभागमुन्नमयतीति भावः। अत्र श्वेतगुणस्य तुहिनस्य लौहित्यप्राप्तिकथनात् तद्गुणालङ्कारः। स्वभावोक्तिश्च । मन्दाक्रान्तावृत्तम् ।

( ५ ) पादन्यासमिति—क्षयितं नाशितं तमः अन्धकारो येन तथाभूतेन येन चन्द्रेण क्षितिधराणां गुरुः क्षितिधरगुरुस्तस्य पर्वतश्रेष्ठस्य गुरोश्च सुमेरोः मूर्ध्नि शृङ्गे मस्तके च पादन्यासं किरणनिक्षेपं चरणनिक्षेपञ्च कृत्वा विष्णोः वामनावतारस्य भगवतो नारायणस्य मध्यमं धाम आकाशं क्रान्तम् आक्रान्तम् सोऽयं तथाविधमहावीरोऽपि चन्द्रः, अल्पाः शेषा येषान्ते तैः स्वल्पमात्रावशिष्टैः मयूखैः स्वैः किरणैः गगनात् आकाशात् पतति अस्तं याति, उचितमेवैतदित्याह—अत्यारूढिः अत्यन्तम् उन्नतमारोहणम् अतिवृद्धिश्च, महतामपि उन्नतानामपि अपभ्रंश एव निष्ठा अवसानं यस्यास्तथाभूता भवति "अति सर्वत्र वर्जयेत्" इति न्यायादतिसमृद्धिमानपि कश्चित् न तथा एव चिरं तिष्ठतीति भावः। अत्र यथा त्यक्तगुरुजनमर्यादः कश्चित् समृद्धिमानपि विपन्नः सन् दुर्दशामनुभवति तथैवायं चन्द्रोऽपीति व्यवहारसमारोपात् समासोक्तिः, उत्तरार्धे च अर्थान्तरन्यासः। मन्दाक्रान्ता वृत्तम् ।

शिष्यः—यावदुपस्थितां होमवेलां गुरवे निवेदयामि। (इति निष्क्रान्तः।)

अनसूया—णं पहादा रअणी, ता सिग्घं सअणं परिच्चआमि अधवा लहु लहु उत्थिदा वि किं करिस्सं ? ण मे उइदेसुं पहादकरणीएसुं हत्थ-पाआ प्पसरन्ति। कामो दाणिं सकामो होदु। जेण असच्चसंधे जणे सुण्णहिअआ पिअसही पदं कारिदा। अहवा ण तस्स राएसिणो अवराहो, दुव्वाससो कोवो क्खु एसो विआरेदि। अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स कालस्स लेहमेत्तं पि ण विसज्जेदि। त इदो अहिण्णाणं अङ्गुलीअं से विसज्जेम। अधवा दुक्खसीले तवस्सिजणे को अब्भत्थीअदु। णं सहीगामी दोसो त्ति व्ववसिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकण्णस्स दुस्सन्तपरिणीदं आवण्ण-सत्तं सउन्दलं णिवेदिदुं। ता इत्थंगए अह्मेहिं किं करणिज्जं।*

(प्रविश्य।)

प्रियंवदा—(सहर्षम्।) सहि! तुवर सउन्दलाए पत्थाणकोदुअं णिव्वत्तिदुं।†

अनसूया—सहि! कहं एदं।‡

प्रियंवदा—सुणाहि, दाणिं सुहसइदपुच्छिआ सउन्दलासआसं गदह्मि। तदो जाव एणं लज्जावणदमुहिं परिस्सजिअ तादकण्णेण एव्वं अहिणन्दिदं "वच्छे! दिट्ठिआ धूमाउलिदिट्ठिणो वि जअमाणस्स पाअए एव्व आहुदी पडिदा। जाते! सुसिस्सपरिदिण्णा विज्जा विअ

* ननु प्रभाता रजनी, तच्छीघ्रं शयनीयं परित्यजामि, अथवा लघु लघु उत्थितापि किं करिष्यामि न मे उचितेषु प्रभातकरणीयेषु हस्तपादं प्रसरति। काम इदानीं सकामो भवतु। येनासत्यसन्धे जने शून्यहृदया प्रियसखी पदं कारिता। अथवा दुर्वाससः कोप एष विकारयति। अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावत्कालस्य लेखमात्रमपि न विसृजति। तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः। दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम्। ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकण्वस्य दुष्यन्तपरि-णीतामापन्नसत्वां शकुन्तलां निवेदयितुम्। तद् इत्थंगतेऽस्माभिः किं करणीयम्।

† सखि! त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम्।

‡ सखि! कथमेतत्।

असोअणिज्जा संवुत्ता। अज्ज एव्व इसिरक्खिदं तुमं भत्तणो सआसं विसज्जेमि त्ति।❀

अनसूया—अह केण सूइदो तादकएणस्स अश्रं वुत्तन्तो ?†

प्रियंवदा—अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोमईए वाणिआए‡।

अनुसूया—( सविस्मयम् ) कधं विअ।×.

प्रियंवदा—सुणाहि + ( संस्कृतमाश्रित्य )—

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ६ ॥

अनसूया—( प्रियंवदामाश्लिष्य। ) सहि ! पिश्रं मे पिश्रं, किंदु अज्ज एव्व सउन्दला णीअदित्ति उक्कएठासाधारणं परितोसं अणुहोमि।ऽऽ

प्रियंवदा—सहि! वश्रं दाव उक्कएठं विणोदइस्सामो सा तवस्सिणी दाणिं णिव्वुदा होदु।—

---

❀ श्रणु, इदानीं सुखशयनपृच्छिका शकुन्तलासकाशं गतास्मि। ततो यावदेनां लज्जावनतमुखीं परिष्वज्य तातकण्वेनैवमभिनन्दितं, दिष्टया धूमाकुलित-दृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता, वत्से ! सुशिष्यपरिदत्ता विद्येवा-शोचनीया संवृत्ता। अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति।

† अथ केन सूचितस्तातकण्वस्य वृत्तान्तः।

‡ अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाण्या।

× कथमिव।

+ श्रणु।

ऽऽ सखि ! प्रियं मे प्रियं, किंत्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि।

— सखि! आवां तावदुत्कण्ठां विनोदयिष्यावः। सा तपस्विनी दानीं निर्वृता भवतु।

---

( ६ ) किं तदित्याह, दुष्यन्तेनेति—हे ब्रह्मन् ! निगमागमाद्यखिलशास्त्रार्थ-तात्पर्यवेदिन् ! कण्व ! "ब्रह्मा विप्रः प्रजापतिः" इत्यमरः, दुष्यन्तेन राज्ञा आहितं निषिक्तं कृताधानमित्यर्थः, तेजः भुवः भूमेः भूतयेऽभ्युदयाय दधानां धारयन्तीम् अतएव अग्निः गर्भे यस्यास्तथाभूतां शमीं तदाख्यपादपमिव तनयां कन्याम् अवेहि जानीहि।

अनेन मार्गो नाम गर्भसन्ध्यङ्गं प्रकाशितं भवति, यथाह विश्वनाथः— "तत्त्वार्थ कथनं मार्गः" इति। अत्रोपमालङ्कारः, पथ्यावक्त्रं वृत्तम्।

अनसूया—तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएरसमुग्गए एदणिमित्तं एव्व कालन्तरक्खमा णिक्खित्ता मए केसरमालिआ। ता इमं णलिणीवत्तसङ्गदं करेहि। जाव अहंपि से मअलोअणं तित्थमित्तिअं दुव्वाकिसलआणित्ति मङ्गलसमालम्भणाणि विरएमि।†

प्रियंवदा—तह करीअदु।‡

( अनसूया निष्क्रान्ता। प्रियंवदा नाट्येन सुमनसो गृह्णाति। )

( नेपथ्ये। )

गौतमि! आदिश्यन्तां शार्ङ्गरवशारद्वतमिश्राः, वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्त इति।

प्रियंवदा—( कर्णं दत्त्वा। ) अनसूए! तुवर तुवर, एदे क्खु हत्थिणाउर-गामिणो इसीओ सद्दावीअन्ति।※

( प्रविश्य समालम्भनहस्ता। )

अनसूया—सहि! एहि, गच्छह्म।† (इति परिक्रामतः।)

प्रियंवदा—( विलोक्य। ) एसा सुज्जोदए एव्व किदमज्जना पडिच्छिदणीवारभाअणाहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ, ता उवसप्पह्म णं।‡

( इत्युपसर्पतः। )

( ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला। )

शकुन्तला—भअवदीओ वन्दामि।×

---

† तेन ह्येतस्मिंश्चूतशाखावलम्बिते नालिकेरसमुद्गक एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका। तदिमां नलिनीपत्रसङ्गतां कुरु। यावदहमपि तस्यै मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि।

‡ तथा क्रियताम्।

※ अनसूये! त्वरस्व, त्वरस्व, एते खलु हस्तिनापुरगामिन ऋषयः शब्दायन्ते।

† सखि! एहि। गच्छावः।

‡ एषा सूर्योदय एव कृतमज्जना प्रतीष्टनीवारभाजनाभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति। उपसर्पाव एताम्।

× भगवतीर्वन्दे।

गौतमी—( शकुन्तलां प्रति । ) जादे ! भत्तुणो वहुमाणसूअत्रं महादेईसद्दं लहेहि । +

तापस्य:—वच्छे ! वीरप्पसविणी होहि । ÷

तृतीया—वच्छे ! भत्तुणो वहुमदा होहि ।※

( इत्याशिषो दत्त्वा गौतमीवर्जं सर्वा निष्क्रान्ताः । )

सख्यौ—( उपसृत्य । ) सहि ! सुहमज्जणं दे होदु ।†

शकुन्तला—साअदं मे सहीणं । इदो णिसीदह ।‡

उभे—( मङ्गलपात्राण्यादाय, उपविश्य । ) हला ! सज्जा होहि । जाव मङ्गलसमालम्भणं विरएम । ×

शकुन्तला—इदं पि वहु मन्तव्वं । दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि त्ति । ( इति बाष्पं विसृजति । ) +

उभे—सहि ! ण जुत्तं दे मङ्गलकाले रोइदुं । ( इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । ) ÷

प्रियंवदा—आहरणोइदं दे रूवं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि ।—

( प्रविश्योपायनहस्तौ । )

ऋषिकुमारकौ—इदमलंकरणम् । अलंक्रियतामत्रभवती ।

( सर्वा विलोक्य विस्मिताः । )

गौतमी—वच्छ णारअ ! कुदो एदं ।※

---

+ जाते ! भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व ।

÷ वत्से ! वीरप्रसविनी भव ।

※ वत्से ! भर्तुर्बहुमता भव ।

† सखि ! सुखमज्जनं ते भवतु ।

‡ स्वागतं मे सख्योः । इतो निषीदतम् ।

× हला ! सज्जा भव । यावन्मङ्गलसमालम्भनं विरचयावः ।

+ इदमपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति ।

÷ सखि ! न युक्तं ते मङ्गलकाले रोदितुम् ।

— आभरणोचितं ते रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।

※ वत्स नारद ! कुत एतत् ।

प्रथमः—तातकण्वप्रभावात् ।

गौतमी—किं माणसी सिद्धी ?*

द्वितीयः—न खलु, श्रूयताम्—तत्रभवता वयमाज्ञप्ताः शकुन्तला-हेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति, तत इदानीं—

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ७ ॥

प्रियंवदा—( शकुन्तलां विलोक्य ) हला ! कोडरसंभवा वि महुअरी पोक्खरमहुज्जेव अहिलसदि ।†

---

* किं मानसी सिद्धिः ।

† हला ! कोटरसम्भवापि मधुकरी पुष्करमधु एव अभिलषति ।

---

( ७ ) क्षौममिति—केनचित्तरुणा इन्दुवत् पाण्डु चन्द्रधवलं मङ्गले मङ्गल-कर्म्मणि साधु माङ्गल्यं मङ्गलार्थं, गोरोचनादिमङ्गलवर्णचित्रितदशमित्यर्थः, क्षौमं दुकूलयुगलम् "अवसितमण्डनासि, साम्प्रतं परिधेहि क्षौमयुगलम्" इति सखी-द्वयवाक्ये वक्ष्यमाणोक्तेः, आविष्कृतं प्रकटितं, दत्तमित्यर्थः, केनचिच्च तरुणा चरणयोः उपरागः रञ्जनादिस्तस्मै सुलभः सुखेन लभ्यः लाक्षारसः यावकरसः निष्ठ्यूतः उद्गीर्णः, निःसार्य दत्तः, अन्येभ्यः वृक्षेभ्यः तेषां वृक्षाणां किसलयोद्भेदाः उद्भिद्यमानाः पल्लवा इत्यर्थः, अत्र रक्तत्वकोमलत्वादिप्रयोजनवत्या लक्षणयाय-मर्थोऽवगन्तव्यः, तेषां प्रतिद्वन्द्विभिः तत्प्रतिस्पर्धिभिः, तत्सदृशैरित्यर्थः, आपर्व-भागोत्थितैः पर्वभागं मर्यादीकृत्य उत्थितैः, पर्वभागपर्यन्तं निःसृतैरिति भावः, वनदेवतानां करतलैः आभरणानि दत्तानि, ( अनेन नेपथ्य-शृङ्गारः सूचितः, निराभरणमप्येतद्वपुः पश्यतां मनोमुहुर्मुहुर्मोहमनुभवति साभरणञ्चेत्पुनः किमु वक्तव्यमिति भावः ) अत्र वनदेवताकरतलदत्ताभरणतया अस्या अवैधव्यं, सौभाग्यातिरेकः, आभरणानामनर्घत्वञ्च सूचितं भवति । करतल इत्यत्र केवल-करस्यैव दाननिर्वाहकत्वे तलपदस्य वैयर्थ्यं नाशंकनीयम्, किसलयच्छायायाः स्पर्धा तेनैव कर्तुं शक्यत्वात् । अत्रोपमयोः संसृष्टिः, शार्दूलविक्रीडितं वृत्तम् ।

गौतमी—हला इमाए अब्भुववत्तीए सूइदा दे भत्तुणो गेहे अणुहोदव्वा राअलच्छित्ति ।※ ( शकुन्तला व्रीडां रूपयति । )

प्रथमः—गौतम ! एह्येहि, यावद् इमां वनस्पतिसेवाम् अभिषेकार्थं मालिनीमवतीर्याय अत्रभवते कण्वाय निवेदयावः ।

द्वितीयः—तथा । ( इति निष्क्रान्तौ । )

अनसूया—अए ! अणणुभूतभूसणो अअं जणो कधं तुमं अलङ्करेदि ? ( चिन्तयित्वाविलोक्य च ) चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेह्म ।†

शकुन्तला—जाणे वो णेउणं । ‡

( उभे नाट्येनालंकुरुतः । )

( ततः प्रविशति स्नानोत्तीर्णः कण्वः । )

( विचिन्त्य )

कण्वः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥ ८ ॥

( इति परिक्रामति । )

---

※ हला ! अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति ।

† अये ! अननुभूतभूषणोऽयं जनः कथं त्वामलङ्करोति चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं कुर्वः ।

‡ जाने वां नैपुणम् ।

---

( ८ ) यास्यतीति—अद्य शकुन्तला "पतिगृहं" यास्यति, न तु याता नापि याति, अपितु यास्यतीति भविष्यद्व्यपदेशेन भविष्यद्गमनं सम्भाव्य गमनात् प्रागेव उत्कण्ठया असह्यवेदनया, तीव्रचिन्तयेत्यर्थः । उक्तञ्च:—

"रागे त्वलब्धविषये वेदना महती तु या ।
संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः ॥" इति ।

हृदयं सर्वेन्द्रियाणां प्रधानभूतं मनः संस्पृष्टम् अनुसक्तम्, अपत्यस्नेहविषय-

सख्यौ—हला सउन्दले! अवसिदमण्डणासि। परिधेहि संपदं क्खोमजुअलं।*

(शकुन्तलोत्थाय नाट्येन परिधत्ते।)

गौतमी—जादे! एसो दे आणन्दवाप्पपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो। ता समुदाआरं दाव पडिवज्जस्स।†

शकुन्तला—(सव्रीडम्।) ताद! वन्दामि।‡

कण्वः—वत्से!

यथातेरिव शर्मिष्ठा भर्तुर्बहुमता भव।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि॥९॥

---

* हला शकुन्तले! अवसितमण्डनासि। परिधत्स्व सांप्रतं क्षौमयुगलम्।

† जाते! एष त आनन्दवाष्पपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः। तत्समुदाचारं तावत्प्रतिपद्यस्व।

‡ तात! वन्दे।

---

कावेगयुक्तं जातमित्यर्थः, कण्ठः—स्तम्भिता स्वाभाविकधैर्यात् निरुद्धा बाष्पस्य अश्रुणः या वृत्तिः प्रवृत्तिस्तया कलुषः श्लथोच्चारणः स्वरभङ्गवानित्यर्थः, अथवा "स्तनाभोगे स्तनभरः स्वरे कण्ठः प्रकीर्त्यते" इत्यभिधानात् कण्ठः स्वरः स्तम्भितवाष्पवृत्तितया कलुषः घर्घरो जात इत्यर्थः। बाष्पावरोधे सुस्पष्टमुच्चारणं न भवति, कण्ठः घर्घरो जायत इति प्रायो लोके दृश्यते। दर्शनं तत्तदिन्द्रियजन्यं ज्ञानं "दृष्टिः ज्ञानेऽक्षिदर्शने" इति मेदिनी, चिन्तया जडं स्वस्वविषयाग्राहक चिन्तया मनसो ग्रस्तत्वात्तेन विना च तेषामग्राहकत्वात्, अन्यच्च एतावन्ति दिनानि तत्कृतवृक्षसेचननीवारवल्यादिशुश्रुषाभिर्यापयित्वा साम्प्रतमस्याः पतिगृहगमने सति पुनर्दर्शनाभावचिन्तया च जडं व्यापाररहितं जातमित्यर्थः।

अरण्यम् एव ओकः स्थानं यस्य तस्य वनवासिनोऽपि मम स्नेहात् अपत्यवात्सल्याद् ईदृशम् अनिर्वचनीयमिदमनुभूयमानं वैक्लव्यं विश्लेषदुःखवशात् स्नेहपारवश्यं भवतीति शेषः। गृहिणः संसारिणः पुनः सततं तद्दुःखाभिज्ञा इति भावः, नवैः प्रथमोपस्थितैः तनयाया दुहितुः विश्लेषदुःखैः विच्छेदजनितैः क्लेशैः कथं न पीड्यन्ते न बाध्यन्ते अपि तु पीड्यन्त एवेत्यर्थः।

वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

(९) ययातेरिति—ययातेः सोमवंशोद्भवस्य राज्ञः शर्मिष्ठा इव त्वमपि भर्तुः दुष्यन्तस्य बहुमता बह्वादरिणी भव सा शर्मिष्ठा पूरुमिव त्वमपि सम्राजं

गौतमी—भअवं ! वरो क्खु एसो ण आसिसो ।

कण्व:—वत्से ! इतः सद्योहुतानग्नीन्प्रदक्षिणीकुरुष्व ।

( सर्वे परिक्रामन्ति । )

कण्वः—( ऋक्छन्दसाशास्ते । )

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु ॥१०॥

( शकुन्तला प्रदक्षिणं करोति )

---

× भगवन् ! वरः खल्वेष नाशिवः ।

---

चक्रवर्तिनं, पुत्रं सुतम् आप्नुहि प्राप्नुहि । तथा चोक्तम्—

"येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राट्—" इति ।

यथा ययातिर्नाम राजर्षिः शुक्रकन्यां देवयानीम् एवं वृषपर्वदुहितरं तत्सखीं शर्मिष्ठाञ्चोपयेमे अथ तयोस्तस्य शर्मिष्ठैव प्रियतमा बभूव, तस्या एव पुत्रः साम्राज्यमवाप, तथैव त्वमपि बहुभार्य्यस्यापि दुष्यन्तस्य बहुमता भूत्वा सम्राजं पुत्रं लभस्वेति भावः ।

अत्रोपमालङ्कारः । आशीर्नाम नाट्यालङ्कृतिश्च । तथा च—विश्वनाथः—

"आशीरिष्टजनाशंसा" । इति । पथ्यावक्त्रं वृत्तम् ।

( १० ) अमीति—वेदिं यज्ञियभूमिं परितः अभितः तदुपरीत्यर्थः, क्लृप्तं निश्चितं धिष्ण्यं स्थानं यैस्तथाभूताः, वेद्यां कृताधिष्ठानाः समिधः सन्त्येषां ते समिद्वन्तः ससमिधः दह्यमानकाष्ठा इत्यर्थः, प्रान्तेषु चतुर्दिक्षु संस्तीर्णा आस्तीर्णा दर्भा येषां तथोक्ताः हव्यानां देवतोद्देशपूर्वकमग्नौ प्रास्तानां घृतादिहवनीयद्रव्याणां गन्धैः सौरभैः दुरितम् आश्रमसम्मुखमागच्छतां पापम् अपघ्नन्तो विनाशयन्तो वैताना यज्ञसम्बन्धिनः अमी पुरोवर्तमाना वह्नयस्त्वां पावयन्तु पुनन्तु ।

अत्र साभिप्रायविशेषणानाम् आधिक्येन परिकरालंकारः, वातोर्मीशालिनी-छन्दसोरुपजातिवृत्तम्, तल्लक्षणं यथा—

कण्वः—प्रतिष्ठस्वेदानीम्। (सदृष्टिक्षेपम्) क्व नु ते शार्ङ्गरवमिश्राः।

शिष्यौ—(प्रविश्य।) भगवन्! इमौ स्वः।

कण्वः—भगिन्या मार्गमादेशयतम्।

शिष्यौ—इत इतो भवती।

(सर्वे परिक्रामन्ति।)

कण्वः—भो भोः संनिहितास्तपोवनतरवः!

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥११॥

"वातोर्म्मीयं गदिताम्भौ तगौ गः।"
"मात् तौ गौचेच्छालिनी वेदलोकैः।" इति।

(११) सर्वान्तर्यामी भगवान् कण्वः शकुन्तलाविरहदुर्मनायमानान् वृक्षाननुद्वीक्ष्य तानेव प्रथमम् आश्वासयितुमभियाचते, पातुमिति—या चराचरस्नेहमयी शकुन्तला युष्मासु न विद्यते पीतं पानं येषां तेषु असिक्तेष्वित्यर्थः, जलं प्रथमं पातुं न व्यवस्यति नेच्छति किन्तु पीतेष्वेव पातुं व्यवस्यतीत्यर्थः, अनेन स्वशरीरसौख्यमनपेक्ष्य सर्वर्तुषु सूर्योदयात्प्रागेव नियमेन वृक्षेभ्यो जलं प्रयच्छति स्मेति व्यज्यते। या शकुन्तला प्रियं मण्डनं यस्यास्तथाभूताऽपि भवतां युष्माकं पल्लवं नवदलम् अवतंसादिसम्पादनार्थं स्नेहेन चिरसहवासजनिताकृत्रिमप्रेम्णा नादत्ते न गृह्णाति, प्रियालङ्करणापीयं भवतां स्वरूपहानिभिया पल्लवादिभिरात्मानमलङ्कर्तुं न च्छिनत्ति, वः युष्माकम् आद्ये प्राथमिके कुसुमानां प्रसूतिसमये पुष्पोत्पत्तिकाले यस्याः शकुन्तलाया उत्सवः उत्सूते हर्षमित्युत्सवः भवति, प्रत्यहसलिलदानसंरक्षणादिक्लेशमविचार्य स्वपरिवर्धितानां तरूणां पुष्पोद्गमदर्शनात् स्वपरिश्रमसाफल्यं मन्यमानेयमात्मानं कृतकृत्यं मन्यत इति भावः, सा भवत्सु निरुक्तप्रकारप्रणयपरायणा सर्वेषां भवतां पुरोवर्तमानेयं शकुन्तला पतिगृहं दुष्यन्तभवनं याति गच्छति सर्वैर्भवद्भिः अनुज्ञायताम् अस्याः पतिगृहगमनं सस्नेहमनुमन्यताम्। उक्तञ्च—

"पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥" इति

( कोकिलरवमाकर्ण्य । )

भगवन् !

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥१२॥

( आकाशे । )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।

पतिगृहमियं गच्छतीति भवत्सु सस्निग्धापि लज्जया स्वयं न वदतीति मयोच्यत इति भावः ।

अत्राचेतनेऽपि तरुषु चेतनव्यवहारसमारोपात्समासोक्तिः । शार्दूलविक्रीडितं वृत्तम् ।

(१२) वनवासबन्धवस्तरवोऽप्यस्याः पतिगृहगमनं समर्थयन्तीति कोकिलशब्दं श्रृण्वन् शिष्यो गुरवे ज्ञापयति, अनुमतगमनेति—यतः यस्माद्धेतोः एभिः तरुभिः कलम् अव्यक्तमधुरं परभृतानां कोकिलानां विरुतं कूजितं आत्मनः स्वस्य प्रतिवचनीकृतम् उत्तरवचनत्वेन निर्धारितं ततः तस्माद्धेतोः इयं शकुन्तला वनवासे बन्धुभिः सुहृत्सदृशैः चिरमेकत्रवासात् जातस्नेहैः तरुभिः अनुमतं गमनं यस्यास्तथाभूता पतिगृहगमनाय अनुज्ञातगमना वर्तत इति शेषः ।

अत्र वसन्तकाल एव पिकस्वराणां विकस्वरतासम्भवात् कलविरुतस्य च पञ्चमस्वरोपलक्षकत्वाद् वसन्तसमयः सूच्यते। कोकिलकूजितस्य प्रतिवचनेन परिणामात् परिणामालङ्कारः, अपरवक्त्रं छन्दः, तल्लक्षणं यथा—"अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं न जौ जरौ" ।

( १३ ) वनदेवताकर्तृकशकुन्तलागमनानुमोदनमाह, रम्यान्तर इति—कमलिनीभिः पद्मिनीभिः हरितैः हरिद्वर्णैः सरोभिः "अत्र बहुवचनेन प्रतिपदं सरःसद्भावः सूचितो भवति" रम्यं मनोरमम् अन्तरम् अवकाशो यस्य सः, छायाप्रधानाः द्रुमाः छायाद्रुमास्तैः सूर्यकिरणनिरोधसमर्थैः छायावद्भिस्तरुभिरित्यर्थः, नियमितः निषिद्धः अर्कमयूखानां सूर्यकिरणानां तापो यस्मिंस्तथाभूतः, कुशे जले शेरत इति कुशेशयानि कमलानि तेषां रजोवन्मृदू रेणुर्यत्र तथाभूतः अस्याः पतिगृहगन्तुकामायाः शकुन्तलायाः पन्था प्रयाणमार्गः, शान्तः नातिमन्दो नातितीव्रः,

भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥१३॥

( सर्वे सविस्मयमाकर्णयन्ति । )

गौतमी—जादे ! णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं । ता पणम भअवदीणं ।※

शकुन्तला—( सप्रणामं परिक्रम्य । जनान्तिकम् । ) हला पिअंवदे ! णं अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खेण मे चलणा पुरदो पवट्टन्ति ।‡

प्रियंवदा—ण केवलं तवोवणविरहकादरा सही एव्व । तुए उवट्ठिदविओअस्स तवोवणस्स वि पेक्ख दाव अवत्थं । ×

उग्गलिअदब्भकवला मिआ परिच्चत्तणचणा मोरा ।
ओसरिअपण्डुपत्ता मुअन्ति अस्सू विअ लदाओ ॥१४॥

---

※ जाते ! ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । तत् प्रणम भगवतीः ।

‡ हला प्रियंवदे ! नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते ।

× न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि प्रेक्षस्व तावदवस्थाम् ।

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ १४ ॥

---

नातिशीतो नात्युष्णो वा अनुकूलयतीत्यनुकूलश्च पृष्ठानुवर्तितया शुभसूचकश्च पवनो यत्र तथाभूतश्च शिवश्च मङ्गलकारी च भूयात् ।

अत्र साभिप्रायविशेषणबाहुल्यात् परिकरः, वायुपक्षाश्रयणे प्रकृतयोरुभयोरेकधर्माभिसम्बन्धात् तुल्ययोगिता । वसन्ततिलकं वृत्तम् ।

(१४) तामेवावस्थां कथयति, उद्गलितेति—उद्गलिता उद्गीर्णाः चर्विता अपि मुखाद्बहिर्निःसृता इत्यर्थः, दर्भाणां कुशानां कवलाः ग्रासाः याभिस्तथाभूता मृग्यः, परित्यक्तं नर्तनं यैस्ते परित्यक्तनर्तना त्यक्तनर्तनव्यापाराः मयूराः चिरसहवासिन्याः शकुन्तलाया दीर्घविरहखेदात् स्वाभाविकमपि स्वं स्वं व्यापारं कर्तुं

शकुन्तला—( स्मृत्वा । ) ताद ! लदावहिणिअं वणजोसिणिं दाव आमन्तइस्सं । *

कण्वः—अवैमि ते तस्यां सोदर्यस्नेहम् । इयं सा तावद्दक्षिणेन वर्तते, पश्य ।

शकुन्तला—( लतामुपेत्य आलिङ्गय च । ) लदावहिणि ! पच्चालिङ्गस्स मं साहामएहिं बाहुहिं । अज्जप्पहुदि दूरपरिवत्तिणी क्खु दे भविस्सं, ताद ! अहं विअ इअं वि तुए चिन्तणीआ ।†

कण्वः—

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥१५॥

* तात ! लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ।

† लताभगिनि ! प्रत्यालिङ्गस्व मां शाखामयैर्बाहुभिः, अद्यप्रभृति दूरपरिवर्तिनी खलु भविष्यामि । तात ! अहमिवेयमपि त्वया चिन्तनीया ।

श्लथादरा इत्यर्थः"—इयं चेतनेषु तिरश्चाम् अवस्था, अचेतनेष्वपि तावद्दर्शयति, अपेति—अपसृतानि गलितानि पाण्डूनि परिणतवर्णानि पत्राणि यासां ताः पतितपचेलिमपत्राः लताः वल्ल्यः अश्रूणि बाष्पाणि इव मुञ्चन्ति ।

(१५) सङ्कल्पितमिति—मया वीतरागेणापि प्रथममेव मेनकापरित्यागानन्तरमिह त्वदानयनसमय एव तव अर्थे सत्पात्रे त्वत्समर्पणार्थं सङ्कल्पितं मनसि चिन्तितम् "वनवासिनापि मया सौन्दर्ययौवनकुलानुरूपवरसङ्घटनार्थं प्रागेव प्रतिज्ञातमासीत्" "किन्तु पुनः" त्वं स्वयं सुकृतैः मत्पूर्वपुण्यैः आत्मनः सदृशं कुलेन, शीलेन सौन्दर्येण, गुणेन, कमनीयेन वयसा च स्वसमं भर्तारं गतासि प्राप्तासि, इयञ्च पुरो वर्तमाना तव प्रियतमा नवमालिका सुकृतैः त्वया कृतैः समीपरोपणजलसेकादिशोभनव्यापारैः चूतेन स्वसमीपस्थेन योग्येन सहकारेण सह संश्रितवती सङ्गतवती, सम्प्रति युवयोर्विनैव मद्व्यापारं स्वत एव समुचितवरलाभात् त्वयि चेतनायाम् अस्याम् अचेतनायाञ्च अहं वीतो चिन्ता यस्य तथाभूतः निश्चिन्त इत्यर्थः, जातोऽस्मीति शेषः ।

तद् इतः पन्थानं प्रतिपद्यस्व।

शकुन्तला—( सख्यौ प्रति। ) हला ! एसा दुवेणं वो हत्थे णिक्खेवो।*

सख्यौ—अअं जणो कस्स हत्थे समप्पिदो।† ( इति बाष्पं विसृजतः )

कण्वः—अनसूये ! प्रियंवदे ! अलं रुदित्वा। ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला।

( सर्वे परिक्रामन्ति। )

शकुन्तला—ताद ! एसा उडजपज्जन्तचारिणी गब्भहारमन्थरा मअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिअणिवेदअं विसज्जइस्सह, मा एदं विसुमरिस्ससि।‡

कण्वः—वत्से ! नेदं विस्मरिष्यामः।

शकुन्तला—( गतिभङ्गं रूपयित्वा। ) अम्मो ! को णु क्खु एसो णिवसणे मे सज्जइ।× ( इति परावर्तते। )

कण्वः—वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते॥१६॥

* हला ! एषा द्वयोर्युवयोर्हस्ते निक्षेपः।

† अयं जनः कस्य हस्ते समर्पितः।

‡ तात ! एषोटजपर्यन्तचारिणी गर्भभारमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदकं विसर्जयिष्यथ।

× को नु खल्वेष निवसने मे सज्जते।

अत्रोभयोः शकुन्तलालतालक्षणयोः प्राकरणिकतया तुल्ययोगिता। प्रस्तुतेऽप्रस्तुतनायकनायिकव्यवहारसमारोपात्समासोक्तिश्च। वसन्ततिलकम्।

(१६) यस्येति, त्वया अतिदयायत्तचित्तया मातृरूपया यस्य मृगस्य कुशानां दर्भाणां सूचिभिः सूच्याकारैरग्रभागैर्विद्धे क्षते दर्भाङ्कुरक्षते मुखे व्रणानां विरोपणं शमकं व्रणसमाधायकमित्यर्थः, इङ्गुदीनां तापसतरुफलानां तैलं न्यषिच्यत नितरामसिच्यत, श्यामाकानां "साँवा" इति प्रसिद्धधान्यविशेषाणां मुष्टिभिः परिवर्धितकः दयया पोषितः, अनुकंपार्थेऽत्र कप्रत्ययो बोध्यः, बालत्वात् स्वयं स्वाहा-

शकुन्तला—वच्छ ! किं सहवासपरिच्चाइणिं मं अणुसरसि। णं अचिरप्पसूदो बरदाए जणणीए विणा जधा मए वड्ढिदोसि, तथा दाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि। णिवत्तेहि दाव।* (इति रुदती प्रस्थिता।)

कण्वः—वत्से ! अलंरुदितेन, स्थिरा भव, इतः पन्थानम् आलोकय—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विहतानुबन्धम्।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥१७॥

---

* वत्स ! किं सहवासपरित्यागिनीं मामनुसरसि। ननु अचिरप्रसूतया जनन्या विना यथा मया वर्धितोऽसि तथेदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति। निवर्तस्व तावत्।

---

रम् अत्तुमसमर्थस्य यस्य मुखे श्यामाकधान्यानि मुष्टौ गृहीत्वार्पितवतीत्यर्थः, सः जन्मारभ्य मृगत्वप्राप्तिपर्यन्तं पालितः अयं पुरतो वर्तमानः ते तव पुत्रकृतकः कृत्रिमः पुत्रः पदवीं तव मार्गं न जहाति न परित्यजति स्वयमपि त्वया सह गन्तुमभिलषतीत्यर्थः। मृगस्वभावोक्तिरियम्।

अत्र पूर्वार्धस्य पदवीपरित्यागाभावरुप्रति हेतुत्वात्काव्यलिङ्गमलङ्कारः। वसन्ततिलकं वृत्तम्।

(१७) उत्पक्ष्मणोरिति—उत् ऊर्ध्वं पक्ष्मणी ययोस्तथाभूतयोर्नयनयोः उपरुद्धा अन्तरिता वृत्तिः साक्षात्करणव्यापारो येन तथाभूतं निरुद्धदर्शनव्यापारमित्यर्थः, बाष्पम् अश्रु स्थिरतया स्थैर्येण धैर्यमवलम्ब्येत्यर्थः, विहतो विनाशितोऽनुबन्धः भूयो भूयः समुत्पत्तिर्यस्य तथाविधं कुरु, तथा चेदानीं पतिगृहगमनलक्षणैषा मङ्गलयात्रा वर्तते, तव नेत्रे च बाष्पपरिगते दृश्येते चेदधिकं रोदिष्यसि तदा नयननिमीलनोन्मीलनाभ्यां भूमौ पतितं तन्मङ्गलं न जनयिष्यतीति सर्वथा धैर्यमवलम्ब्य तन्निरुन्द्धीतिभावः। अत्र कारणमाह—खलु यतः, न लक्षितो दृष्टो नतोन्नत उच्चावचः भूमिभागः भुवः प्रदेशो यत्र तथाभूते मार्गे ते पदानि पदगतयः विषमीभवन्ति स्खलितानि जायन्ते बाष्पाकुलिततया सम्यगविदितसमविषमभूभागे त्वं पतिष्यसि, गमनकाले एतदप्यशुभं भविष्यतीति सर्वथा प्रकृतिस्था भवेति भावः। अत्र पदार्थवाक्यार्थरूपयोः काव्यलिङ्गयोः संसृष्टिः। वसन्ततिलकं वृत्तम्।

शार्ङ्गरवः—भगवन्! उदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम्। अत्र संदिश्य प्रतिगन्तुमर्हसि।

कण्वः—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः।

( सर्वे परिक्रम्य स्थिताः। )

कण्वः—( आत्मगतम्। ) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम्। (इति चिन्तयति।)

अनसूया—सहि! अस्समपदे ण अत्थि कोवि चित्तवन्तो जो तुए विरहिज्ज ण ताम्मदि, पेक्ख दाव। ❀

पुडइणि वत्तन्तरिअं वाहरिओ वि ण वाहरेइ पिअं।
मुह उव्वूढमिणालो तइ दिट्ठिं देइ चक्काहो॥१८॥

शकुन्तला—( जनान्तिकम्। ) हला! पेक्ख। णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि त्ति।†

अनसूया—सहि! मा एव्वं मन्तेहि।‡

---

❀ सखि! आश्रमपदे नास्ति कोऽपि चित्तवान् यस्त्वया विरह्यमाणो न ताम्यति, प्रेक्षस्व तावत्—

पुटकिनीपत्रान्तरितां व्याहृतोऽपि न हि व्याहरति प्रियाम्।
मुख उद्व्यूढमृणालस्त्वयि दृष्टिं ददाति चक्राह्वः॥

† हला! पश्य नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारटति दुष्करमहं करोमीति।

‡ सखि! मैवं मन्त्रय।

---

(१८) पुटकिनीति—चक्र इत्याख्या यस्य तथाभूतः प्रसिद्धश्चक्रवाकः व्याहृतोऽपि प्रिययाऽऽकारितोऽपि पुटकिन्याः कमलिन्याः पत्रैः अन्तरितां व्यवहिताम् अतिसन्निहितामपीत्यर्थः, प्रियां स्नेहसर्वस्वभूतां चक्रवाकीं न व्याहरति नालपति किन्तु, मुखे उदव्यूढं भक्षणार्थं धृतं मृणालं येन तथाभूतोऽपि भक्षणैकायत्तचित्तोऽपि सः ततो विरम्य त्वयि केवलां दृष्टिं ददाति भृशं क्षुत्पीडितोऽयं मृणालभक्षणेऽत्यन्तमासक्तः "सर्वं हन्ति बुभुक्षया" इत्यभियुक्तोक्तेर्नापि तस्या अन्तिके गच्छति नापि तत्र स्थित एव प्रतिवचनं ददाति परन्तु भाविनं तव विरहमसहमानो मुखे चर्वणार्थं गृहीतमपि मृणालं तथैव स्थापयित्वा सर्वान् स्वस्नेहिनोऽस्मानेकपदे विहाय तव गमनमनुचितमिति साकूतं त्वां विलोकयतीति भावः।

एसा वि पिएण बिणा घमेइ रअणिं विसाअदीहअरं ।
गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ॥ १९ ॥*

कण्वः—शार्ङ्गरव ! इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

शार्ङ्गरवः—आज्ञापयतु भवान् ।

कण्वः—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।

---

* एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥

---

(१९) वक्तृनैपुण्येन शकुन्तलामाश्वासयन्त्यार्याह एषेति—एषा क्षणमपि प्रियविरहासहनशीला चक्रवाकी प्रियेण कान्तेन विना प्रियसंसर्गमन्तरेणापीत्यर्थः विषादेन विश्लेषदुःखेन दीर्घतराम् अतिमहतीं रजनीं निशां गमयति अतिवाहयति, विरहिण एकमपि क्षणं युगवदनुभूयत इति भावः ।

न केवलमेका त्वमेव यामिनीं यापितवत्यसि, इयञ्चक्रवाक्यपि तथैव वर्तते, एतदेवार्थान्तरन्यासेन पुनः समर्थयन्नाह, गुर्विति—आशाया बन्धः प्रियसमागमप्रत्याशा गुर्वपि प्रमाणाधिकं, मरणान्तफलकमपीत्यर्थः, विरहम् इष्टजनविप्रयोगजनितदुःखं, साहयति मर्षयति ।

प्रियेण विप्रयुक्ता यथेयं प्रियविरहितां निशां कथमप्यतिवाह्य पुनः प्रातस्तेन सह सङ्गत्य विरहजनितं दुःखं गाढालिङ्गनसुखेनापनयति तथैव त्वमपि करिष्यसीति प्रियसमागमाशया हृदि धैर्यमवलम्बस्वेति भावः ।

(२०) राज्ञ उचितं सन्देशं सन्दिशन्नाह, अस्मानिति—अस्मान् नः, संयम एव धनं येषां तान् तपोधनान्, आत्मनः स्वस्य उच्चैः महत् कुलम् अन्वयं, अस्याः तव पुरःस्थितायाः शकुन्तलायाः त्वयि भवति कथमपि गुरुजनानपेक्ष्यैव न बान्धवैः पित्रादिभिः कृतां तथाभूतां स्नेहस्य भावविशेषात्मकस्य द्रवीभूतचित्तस्य प्रवृत्तिं प्रवाहं, यदुक्तं—

"विश्रम्भे परमां काष्ठामारूढे दर्शनादिभिः ।
यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते" इति ॥

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः ॥२०॥

शार्ङ्गरवः—गृहीतः संदेशः।

कण्वः—वत्से! त्वमिदानीमनुशासनीयासि। वनौकसोऽपि सन्तो लौकिकज्ञा वयम्।

शार्ङ्गरवः—भगवन्! न खलु धीमतां कश्चिदविषयो नाम।

कण्वः—सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।

---

च साधु सम्यक् विचिन्त्य चिन्तयित्वा त्वया भवता इयं शकुन्तला दारेषु कलत्रेषु सामान्या या प्रतिपत्तिः गौरवं तत्पूर्वकं कलत्रान्तरसमानत्वज्ञानपुरःसरमित्यर्थः, दृश्या बोध्या, नन्वेतादृशातिगाढप्रेम्णि कथं सामान्यकलत्रवदभिमन्तुमुच्यत इत्यत आह भाग्याधीनमिति—अतः अस्मात् परम् अधिकं सम्मानमिति शेषः, भाग्यायत्तं दैवाधीनं, वध्वा बन्धुभिः जनकादिभिः तत् न वाच्यं न कथनीयम्।

ऊढायाः पतिगृहगमनसमये तत्पित्राऽलङ्करणभाण्डवस्त्रशयनादि बहुविधं यौतुकं दीयते परं वयं केवलं तपोधनाः, तपोऽतिरिक्तं न किमप्यस्माकं सविधे वर्तते, भवन्तश्च महाकुलप्रसूताः, अस्याः भवतश्च परस्परं प्रतिक्षणोपचीयमानायामस्यां स्नेहप्रवृत्तौ नास्माकं मनागप्यनुयोगोऽनुरोधश्चिन्तितः किन्त्वनुरागवशाद्बन्धुजनानस्मानचिन्त्यैव त्वयास्यामनया च त्वयि मनः प्रवर्तितं गान्धर्वेण च स्वेष्टमपि सम्पादितम् अतो नास्माकं तटस्थानामत्र वागवसरस्तथापि सततात्मस्वरूपचिन्तनपरायणैररण्यवासिभिरस्माभिर्नानादेशभ्रमणासामर्थ्येनानुरूपवरमन्वेष्टुमशक्यतया दैवात्सम्पन्नोऽयमनुगुणः सम्बन्धो बहुमतः—इत्याद्यस्मदनुरोधेन भृशं समवधाय वर्तमानेषु कलत्रेषु साधारणतयेयमप्यनुमन्तव्या अतोऽधिकं महिषीत्वादिकं सम्मानमस्या भाग्याधीनं न खलु तदस्माभिर्वधूबन्धुभिः प्रार्थयितुं शक्यम्।

अत्र मयेत्यप्रतिपाद्य वधूबन्धुभिरिति सामान्येन प्रतिपादनादप्रस्तुतप्रशंसा, काव्यलिङ्गञ्च। शार्दूलविक्रीडितम्।

(२१) शुश्रूषस्वेति—गुरून् पूजार्हान् श्वश्रूश्वशुरादीन् शुश्रूषस्व परिचर, समानः पतिर्यस्याः सा सपत्नी, सैव जनस्तस्मिन् भर्तुरन्यस्यां भार्यायामित्यर्थः, प्रिय-

भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥२१॥

कथं वा गौतमी मन्यते ।

गौतमी—*एत्तिओ क्खु वहूजणस्स उवदेसो । जादे ! एदं क्खु सव्वं ओधारेहिं; मा विसुमरिस्ससि ।

कण्वः—वत्से ! परिष्वजस्व मां सखीजनं च ।

शकुन्तला—ताद ! इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति ?†

* एतावान्वधूजनस्योपदेशः । जाते ! एतत्खलु सर्वमवधारय, मा विस्मरिष्यसि
† तात ! इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ? ।

सख्याः—इव वृत्तिस्तां प्रियवयस्याव्यवहारं कुरु प्रियसखीवद् वर्तस्वेत्यर्थः, विगतं प्रकृतं प्रकृतिर्यस्याः सा कोपितापीत्यर्थः, रोषणतया कोपनतया भर्तुः प्रतीपं प्रतिकूलं मास्म गमः मा यासीः, भर्तुः प्रतिकूला कदापि मा भव किन्तु "पतिरेव बुधैः स्त्रीणां देवतेति निगद्यते ।" इति न्यायात्क्रोधसमयेऽपि भर्तुर्मनोरञ्जका-नुकूलव्यवहारेणैव वर्तितव्यमित्यर्थः, परिजने उपजीविजने भूयिष्ठं अत्यन्तं दक्षिणा सरला भव, भाग्येषु सपत्नीदैवेषु अनुत्सेकिनी अस्खलिता, इमामेव भर्ता बहुमन्यते न माम् अस्या यथा भाग्यं न तथा ममेत्यादिलक्षणेर्ष्यादिरहिता भवेति शेषः, अथवा—भाग्येषु अनुकूलेषु निजदैवेषु अनुत्सेकिनी गर्वरहिता भव, अहो मे सौभाग्यं, यन्मे कान्तः परःशतेष्वपि कलत्रेषु मामेव बहुमन्यते, नास्ति मत्तोऽधिका काप्यस्य मनसो विश्रामस्थानमित्यादिप्रकाररहिता भवेत्यर्थः । एवम् इत्थम् अनुष्ठिते सति युवतयः तरुण्यः, न केवलं स्वमेव किन्तु तरुणीमात्रमित्यर्थः, गृहिण्याः पदं गृहिणीतिपदव्यपदेशं यान्ति प्राप्नुवन्ति, वामाः उक्तप्रकारप्रतिकूलाः, स्त्रिय इति शेषः, कुलस्य पितृवंशस्य श्वशुरवंशस्य च आधयः मनःसन्तापकारिण्यः, "पुंस्याधि-र्मानसीव्यथा" इत्यमरः, अपकर्षहेतव इत्यर्थः, यथा आधिभिः देहस्यापकर्षो भवति तथैव प्रतिकूलाभिर्युवतिभिः कुलस्यापकर्षो भवतीति भावः ।

नवोढया पतिगृहं गत्वा तत्रत्या गुरवः, पतिः, कथमाराधनीयः, पोष्यवर्गेषु सपत्नीजनेषु च कया रीत्या वर्तितव्यं, समानेषु कथं व्यवहर्तव्यमित्यादि प्रधानतमं रमणीनां कर्तव्यं कण्वमुखेनोपदिशता कविना लौकिकव्यवहारे परं प्रावीण्यं प्रकटितम् । अत्र "उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ।" इति विश्वनाथ-वचनादुपदेशनामकं नाटकलक्षणं प्रकटितं भवति । शार्दूलविक्रीडितम् ।

कण्वः—वत्से ! इमे अपि प्रदेये। तन्न युक्तमनयोस्तत्र गन्तुम्। त्वया सह गौतमी यास्यति।

शकुन्तला—( पितरमाश्लिष्य। ) कहं दाणिं तादस्स अङ्कादो परिब्भट्टा मलअतरून्मूलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्सं।*

कण्वः—वत्से ! किमेवं कातरासि।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे,
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि॥२२॥

शकुन्तला—( पितुः पादयोः पतित्वा ) ताद ! वन्दामि †

कण्वः—वत्से ! यदिच्छामि, ते तदस्तु।

---

* कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये।

† तात ! वन्दे।

---

(२२) अभिजनवत इति—हे वत्से ! अभिजनः कुलं विद्यते यस्यासौ तस्य प्रशस्तकुलवतः|महाकुलीनस्येत्यर्थः, अत्रैतदनुक्तेऽपि कुलवत्त्वोपस्थितेस्तात्पर्यानुपपत्त्या लक्षणया सामान्यशब्देन विशिष्टं कुलं लक्ष्यते," बहुजनवतो वा भर्तुः श्लाघ्ये प्रशंसितुं योग्ये गृहिणीपदे गृहिणीस्थाने पट्टमहिषीस्थान इत्यर्थः। "गृहिणी गृहमुच्यते" इत्युक्तेस्तस्य सर्वं गृहं त्वदायत्तं भविष्यतीति भावः। स्थिता स्थिरीभूता, तथा तस्य भर्तुः विनयेन लोकोत्तरेण ऐश्वर्येण गुरुभिः अलघुभिः कृत्यैः नित्यैनैमित्तिकैः काम्यैश्च कर्म्मभिः प्रतिक्षणं क्षणे क्षणे आकुला व्याकुला, सती 'पतिगृहं प्राप्य तत्रत्यकार्यसहस्रचिन्तया स्वयं त्वमेव विगलितवेद्यान्तरा भविष्यसीति भावः, प्राची पूर्वा दिक् पावयतीति पावनं जगत् पवित्रीकुर्वाणम् अर्कं सूर्यम् इव, तनयं पुत्रं प्रसूय जनयित्वा "तनयस्यार्कोपमानत्वेनास्य लोकातिशायितेजस्वित्वं, जगद्विलक्षणपौरुषत्वं विश्वविश्रुतकीर्तित्वादि च ध्वन्यते।" मम विरहजां वियोगजनितां शुचं शोकं न गणयिष्यसि न विचारयिष्यसि।

अत्रोपमा तथा चतुर्थवाक्यं प्रति पूर्ववाक्यानां हेतुत्वेन काव्यलिङ्गञ्च। हरिणीवृत्तम्।

शकुन्तला—( सख्यावुपेत्य ) हला एध, दुवे वि मं समं एव्व परिस्सजह ।*

सख्यौ—( तथा कृत्वा ) सहि ! जइ णाम सो राआ पच्चहिण्णाणमन्थरो भवे तदो से इमं अत्तणो णामहेअअङ्किअं अङ्गुलीअअं दंसइस्ससि ।†

शकुन्तला—इमिणा संदेहेण वो आकम्पिदह्मि ।‡

सख्यौ—सहि ! मा भाआहि । सिणेहो पावमासङ्कदि । ×

शार्ङ्गरवः—भगवन् ! दूरमारूढः सविता । त्वरतामत्रभवती ।

शकुन्तला—( भूयः पितुरङ्कमाश्लिष्य आश्रमाभिमुखीभूय च ) ताद ! कदा णु भूओ तवोवणं पेक्खिस्सं । +

कण्वः—वत्से ! श्रूयताम् ।

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं प्रसूय ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥२३॥

---

* हला ! एतं, द्वे अपि मां सममेव परिष्वजेथाम् ।

† सखि ! यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनो नामधेयाङ्कितमङ्गुलीयकं दर्शयिष्यसि ।

‡ अनेन संदेहेन वामाकम्पितास्मि ।

× मा भैषीः । स्नेहः पापमाशङ्कते ।

+ तात ! कदा नु भूयस्तपोवनं प्रेक्षिष्ये ।

---

(२३) भूत्वेति—चिराय चिरकालं यावत्, चत्वारः "समुद्राः" अन्तो यस्यास्तथाभूता च असौ मही च चतुरन्तमही तस्याः सपत्नी, आसमुद्रक्षितीशस्य पत्नी भूत्वा समुद्रपर्यन्तं भुवो भागम् उपभुज्येत्यर्थः । अत्र विशेषणेनैव विशेष्यप्रतिपत्तिरिति नियमादनुक्तमपि समुद्रपदम् इहोपस्थितं भवति, न विद्यते प्रति "संमुखं" रथो यस्य सः तं, शत्रोरभावादित्यर्थः, अथवा रथशब्देन रथिकं लक्षयित्वा अप्रतिरथम् अप्रतिरथिकं, यस्य सदृशः कश्चिदपि रथी न भवेत् तथाभूतं दुष्यन्तस्यापत्यं दौष्यन्तिस्तं तनयं पुत्रं प्रसूय जनयित्वा

गौतमी—जादे ! परिहीअदि दे गमणवेला। णिवत्तेहि पिदरं। अहवा चिरेण वि पुणो पुणो एसा एव्वं मन्तइस्सदि। णिवत्तदु भवं।*

कण्वः—वत्से ! उपरुध्यते मे तपोऽनुष्ठानम्।

शकुन्तला—( भूयः पितरमाश्लिष्य ) तवच्चरणपीडिदं तादसरीरं ता सा अदिमेत्तं मम किदे उक्कण्ठिदुम्।†

कण्वः—( सनिःश्वासम् ) वत्से ! मामेवं जडीकरोषि !

शममेष्यति मम शोकः कथं नु वत्से ! त्वया रचितपूर्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥२४॥

---

* जाते ! परिहीयते ते गमनवेला। निवर्तय पितरम्। अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते। निवर्ततां भवान्।

† तपश्चरणपीडितं तातशरीरम्। तन्मातिमात्रं मम कृत उत्कण्ठितुम्।

---

महीसपत्न्यामिति शेषः, अत्र सपत्नीग्रहणेन तस्या अप्यस्य मातृत्वं सूचितं तेन यद्यपि सा मही तव सपत्नी तथापि तव सत्यामेव त्वय्येव च तस्याः सपत्नभावः, न पुनस्तव सुत इति भावः, तस्मिन् अर्पितः निहितः कुटुम्बस्य भरः राज्यसञ्चालनकुटुम्बपालनादि भारो येन तथाभूतेन मया सार्द्धं शान्ते रागद्वेषादिदोषरहिते, "पञ्चाशोर्द्ध्वं वनं व्रजेत्।" इति नियमात् चरमे वयसि वा अस्मिन् आश्रमे पुनः पदं स्थानं करिष्यसि, अन्तिमे वयसि भर्त्रा सह पुनरस्मिन्नाश्रमेऽवशिष्टमायुर्यापयितुमागमिष्यसीति भावः।

अत्र तस्यां महीसपत्नीत्वं, तस्यां तन्निवेशनं, तस्मिंश्च कुटुम्बभरनिवेशनमिति मालादीपकम्। वसन्ततिलकं छन्दः।

(२४) शममिति—हे वत्से ! त्वया पूर्वं रचितो रचितपूर्वस्तम् उटजस्य पर्णकुट्याः द्वारे विरूढम् अङ्कुरितं नीवारैः तृणधान्यैः बलिं पूजां विलोकयतः अवलोकयतः "पूजासमये पक्षिणामाहारार्थं प्राग् भूमौ विन्यस्तं नीवारादि साम्प्रतम् अङ्कुरितं भवतीति पश्यत इत्यर्थः, मे जन्मन आरभ्य कृतत्वत्परिपालनस्य मम शोकः, तव पतिगृहगमनेन जायमान इति शेषः, कथं केन प्रकारेण शमम् एष्यति प्राप्स्यति ? कथमपि न प्राप्स्यति अपितु प्रत्यहं त्वत्स्मारकाणामेतेषामवलोकनेन मे शोको वर्द्धिष्यत एवेत्यर्थः।

अत्र रचितपूर्वमतएव विरूढमिति काव्यलिङ्गम्। आर्या जातिः।

गच्छ, शिवास्ते पन्थानः सन्तु ।

( निष्क्रान्ता शकुन्तला सहयायिनश्च )

सख्यौ—( शकुन्तलां विलोक्य ) हद्धी हद्धी । अन्तलिहिदा सउन्दला वणराइहिं । *

कण्वः—( सनिःश्वासम् ) अनसूये ! प्रियंवदे ! गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

उभे—ताद ! सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पविसावो । †

कण्वः—स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य ) हन्त भोः, शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः—

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥२५॥

( इति निष्क्रान्ताः सर्वे )

चतुर्थोऽङ्कः ।

---

* हा धिक्, हा धिक् । अन्तर्हिता शकुन्तला वनराजिभिः ।

† तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

---

(२५) स्वास्थ्यलाभे हेतुं प्रदर्शयन्नाह, अर्थ इति—हि निश्चितं, कन्या, परकीयः एव अर्थः, उत्पत्त्यनन्तरत एव परकीयत्वेन ज्ञातव्य इत्यर्थः, अद्य इदानीं "भर्ता रक्षति यौवने ।" इतिस्मरणात् तां तादृशीं परकीयधनभूतां कन्यां परिग्रहीतुः परिणेतुः पत्युः सकाश इत्यर्थः । सम्प्रेष्य प्रस्थाप्य स्थितवतः ममायम् अन्तरात्मा अन्तःकरणं प्रत्यर्पितः प्रतिसमर्पितः न्यासः निक्षेपः येन तथाविध इव प्रकामम् अत्यन्तं विशदः स्वस्थो जातः ।

यथा देशान्तरं जिगमिषुः कश्चित् स्वीयं सर्वस्वभूतम् आभरणादिकं विस्रब्धे धनिनि संस्थाप्य स्वाभीष्टं देशं गच्छति, सच धनी, यावत्स न समायाति तावत्तद्रक्षणव्यग्रमानसो भवति अथ पुनः समागते तस्मिंस्तन्निक्षिप्तं तस्मै दत्वात्मानं स्वस्थं मन्यते तथैवाधुनाहमपि भवामीति भावः । अत्र प्रत्यर्पितन्यास इवेत्युत्प्रेक्षा । इन्द्रवज्रावृत्तम् ।

इत्यभिज्ञानशाकुन्तलटीकायां सुबोधिन्याख्यव्याख्यायां चतुर्थोऽङ्कः ।

# पञ्चमोऽङ्कः ।

( ततः प्रविशत्यासनस्थो राजा विदूषकश्च )

विदूषकः—( कर्णं दत्त्वा ) भो वअस्स ! [1]संगीदसालब्भन्तरे अवधाणं देहि । कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे तत्तहोदी हंसवदिआ वण्णपरिअअं करेदि त्ति ।❀

राजा—तूष्णीं भव । यावदाकर्णयामि ।

( आकाशे गीयते )

अहिणवमहुलोलुवो भवं तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुदो महुअर विम्हरिओ सि णं कहं ॥१॥ †

❀ भो वयस्य ! संगीतशालाभ्यन्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

† अभिनवमधुलोलुपो भवांस्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽस्येनां कथम् ॥

(१) अभिनवेति—हे मधुकर ! अभिनवे नूतने मधुनि पुष्परसे लोलुपः लुब्धः भवान् चूतस्य सहकारस्य मञ्जरीं वल्लरीं तथा तेन प्रकारेण यथा ते मनस्तुष्टिर्भवेदिति शेषः, परिचुम्ब्य सर्वतश्चुम्बित्वा, साम्प्रतं कमले या वसतिः निवासः तन्मात्रेण न तु मधुनः आस्वादनेन निर्वृतः सन्तुष्टः सन् कथं विस्मृतः असि, चिरं चुम्बनादिना यथाभिलाषमुपभुक्ताया अतएव जातसम्बन्धाया अस्या विस्मरणं सर्वथा तवानुचितं वर्तत इत्यर्थः ।

(१) सङ्गीतेति—

"गीतं वाद्यं तथा नृत्तं त्रयं सङ्गीतमुच्यते । इत्युक्तत्वादेतत्त्रयं यस्यां शालायां वर्तते तस्या अभ्यन्तर इत्यर्थः । कलविशुद्धाया :—

"गीतयः पञ्चशुद्धाद्या भिन्ना गौडी च वेसरा ।
साधारणी विशुद्धा स्यादवक्रैर्ललितैः स्वरैः ॥"

इत्युक्तत्वादव्यक्तमधुरस्वरविशिष्टायाः—विशुद्धाभिधाया गीतेरित्यर्थः ।

वर्णपरिचयम्—वर्णस्य सङ्गीताक्षरस्य परिचयः अभ्यासस्तम् आरोह्यावरोह्यलक्षणं गानक्रियाभ्यासं करोतीत्यर्थः ।

अत्र प्रकरणादिसहकृतेन मधुकरवृत्तान्तेन दुष्यन्तमभिलक्ष्य कामुकोपालम्भन-

राजा—अहो रागपरिवाहिनी गीतिः[1]।

विदूषकः—किं दाव गीदीए अवगओ अक्खरत्थो।*

राजा—(स्मितं कृत्वा।) सकृत्कृतप्रणयोऽयं जनः। तस्या देवीवसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि। सखे माधव्य ! मद्वचनादुच्यतां हंसपदिका निपुणमुपालब्धोऽस्मीति।

विदूषकः—जं भवं आणवेदि। (उत्थाय।) भो वअस्स! गहीदस्स ताए परकीएहिं हत्थेहिं सिहण्डए ताडीअमाणस्स अच्छराए

* किं तावद्गीत्या अवगतोऽक्षरार्थः।

रूपोऽन्यार्थोऽपि ध्वन्यते, हे मधुव्रत ! हे कामुक ! "मधुव्रते मधुकरः कामुकेऽपि प्रकीर्तितः" इति विश्वः। अभिनवम् अनास्वादितपूर्वं यन्मधु अधरमधु तस्मिन् लोलुपः लुब्धः भवान् कामुकः चूतमञ्जरीं चूतमञ्जरीनाम्नीमिमां नायिकां परिचुम्ब्य समन्ततश्चुम्बित्वा, अधर-श्रवण हस्त-नेत्र-कपोल-स्तनमूल पार्श्व-वक्षःस्थलादि-सर्वाङ्गानि यथाभिलापं चुम्बनालिङ्गनादिनोपभुज्येत्यर्थः, साम्प्रतं कमलाया एतन्नामिकाया अन्यस्या अस्याः सपत्न्याः "सदने" वसतिर्निवासस्तन्मात्रेण निर्वृतस्त्वं सुचिरं यथेच्छं पूर्वोपभुक्तामेनां कथं विस्मृतोऽसि, "दीर्घह्रस्वे मिथो वृत्तौ" इति ह्रस्वत्वम्। अनेन राज्ञः शकुन्तला-विस्मरणरूपरहस्यस्य समुद्भेदात् क्षिप्तिर्नाम गर्भाङ्गं सूचितं भवति, यदाह विश्वनाथः—

"रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्"—इति।

किञ्चात्रानेनैव तृतीयं पताकास्थानमप्युक्तं भवति, यदुक्तं—"प्राकरणिकस्य वस्तुनो भाविनः सूचनं पताकास्थानकम्।" यथा सुदूरमपि स्थितां स्वां सेनां पताका सूचयति तद्वदिदमपि पताकास्थानम्। तल्लक्षणं यथा दर्पणे—

"अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥"

अत्र काव्यलिङ्गमलङ्कारः, अपरवक्त्रं छन्दः।

(१) रञ्जनं रागस्तस्य परिवाहिनी; अत्यन्तरञ्जिकेत्यर्थः, यथा जलाशये जलातिशये सति प्रवाह उत्कुलो भवति, तथैव रागस्यातिशयेनाभिव्यक्तौ परीवाह इव भवति, भृशमनुरागवर्षिणी गीतिरियमिति भावः।

वीदराअस्स विअ णत्थि दाणिं मे मोक्खो ।※

राजा—गच्छ, नागरिकवृत्त्या सान्त्वयैनाम् ।

विदूषकः—का गई ।† ( इति निष्क्रान्तः । )

राजा—( आत्मगतम् । ) किं नु खलु गीतार्थमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥

( इति पर्याकुलस्तिष्ठति । )

---

※ यद्भवानाज्ञापयति । भो वयस्य ! गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके ताड्यमानस्याप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षः ।

† का गतिः ।

---

( २ ) रम्याणीति, यद् यतः रम्याणि मनोरमाणि वस्तूनि, अत्र विशेषणेनैव विशेष्यावगतेः न पुनस्तत्पदोपादानम्, वीक्ष्य, मधुरान् श्रुतिसुखदान् शब्दान् गीतादींश्च निशम्य आकर्ण्य सुखितोऽपि प्रियादिजनसङ्गतोऽपि, तद्विरहिणां तु कथैव केत्यपिशब्दार्थः, जन्तुः प्राणिमात्रं पर्युत्सुकीभवति उत्कण्ठीभवति तत् नूनं निश्चितं भावैः वासनाभिः स्थिराणि आत्मनिष्ठानीति भावः, जननान्तराणाम् अन्यजन्मनां सौहृदानि सौहार्दानि अबोधपूर्वम् अज्ञानपूर्वं विषयविशेषज्ञानाभावपूर्वकमित्यर्थः, चेतसा मनसा स्मरति ।

इह संसारे जन्तुरसंख्यातानि विविधानि वस्तून्यवलोक्यापि सर्वत्र नानुरक्तो भवति किन्तु तेभ्यः कस्मिंश्चिदेकस्मिन् एव वस्तुनि अनुरक्तो भवति । तत्र जन्मान्तरीयानुरागस्मृतिरेव हेतुः, तदेवेदमिति प्रत्यभिज्ञाभावेऽपि वासनाविशेषवशाज्जन्मान्तरानुरागस्मरणेनैव तत्र मनः प्रवृत्तिर्जायते, जन्मान्तरसाहचर्यमेवात्र प्रवर्तकमिति भावः । अत्रच प्रकृते शकुन्तलाविषये इदानीन्तनशापाच्छादितो जन्मान्तरीयोऽनुरागो गम्यः । काव्यलिङ्गमलङ्कारः । वसन्ततिलक वृत्तम् ।

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्था ॥ ३ ॥

यावदभ्यन्तरगताय देवाय स्वयम् अनुष्ठेयम् अकालक्षेपार्हं निवेदयामि ( स्तोकम् अन्तरं गत्वा ) किम्पुनस्तत् ? ( विचिन्त्य ) आं ज्ञातं, कण्वशिष्यास्तपस्विनो देवं द्रष्टुम् इच्छन्ति, भोः ! चित्रमेतत् ।

क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ ४ ॥

---

( ३ ) आचार इति,—अवहितेन सावधानेन मया, राज्ञः अवरोधगृहेषु अन्तःपुरगेहेषु आचार इति कर्तव्यमिति रक्षाधिकारनियुक्तेन तत्रत्यदुष्टानां शासनार्थम् अवश्यं वेत्रयष्टिर्गृहीतव्येति नियमाद् न असामर्थ्यादित्यर्थः, या वेत्रयष्टिः गृहीता बहूनां पूरणे बहुतिथे काले आयुर्लक्षणे गते व्यतीते सति सैव वेत्रयष्टिः साम्प्रतं प्रस्थाने सञ्चारे विक्लवा वार्धक्यात् कम्पेन विह्वला गतिर्गमनं यस्य तथाभूतस्य मम अवलम्बनाय आधाराय जाता । या पूर्वं राज्ञो नियमः शासनम् इति सशक्तेनापि मया गृहीता आसीत् सैवेदानीं वार्धक्यात्क्षीणशक्तितया मम गमनसहायिनी जाता, अनया विनेदानीमेकमपि पदं चलितुं न शक्तोऽस्मीति भावः । पदार्थहेतुकं काव्यलिङ्गम् । वसन्ततिलकं छन्दः ।

( ४ ) क्षणादिति, जरतः प्रवयसः, "वृद्धः प्रवयाः स्थविरो जरत्" इत्यभिधानचिन्तामणिः, मतिः बुद्धिः, निर्वास्यतीति निर्वास्यन् तस्य निर्वाणं गमिष्यतः, प्रदीपस्य शिखेव ज्वालेव क्षणात् तमसा मोहेन लङ्घ्यते आक्रम्यते ।

यथा निर्वाणं गच्छन् दीपः क्षणादेवान्धकारेण आच्छन्नो भवति तथैव वृद्धस्यापि पुरुषस्य मतिः क्षणादेव मोहेनाक्रम्यत इति भावः । उपमालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

( परिक्रम्यावलोक्य च । ) एष देवः—

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा,
निषेवते शान्तमना विविक्तम् ।
यूथानि सञ्चार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५ ॥

भोः ! कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदितुम् । अथवाविश्रमोऽयं लोकतन्त्राधिकारः । कुतः—

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म एषः ॥ ६ ॥

---

( ५ ) प्रजा इति—प्रजाः जनान् स्वाः स्वीयाः प्रजा इव अपत्यानीव तन्त्रयित्वा तत्तदुचितमार्गे नियोज्य शान्तमनाः स्वस्थचित्तः सन् विविक्तं विजनं स्थानम् एकान्तमन्तःपुरमित्यर्थः, यूथानि गजसमूहान् सञ्चार्य तत्तदभिलषिताहारक्रीडादिकर्मसु व्यापार्य दिवा मध्याह्ने रविणा प्रतप्तः सूर्यतेजसा सन्तप्तो द्विपेन्द्रः गजपतिः शीतं शीतलं स्थानं वृक्षाणां छायादिकमिव निषेवते यथेच्छमाश्रयते ।

प्रातः सायञ्च राज्यकार्यावलोकनचिन्तया मनः स्वस्थं न भवति मध्याह्ने पुनरन्तःपुरविहारादिना सुखितं जायत इति भावः । अत्र सजातीयोपमयोः संसृष्टिः । उपजातिवृत्तम् ।

( ६ ) भानुरिति, भानुः सूर्यः सकृद् एकवारमेव युक्ताः रथे योजितास्तुरङ्गाः येन तथाभूतः, सकृद्रथनियमिताश्व इत्यर्थः, गन्धवहो वायू रात्रिञ्च दिवा च रात्रिन्दिवं नक्तन्दिनम् अविश्रान्तमित्यर्थः, प्रयाति यातायातं करोति, शेषः सर्पराजः सदैव सर्वदैव आहितः निहितः; धृत इत्यर्थः, भूमिभारो येन तथाभूतः धृतवसुन्धराभारः, षष्ठांशः रक्षाशुल्कषड्भागः वृत्तिर्जीवनं यस्य तथाभूतस्य राज्ञः एषः लोकतन्त्राधिकारे विश्रामाभावः धर्मः ।

यथा सकृन्नियमिततुरङ्गः सूर्योऽविश्रान्तः सन् स्वयमनुष्ठेयं कर्म करोत्येव, वायुरपि न केवलम् अपितु गन्धभारवहनपूर्वकं सततं वात्येव, फणीन्द्रो वासुकिरपि

यावन्नियोगमनुतिष्ठामि । ( परिक्रम्यावलोक्य च । ) एष देवः ( उपगम्य । ) जयतु जयतु देवः ।

एते खलु हिमगिरेरुपत्यकारण्यवासिनः कण्वसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

राजा—( सादरम् । ) किं कण्वसंदेशहारिणः ।

कञ्चुकी—अथ किम् ।

राजा—तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः । अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

राजा—( उत्थाय । ) वेत्रवति ! अग्निशरणमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो ।॥

राजा—( परिक्रामति । अधिकारखेदं निरूप्य । ) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखान्तरैव ।

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेनम् ।
नातिश्रमापनयनाय न च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥७॥

॥ इत इतो देवः ।

सदैव धृतभूभारस्तिष्ठति तथैवायं भूपतिरपि प्रजाभ्यः षष्ठमंशं करत्वेनादाय तान् सर्वदा रक्षति न ततो मनागप्यपरक्तो भवतीति सर्वेषामेतेषामयं नैसर्गिको धर्म एवेति भावः । अत्र मालाप्रतिवस्तूपमालङ्कारः, दुष्यन्तस्येति विशेषे वक्तव्ये सामान्येनाभिधानादप्रस्तुतप्रशंसा च, इन्द्रवज्रा वृत्तम् ।

( ७ ) औत्सुक्यमात्रमिति, प्रतिष्ठा दुर्लभराज्यवस्तुलाभेन सम्पादितं गौरवं, "प्रतिष्ठास्थानमात्रके । गौरवम्" इति विश्वः, औत्सुक्यमेवेति औत्सुक्यमात्रं लब्धपदार्थजन्यामुत्कण्ठाम् अवसाययति नाशयति, तद्वस्तु लाभे सति तद्विषयकेच्छाया निवृत्तेरिति भावः। लब्धस्य प्राप्तस्य राज्यस्य परिपालने या वृत्तिर्व्यापारः तच्चिन्तया सर्वरात्रिजागरणम् इत्यर्थः, एनं राजानं क्लिश्नाति, अतः राज्यम् अति अत्यन्तं यः श्रम-

( नेपथ्ये । )

वैतालिकौ—विजयतां देवः ।

प्रथमः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥८॥

रतस्य अपनयनाय दूरीकरणाय न राज्यप्रमतिदुःखनिरसनं कर्तुं न प्रभवति, अहर्निशमखिलप्रजाविषयकविनयाधानरक्षणभरणचिन्ताया जागरूकतया विद्यमानत्वादितिभावः, श्रमाय अपि न राज्यलाभोत्कण्ठाया निवृत्तेरिति भावः, अतः कारणाद्राज्यं स्वहस्ते धृतो दण्डो यस्य तदातपत्रं छत्रमिव वर्तत इति शेषः ।

यथा वर्षातपस्पर्शजनितदुःखनिरसनायातपत्रधारणे वहनपरिश्रमो वर्षातपादिस्पर्शरहितसुखञ्च भवति तथैव राज्यलाभेऽप्यनितरसाधारणसुखानुभवः, तद्रक्षणचिन्तया च सर्वरात्रजागरणादिरूपदुःखानुभवश्च भवतीत्यर्थः ।

"राज्यं, श्रमापनय-श्रमजनकं प्रभुत्वप्रयुक्तविविधसुखस्य, अधिगतराज्यरक्षणादिक्लेशस्य च साधनत्वात् स्वहस्तधृतातपत्रदण्डवत्, इत्यनुमानालङ्कारः, स्वहस्तधृतदण्डमिवातपत्रमित्यत्रोपमा च, अनयोरङ्गाङ्गिभावेन सङ्करः, यच्छ्रमापनयनाय न तच्छ्रमापनयनायेति विरोधाभासश्च । वसन्ततिलकं छन्दः ।

( ८ ) सर्वः प्रार्थितमर्थमधिगम्येत्यादिना य आभ्यन्तरः खेदः प्रकटितः स उपकारतत्पराणां राज्ञां स्वभाव एवेति वैतालिकवचसा स्तौति, स्वसुखेति-प्रतिदिनं दिने दिने, नैकदिनं, न वा पञ्चपदिनम् अपि तु निरन्तरमित्यर्थः, लोकहेतोः प्रजानिमित्तं [स्वस्य सुखेषु अन्तःपुरविहरणादिराजोपभोगयोग्यसार्वकालिकसुखसाधनेषु निर्गता अभिलाषा यस्य तथाभूतः प्रासङ्गिकसुखमप्यनपेक्ष्य सदा परोपकारनिरत इत्यर्थः, खिद्यसे नक्तन्दिनं प्रजासुखसन्तानचिन्तनेन परितप्यसे । अथवा—ते स्वार्थरहितपरसुखसाधनतत्परस्य तव राज्ञः, वृत्तिः वर्तनं, मरणपर्यन्तं व्यापार इत्यर्थः, एवंविधैव ईदृश्येव, परोपतापशमनार्थमेव ते जीवनं न स्वार्थसाधनायेति भावः, हि यतः पादान् चरणान् पाति रक्षतीति पादपो वृक्षः मूर्ध्ना मस्तकेन तीव्रं तीक्ष्णम् पत्रशाखात्वक्शोषणसमर्थमित्यर्थः, उष्णं मध्याह्नसम्भवं सूर्यतापम् अनुभवति स्वयं सहते किन्तु छायया आतपाभावेन परिपालनेन च संश्रितानाम् आश्रितानाम् अधः स्थितानाञ्च परितापं सूर्यसन्तापं खेदञ्च शमयति विनाशयति । मालिनीवृत्तम् ।

द्वितीयः—

नियमयसि कुमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥९॥

राजा—एते क्लान्तमनसः पुनर्नवीकृताः स्मः। ( इति परिक्रामति। )

प्रतीहारी—अहिणवसम्मज्जणसस्सिरीओ सण्णिहिदहोमधेणू अग्गिसरणालिन्दो। आरुहदु देवो।*

राजा—( आरुह्य परिजनांसावलम्बी तिष्ठति। ) वेत्रवति! किमुद्दिश्य भगवता कण्वेन मत्सकाशमृषयः प्रेषिताः स्युः।

---

* अभिनवसंमार्जनसश्रीकः संनिहितहोमधेनुरग्निशरणालिन्दः। आरोहतु देवः।

---

( ९ ) नियमयसीति, आत्तः गृहीतः दण्डो येन तथाभूतः गृहीतदण्डः—सन्नित्यर्थः, कुत्सितः मार्गः कुमार्गः, तत्र प्रस्थितास्तान् अन्यायपथवर्तिनः नियमयसि नियमनं करोषि, ततस्तान् निवारयसीत्यर्थः, यदुक्तं मानसोल्लासे—

"अनुग्रहे निग्रहे च दानेचादानकर्म्मणि।
प्रवृत्तौ च निवृत्तौ च ग्रहणे मोक्षणे तथा॥
स्वयं समर्थो यः सोऽयं राजा साक्षान्निरर्गलः। इति।

विवादं परस्परकलहं प्रशमयसि शमं नयसि, रक्षणाय मानुष्यापद्भ्यः परिपालनाय कल्पसे समर्थो भवसि, ज्ञातयः स्वसम्बन्धिनः अतनुषु प्रचुरेषु विभवेषु ऐश्वर्येषु सन्तु भवन्तु नाम, तु किन्तु प्रजानां जनानां बन्धूनां ज्येष्ठबन्धूनां कृत्यं कुमार्गनियमनेष्टप्रापणानिष्टनिवारणादिकं त्वयि भवति एव परिसमाप्तं त्वयैव निष्पाद्यं नान्येनेत्यर्थः त्वदन्ये सर्वे एव तव दायादा निग्रहानुग्रहासमर्था आत्मानमधिपतिं मन्यमानाः केवलस्थानशोभां वर्धयन्ति किन्तु सर्वेषां दुःखकथामाकर्ण्य ततस्तान् मोचयितुं त्वमेवैकः प्रभवसीति भावः।

अत्र उत्तरवाक्यार्थं प्रति पर्ववाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः, व्यतिरेकश्च। मालिनीवृत्तम्।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्।
आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥१०॥

प्रतीहारी—सुचरिदणन्दिणो इसीओ देवं सभाजइदुं आअदे त्ति तक्केमि।*

(ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः। पुरश्चैषां कञ्चुकी पुरोहितश्च।)

कञ्चुकी—इत इतो भवन्तः।

शार्ङ्गरवः—शारद्वत !

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते।

* सुचरितनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि।

(१०) किमिति, उपोढं तपो येषां तेषां संप्राप्ततपसां व्रतम् अस्यास्तीति व्रती तेषां व्रतिनां नियमवतां तापसानां तपः तैरनुष्ठेयं वाङ्मनःकायसम्भवं सत्यात्मविनिग्रहब्रह्मचर्यचान्द्रायणादिरूपं कर्म विघ्नैः अभीप्सितानर्थान् विशेषेण घ्नन्तीति विघ्नाः प्रतिबन्धकास्तैः यज्ञविघ्नविघातकै राक्षसादिभिः दूषितं नाशितं किम् ? उत अथवा धर्मारण्यचरेषु तपोवनवर्तिषु प्राणिषु जन्तुषु केनचिद् अज्ञाततपःप्रभावेण दुरात्मनेत्यर्थः, असद् अन्याय्यं कर्म्म चेष्टितम् आचरितम्, आहोस्विद् अथवा मम अपचरितैः दुराचरणैः वीरुधां लतानां प्रसवः पुष्पफलादिः विष्टम्भितः प्रतिषिद्धः। यदुक्तं—

"राज्ञोऽपचारात्पृथिवी स्वल्पसस्या भवेत्किल।
अल्पायुषः प्रजाः सर्वा दरिद्रा व्याधिपीडिताः॥" इति

इति अनेन प्रकारेण आरूढः बहुः प्रतर्कः यस्मिन् तथाभूतम् अधिगतविविधवितर्कं मे मम मनः अपरिच्छेदेन अनिर्णयेन आकुलं व्याकुलं भवतीति शेषः। दुष्टानां नियमनं शिष्टानामनुग्रह एव मे कुलोचितं कर्म्म तदसम्पादयतो महदपीदं राज्यं सन्तोषं नावहतीति भावः। शार्दूलविक्रीडितं छन्दः।

(११) राज्ञ एकान्तवासमवलोक्य तन्मनोगतं किमप्याशंक्याह, महाभाग इति—यद्यपि न भिन्ना न त्यक्ता स्थितिः मर्यादा येन सः अविहतमर्यादः असौ

तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥११॥

शारद्वतः—जाने भवान्पुरप्रवेशादित्थंभूतः संवृत्तः । अहमपि—

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥१२॥

---

नरपतिः कामम् अत्यन्तं महाभागः महाभाग्यः श्रेष्ठ इत्यर्थः, तथा अस्य शासने वर्णानां ब्राह्मणादीनां मध्ये अपकृष्टोऽपि हीनोऽपीत्यर्थः, कश्चिद् अपथं पथोऽभावः अपथम् अमार्गं न भजते न आश्रयति, तथापि एवमविगीतशिष्टाचाररक्षितरि राजनि सत्यपि इदं जनैः आकीर्णं प्रजासङ्कुलं राजप्रासादं शश्वत् निरन्तरं परिचितम् अभ्यस्तं विविक्तं विजनस्थानं येन तथोक्तेन मनसा उपलक्षितोऽहं हुतवहेन अनलेन परीतम् परिवेष्टितं गृहं गेहमिव मन्ये जानामि । अनिशम् एकान्ते वसन्नयं सहसा प्रजासङ्कुलं राजभवनम् अवलोक्य विस्मितोऽभवदित्यर्थः ।

अत्रच हुतवहपरीत गृहमिवेत्युपमा तथा हुतवहपरीतत्वरूपकार्यस्य कारणाभावेऽपि सत्वाद् विभावना, तद्विरुद्धकारणसामग्रीसत्वेऽपि "तादृशकार्याभाव इति विशेषोक्तिरिति साधकबाधकप्रमाणविरहात् सन्देहसङ्करः ।

नच "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः ॥" इत्युक्तेर्मन्ये शब्दस्योत्प्रेक्षाद्योतकत्वादिहाप्युत्प्रेक्षेति वाच्यम्, तत्सामग्र्यभावात्, उपमयैव गतार्थत्वाच्च, तेनात्र मन्ये शब्दो वितर्कमेव प्रतिपादयति । शिखरिणीवृत्तम् ।

(१२) त्वं विषयभोगनिरतं जनमग्निपरीतगृहमिव जानासि, अहं तु पुन ईदृशमवैमीति तत्प्रकारमाह, अभ्यक्तमिति—इह राजनगर्यां सुखसङ्गिनं विषयोपभोगनिरतं जनं स्नातः कृतस्नानः जनः अभ्यक्तं तैलाभ्यक्तं जनमिव "अनेनास्य पापसम्बन्धो ध्वन्यते" शुचिः सद्वृत्तः अशुचिम् असद्वृत्तम् इव "अनेन पतित्वत्यादौ स्नेहानुविद्धत्वं ध्वन्यते" प्रबुद्धः जागरितो जनः सुप्तं निद्रितं जनमिव "अनेन साम्प्रतमज्ञानावृतोऽयमिति ध्वन्यते" स्वैरगतिर्यथेच्छाचारी जनः बद्धं कारागृहवासिनं जनमिव अवैमीति सर्वत्र अन्वेति, "अनेनावधानपूर्वकं कृतसहस्रप्रयत्नेनापि मोक्षपथप्राघुणिकीकर्तुं न शक्यत इति ध्वन्यते ।"

अत्र "मालोपमा यदेकस्योपमानं बहु दृश्यते ।" इति विश्वनाथोक्तेः मालोपमालङ्कारः । आर्या जातिः ।

शकुन्तला—( निमित्तं सूचयित्वा । ) अम्महे ! किं मे वामेदरं णअणं विप्फुरदि ।❀

गौतमी—जादे पडिहदं अमङ्गलं । सुहाइं दे भत्तुकुलदेवदाओ वितरन्दु । ( इति परिक्रामति । )†

पुरोहितः—( राजानं निर्दिश्य । ) भो भोस्तपस्विनः ! असावत्रभवान्वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनम् ।

शार्ङ्गरवः—भो महाब्राह्मण ! काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः । कुतः—

भवन्ति नम्रास्तरवः फलागमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥१३॥

प्रतीहारी—देव ! पसण्णमुहवण्णा दीसन्ति । जाणामि विसद्धकज्जा इसीओ ।‡

राजा—( शकुन्तलां दृष्ट्वा ) अथात्रभवती

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥१४॥

---

❀ अहो ! किं मे वामेतरन्नयनं विस्फुरति ।

† जाते ! प्रतिहतममङ्गलम् । सुखानि ते भर्तृकुलदेवता वितरन्तु ।

‡ देव ! प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विश्रब्धकार्या ऋषयः ।

---

(१३) भवन्तीति—तरवः वृक्षाः फलानाम् आगमैः फलोद्गमैः फलभरैरित्यर्थः नम्रा विनीताश्च भवन्ति नमन्तीत्यर्थः, घनाः मेघाः निविडाश्च नवाम्बुभिः नवोदकैः दूरविलम्बिनः अत्यन्तं लम्बमानाः भवन्ति, तथा सत्पुरुषाः समृद्धिभिरैश्वर्यैः अनुद्धताः अनहङ्कारिणः, नम्रा इत्यर्थः, भवन्ति एषः नम्रत्वादिः परोपकारिणां स्वभावः नैसर्गिको धर्मः ।

फलशालिनस्तरवो जलशालिनो जलधराः समृद्धिशालिनः साधवः परोपकारनिरता जनाश्च सदा नम्रा एव तिष्ठन्तीति यत् तत्तेषां प्रकृतिरेवेति भावः ।

(१४) कास्विदिति, पाण्डूनि च तानि पत्राणि पाण्डुपत्राणि तेषां पक्वपर्णानां, रागरहितशुष्कपलाशानामित्यर्थः, मध्ये, किसलयं नवनिर्गतं पल्लवमिव तपोधनानां

प्रतीहारी—देव ! कुतूहलगब्भोपहिदो ण मे तक्को पसरदि । णं दंसणीआ उण से आकिदी लक्खीआदि ।*

राजा—भवतु । अनिर्वर्णनीयं परकलत्रम् ।

शकुन्तला—( हस्तमुरसि कृत्वा । आत्मगतम् । ) हिअअ ! किं एव्वं वेवसि । अज्जउत्तस्स भावं ओहारिअ धीरं दाव होहि ।†

पुरोहितः—( पुरो गत्वा । ) एते विधिवदर्चितास्तपस्विनः । कश्चिदेषामुपाध्यायसंदेशः । तं देवः श्रोतुमर्हति ।

राजा—अवहितोऽस्मि ।

ऋषयः—( हस्तावुद्यम्य । ) विजयस्व राजन् ?

राजा—सर्वानभिवादये ।

ऋषयः—इष्टेन युज्यस्व ।

राजा—अपि निर्विघ्नतपसो मुनयः ?

ऋषयः—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति धर्मांशौ कथमाविर्भविष्यति ॥१५॥

* देव ! कुतूहलगर्भोपहितो न मे तर्कः प्रसरति । ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।

† हृदय ! किमेवं वेपसे । आर्यपुत्रस्य भावमवधार्य धीरं तावद्भव ।

तापसानां रागरहितानामित्यर्थः, मध्ये अवगुण्ठनं विद्यते यस्यास्तथाभूता सशिरोमुखप्रावरणवती "अनेन तापसी नेयं, काचित्कन्येति सूच्यते । सर्वत्र समभात्वात् विकारानुदयात्कथं सर्वाङ्गानां प्रावरणमित्यनौचित्यमेव तत् ।" अतएव न अतिपरिस्फुटम् अत्यन्तं प्रकटं शरीरस्य लावण्यं सौन्दर्यविशेषो यस्यास्तथाभूता कास्वित् केयमित्यर्थः, सन्निहिते प्रसवसमये शरीरस्य लावण्यं किंचिन्न्यूनं भवति स्वजनानां पुरत उपस्थातुं मनश्च सङ्कुचितं भवति इयञ्च अतिपरिस्फुटलावण्या सङ्कोचेन सर्वाङ्गावगुण्ठनवती चैताहश्या मन्निकटमागमनं किमर्थमिति भावः ।

उपमा, काव्यलिङ्गञ्च, आर्या जातिः ।

(१५) कुत इति, त्वयि भवति रक्षितरि परिपालके सति सतां सदाचारवतां धर्मक्रियायाः धर्मानुष्ठानस्य विघ्नः प्रतिबन्धः कथम् ? धर्मांशौ भानौ तपति सति प्रकाशमाने सति तमः तिमिरं कथं केन प्रकारेण आविर्भविष्यति—यथा सूर्ये

राजा—अर्थवान्खलु मे राजशब्दः । अथ भगवांल्लोकानुग्रहाय कुशली कण्वः ?

ऋषयः—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्न-पूर्वकमिदमाह ।

राजा—किमाज्ञापयति भगवान् ।

शार्ङ्गरवः—यन्मिथः समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः—

त्वमर्हतामग्रसरः स्मृतोऽसि नः,
शकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥१६॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

गौतमी—अज्ज ! किं पि वत्तुकामह्मि । ण मे वअणावसरो अत्थि । कहं त्ति ।❀

---

❀ आर्य ! किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्ति । कथमिति ।

---

तपति अन्धकारो नोदेति तथैव भवति शासितरि सति धर्मक्रियैकनिरतानामस्माक-मपि विघ्नः न समुदेतीति भावः । अत्र दृष्टान्तालङ्कारः, पथ्यावक्त्रं वृत्तम् ।

(१६) ननु तदज्ञातकृतोद्वाहस्य साहसैकवृत्तितया कुतः प्रीतिरित्याशङ्क्याह,—त्वमिति—त्वम् अर्हताम् आभिजात्यादिमतां पूज्यानाम् अग्रे सरतीत्यग्रसरः पुरोगः नः अस्माकं स्मृतः परिज्ञात इत्यर्थः, असि, "इयं" शकुन्तला, "अपि" मूर्तिमती शरीरिणी सत्क्रिया सत्कारः, तव पूजेति भावः, तुल्यगुणं परस्पर-समानगुणशालिनं वधूवरं समानयन् संयोजयन् प्रजापतिः विधिविधायको-विधाता चिरस्य चिरकालं वाच्यम् अपवादं निन्दामित्यर्थः न गतः न प्राप्तः ।

यतस्त्वं पूज्यानामग्रेसरोऽसि, अत इयं पूजालक्षणा शकुन्तला तव पुरत उपस्थिता वर्तते, एनां स्वीकृत्यानुगृहाण । योग्यं योग्येन संयोजयन् प्रजापतिश्चि-राय प्रशंसाभाजनं जात इति भावः । वंशस्थविलं वृत्तम् ।

१०

णावेक्खिओ गुरुअणो इमाए तुए वि ण पुच्छिदो अ बन्धू ।
एक्कक्कस्स अ चरिए किं भणादु एक्क एक्कस्सिं ॥१७॥*

शकुन्तला—( आत्मगतम् । ) किं णु क्खु अज्जउत्तो भणादि ।†

राजा—अये ! किमिदमुपन्यस्तम् ।

शकुन्तला—( आत्मगतम् । ) पावओ क्खु वअणोवण्णासो ।‡

शार्ङ्गरवः—कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥१८॥

* नापेक्षितो गुरुजनोऽनया त्वयापि न पृष्टो बन्धुः ।
एकैकस्य च चरिते किं भणतु एक एकस्मिन् ।

† किं नु खल्वार्यपुत्रो भणति ।

‡ पावकः खलु वचनोपन्यासः ।

(१७) नापेक्षित इति, अनया तव सम्मुखस्थितया शकुन्तलया गुरुजनः अस्मदादिः न अपेक्षितः पित्रादिबहुजनमन्त्रणापेक्षितेऽपि विवाहकर्मणि किञ्चिदप्यस्मान् न पृच्छन्त्याऽनया स्वस्वच्छन्दतयैवायं सम्बन्धः सम्पादित इति भावः, त्वयापि बन्धुः आप्तजनः न पृष्टः, इह विवाहे स्वजनानां मतं न गृहीतमित्यर्थः, एकैकस्य अन्योन्यस्य चरिते आचरिते कार्ये इतिशेषः, "गुरुजनानस्माननपेक्ष्य स्वयं कृते सतीत्यर्थः, एकः मादृशोऽपरः कण्वो वा एकस्मिन् भवत्येव किं भणतु ? अत्रोभयोरप्यपराधस्तुल्यः । अन्योन्यानुरागेणैव भवद्भ्यामिदं विहितम् अतस्तृतीयेन मयाऽत्र किमपि वक्तव्यं नावशिष्यत इति भावः । गाथेयम् ।

(१८) सतीमिति, जनः सर्वसाधारणो लोकः ज्ञातीनां जननपोषणकारणभूतपितॄणां कुलं एकः केवलं संश्रय आश्रयो यस्यास्तथाभूतां भर्ता विद्यते यस्यास्तथोक्तां सधवां सतीमपि साध्वीमपि अन्यथा अन्यप्रकारेण असतीमित्यर्थः, विशङ्कते आशङ्कते, अतः स्वबन्धुभिः वधूबन्धुभिः प्रकृष्टः मदो यस्याः सा प्रमदा प्राप्तयौवनजनितमदविकारा तरुणी नतु वृद्धा, प्रिया भर्तुः प्रियकारिणी, अप्रिया अप्रियकारिणी वा यादृशी भवेत्, परिणेतुः भर्तुः समीपे इष्यते अभिलष्यते जातविवाहया तरुण्या भर्तृसमीप एव स्थेयं नान्यत्रेत्यर्थः ।

राजा—किं चात्रभवती मया परिणीतपूर्वा ?

शकुन्तला—( सविषादम् । आत्मगतम् । ) हिअअ ! संपदं दे आसङ्का ।*

शार्ङ्गरवः—

किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ।

राजा—कुतोऽयमसत्कल्पनाप्रश्नः ।

शार्ङ्गरवः—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥१९॥

राजा—विशेषेणाधिक्षिप्तोऽस्मि ।

गौतमी—जादे ! मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओउण्ठणं । तदो तुमं भट्टा अहिजाणिस्सदि । ( इति तथोक्तं करोति । ) †

राजा—( शकुन्तलां निर्वर्ण्य । आत्मगतम् । )

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेति व्यवस्यन् ।

---

* हृदय ! सांप्रतं त आशङ्का ।

† जाते ! मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति ।

---

अत्रानया शकुन्तलया त्वत्समीप एव स्थेयमिति विशेषे कथनीये सामान्य-वचनेन तदुपादानादप्रस्तुतप्रशंसा । वंशस्थविलम् ।

(१९) किमिति, कृतं यत् कार्यं गान्धर्वविवाहलक्षणं तत्र द्वेषः असहनत्वं किम् ? धर्मं प्रति विमुखता पराङ्मुखत्वं किम् ? विधिविहितगान्धर्वविवाहेन धर्मप्रजार्थमेनां परिणीय साम्प्रतं तत्परित्यागादित्यर्थः, कृते स्वयमनुष्ठितेऽस्मिन् प्रणये अवज्ञा तिरस्कारः किम् ? अथवा इमे वनवासिनः राज्ञो मम सम्बन्धिन इत्यवज्ञा आत्मन्य-वधीरणा कृता किम् ? अत्र राज्ञ उत्तरम्—कुतः कस्मात् कारणाद् असतः अविद्य-मानस्य अर्थस्य कल्पनया प्रश्नः क्रियत इति शेषः, असत्कल्पनामुत्तरार्धेन निरस्यन् पुनः शार्ङ्गरव आह, मूर्च्छन्तीति—ऐश्वर्येण सम्पदा मत्ता उद्धतास्तेषु विभव-मदमत्तेषु प्रायेण विशेषेण अमी विकाराः कृतकार्यद्वेषादयः मूर्च्छन्ति वर्धन्ते । अत्र अर्थान्तरन्यासालङ्कारः । आर्य्या ।

(२०) ललनाललामभूतामिमां शकुन्तलामवलोक्य सम्यङ्निश्चेतुमशक्यतया वितर्कयन्नाह—इदमिति, न क्लिष्टा न म्लाना कान्तिर्यस्य तथोक्तम् अनवद्यसौन्दर्य-

भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि मोक्तुम् ॥२०॥

( इति विचारयन्स्थितः । )

प्रतीहारी—अहो धम्मावेक्खिआ भट्टिणो । ईदिसं णाम सुहोवणदं रूवं देक्खिअ को अण्णो विआरेदि ।*

शार्ङ्गरवः—भो राजन्! किमिति जोषमास्यते ।

राजा—भोस्तपोधनाः ! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

शकुन्तला—( अपवार्य । ) अज्जस्स परिणए एव्व संदेहो । कुदो दाणिं मे दूराहिरोहिणी आसा ।†

शार्ङ्गरवः—मा तावत् ।

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।

---

* अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ।

† आर्यस्य परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिण्याशा ।

---

मित्यर्थः । उपनतं स्वयमुपस्थितम् इदं पुरोवर्तमानं रूपं प्रथमं प्राक् परिगृहीतम् एतयोर्वचनानुसारं गान्धर्वेण विधिना परिणीतं स्यात् नवेति व्यवस्यन् विचारयन् मनसि संशयालुरित्यर्थः, विभाते प्रभाते अन्तः अन्तर्गतः तुषारः हिमं यस्य तथोक्तं कुन्दं कुन्दकुसुमं भ्रमर इव न खलु भोक्तुं सेवितुं शक्नोमि, नापि मोक्तुं त्यक्तुं शक्नोमि । यथा प्रातः कुन्दान्तर्मधुनस्तुषाराच्छन्नत्वाद् भ्रमरस्तद् भोक्तुमपि न शक्नोति, तदन्तर्गतमधुलोभान्मोक्तुमपि न शक्नोति तथैवायं राजापि परिणयस्मृतेः शापाच्छन्नत्वात् किमपि न विनिश्चिन्वन् एनां नापि स्वीकर्तुं शक्नोति न च परित्यक्तुं शक्नोतीति भावः ।

अत्र "उपमा," संशयनामकं नाटकलक्षणञ्च प्रदर्शितं भवति यदुक्तं विश्वनाथेन—"संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद् यदनिश्चयः ।" इति । मालिनी वृत्तम् ।

(२१)कृताभिमर्षामिति, कृतः अभिमर्षः बलाद् धर्षणं,परिभव इत्यर्थः, यस्यास्तथाभूतां सुतां सदसद्व्यवहाराभ्यां स्वकुलकीर्तिकलङ्ककारणभूतां दुहितरम्

सुष्टं प्रतिग्राहयता स्वमर्थं
　　पात्रीकृतो दस्युरिवासि येन ॥२१॥

शारद्वतः—शार्ङ्गरव ! विरम त्वमिदानीम्। शकुन्तले ! वक्तव्यमुक्तमस्माभिः। सोऽयमत्रभवानेवमाह। दीयतामस्मै प्रत्ययप्रतिवचनम्।

शकुन्तला—( अपवार्य। ) इमं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण। अत्ता दाणिं मे सोअणीओ त्ति ववसिदं एदं। ( प्रकाशम्। ) अज्जउत्त ! ( इत्यर्धोक्ते। ) संसइदे दाणिं ण एसो समुदाहारो। पोरव ! ण जुत्तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअं इमं जणं समअपुव्वं पतारिअ ईदिसेहिं अक्खरेहिं पचाचक्खिदुं।*

राजा—( कर्णौ पिधाय। ) शान्तं पापम्।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम्।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥२२॥

* इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन। आत्मेदानीं मे शोचनीय इति व्यवसितमेतत्। आर्यपुत्र ! ( इत्यर्धोक्ते ) संशयित इदानीं नैष समुदाचारः। पौरव ! न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम्।

अनुमन्यमानः प्रयासं विनैवानुरूपवरप्राप्तिर्जातेत्यनुमोदमानः मननान्मुनिः सर्वदाऽऽत्मस्वरूपमननेन लोकव्यवहारानभिज्ञः कण्वः त्वया मा विमान्यः ? अपितु विमान्य एव, "चूर्णकस्थेन "मा" पदेनात्रान्वयो बोध्यः।" सुष्टं चोरितं स्वं स्वकीयं न तु परकीयम् अर्थं प्रतिग्राहयता अङ्गीकारयता धनिनेव मुनिना येन कण्वेन दस्युरिव बहुविधदण्डार्हश्चोर इव त्वं पात्रीकृतोऽसि दानार्हीकृतोऽसि।

प्रथमं त्वया शकुन्तलापितृभूतं कण्वम् अवमत्य रहसि सा गान्धर्वेण विधिना स्वायत्तीकृता, लौकिकव्यवहारानभिज्ञः सोऽपि अनायासेन तत्सदृशवरप्राप्त्या स्वीयां स्वत्कृतामवमाननामगणयित्वैव तुभ्यमेव तां दित्सुः प्रेषयामास, अत्र तामनङ्गीकुर्वन् पुनरपि तमवमानयसीत्यहो ते प्रवञ्चनम्। एवमप्यपराधिने राज्ञे स्वसन्तोषार्थं कन्यां दातुं प्रवृत्तस्य मुनेः सन्तोषस्तु दूरमास्तां प्रत्युत अवमाननैवेत्यनर्थोत्पादनाद्विषमालङ्कारः। उपजातिवृत्तम्।

(२२) व्यपदेशमिति, कूलं कषति भिनत्तीति तथाभूता सिन्धुः नदी प्रसन्नं निर्मलम् अम्भः जलं, तटतरुं तटोद्भवं वृक्षञ्च इव, व्यपदिश्यते व्यवह्रियतेऽनेनेति

शकुन्तला—होदु। जइ परमत्थतो परपरिग्गहसङ्किणा तुए एव्वं वत्तुं पउत्तं ता अहिण्णाणेन इमिणा तुह आसङ्कं अवणइस्सं।❀

राजा—उदारः कल्पः।

शकुन्तला—( मुद्रास्थानं परामृश्य। ) हद्धी। अङ्गुलीअअसुण्णा मे अङ्गुली। ( इति सविषादं गौतमीमवेक्षते। ) †

गौतमी—णूणं दे सकावदारब्भन्तरे सचीतित्थसलिलं वन्दमाणाए पब्भट्टं अङ्गुलीअअं।‡

राजा ( सस्मितम्। ) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते।

शकुन्तला—एत्थ दाव विहिणा दंसिदं पहुत्तणं। अवरं दे कहिस्सं। ×

राजा—श्रोतव्यमिदानीं संवृत्तम्।

शकुन्तला—णं एक्कस्सिं दिअहे णोमालिआमण्डवे णलिणीपत्तभाअणगअं उअअं तुह हत्थे संणिहिदं आसि। +

राजा—शृणुमस्तावत्।

शकुन्तला—तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम

---

❀ भवतु। यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि।

† हा धिक्। अङ्गुलीयकशून्या मेऽङ्गुलिः।

‡ नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम्।

× अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि।

+ नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत्।

---

व्यपदेशस्तं कुलमित्यर्थः, आविलयितुं कलुषयितुम् इमं जनं माञ्च पातयितुं पतितं कर्तुं "त्वं त्वनेन कर्म्मणा पतितैवासि मां पुनः किमिति पातयसीति णिचा सूचितं भवति।" ईहसे चेष्टसे किम्।

मर्यादोल्लङ्घिनी नदी यथा निर्मलं जलं कलुषयति तटतरुञ्च पातयति तथैव त्वमपि मम कुलं कलुषयितुम् माञ्च पातयितुमभिलषसि किम्? अहं यदि त्वां स्वीकरोमि तदा मम कुलं चिराय मलिनं स्याद् अहञ्च पतितः स्यामिति तथा कर्तुं न शक्नोमीति भावः। उपमा। आर्या।

मिअपोदओ उवट्ठिओ। तुए अअं दाव पढमं पिअउ त्ति अणुअम्पिणा उवच्छन्दिदो उअएण। ण उण दे अपरिचआदो हत्थब्भासं उवगदो। पच्छा तस्सि एव्व मए गहिदे सलिले णेण किदो पणओ। तदा तुमं इत्थं पहसिदो सि। सव्वो सगन्धेसु विस्ससिदि। दुवेवि एत्थ आरण्णआ त्ति। ❀

राजा—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः।

गौतमी—महाभाअ! ण अरुहसि एव्वं मन्तिदुं। तवोवणसंवड्ढिदो अणभिण्णो अअं जणो कइदवस्स। †

राजा—तापसवृद्धे!

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति॥२३॥

❀ तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन। न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः। पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः। तदा त्वमित्थं प्रहसितोऽसि। सर्वः सगन्धेषु विश्वसिति। द्वावप्यत्रारण्यकाविति।

† महाभाग! नार्हस्येवं मन्त्रयितुम्। तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य।

(२३) स्त्रीणामिति, स्त्रीणां कामिनीनां मध्ये अमानुषीषु मानुषभिन्नासु प्रतारकवागादिव्यवहाररहितासु तिर्यग्योनिष्वपीति भावः, अशिक्षितपटुत्वम् अनुपदिष्टवञ्चनाचातुर्यं सन्दृश्यते, याः "पुनः" प्रतिबोधवत्यः वागादिव्यवहार-निपुणाः ताः किमुत, तासां वञ्चनकौशलं किमु वक्तव्यमित्यर्थः, अप्रसिद्धमर्थं प्रसिद्धेन विशदयति—परैः भ्रियन्ते पुष्यन्त इति ताः परभृताः कोकिलाः अन्तरिक्षे गमनं तस्माद् आकाश उड्डयनात् प्राक् स्वम् अपत्यजातं स्वकीयं पुत्रसमूहम् अन्यैरन्यजातीयैः द्विजैः पक्षिभिर्वायसैः पोषयन्ति खलु वर्धयन्ते किल।

अत्र शकुन्तलेति विशेषे प्रतिपादनीये स्त्रीणामिति सामान्येन प्रतिपादनाद-प्रस्तुतप्रशंसा विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽपि। वसन्ततिलकं वृत्तम्।

शकुन्तला—( सरोषम् । ) अणज्ज ! अत्तणो हिअआणुसारेण पेक्खसि । को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पढिवदिस्सदि ।*

राजा—( आत्मगतम् । ) वनवासाद् अविभ्रमः पुनः अत्रभवत्याः कोपो लक्ष्यते, तथाहि—

न तिर्यगवलोकितं भवति चक्षुरालोहितं
वचोऽपि परुषाक्षरं न च पदेषु सङ्गच्छते ।
हिमार्त इव वेपते सकल एव बिम्बाधरः
प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥२४॥

अपिच—

संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

---

* अनार्य ! आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ।

---

(२४) नेति, "अस्याः" अवलोकितं दृष्टिः तिर्यक् तिरश्चीनं न, तथापि चक्षुः नयनम् आलोहितं रक्तं भवति, कृत्रिमे कोपे केवलं ताराणां व्यावर्तनं भवति पुनरकृत्रिमे तु सम्यग् लौहित्यं जायते इति भावः, वचः वचनम् अपि परुषाणि कोपव्यञ्जकानि अक्षराणि यत्र तथाभूतम् अथ च पदेषु न सङ्गच्छते पूर्वापरसम्बन्धो न घटते इत्यर्थः, प्रयोगविषयेषु सङ्गतं न भवतीत्यर्थः, कृत्रिमे कोपे वचः केवलं परुषाक्षरं भवति तत्प्रयोगः पुनरसङ्गतं न भवति, अकृत्रिमे कोपे तु तदाविष्टतया वचनं परुषाक्षरमपि भवति, असङ्गतञ्च जायते, सकल एव बिम्बमिव अधरः दन्तच्छदः हिमार्त इव शीतपीडित इव वेपते कम्पते—"कृत्रिमे कोपे केवलमधराग्रभाग एव कम्पितो भवति अकृत्रिमे पुनः सकल एव कम्पते, भ्रुवौ भ्रूकुटी प्रकामम् अत्यन्तं विनते किन्तु युगपदेव एककालमेव भेदं विच्छेदं गते प्राप्ते—कृत्रिमे कोपे इत्थं न सम्भवतीति भावः ।

अत्र "बिम्बाधरः" इत्यत्रोपमा, हिमार्त्त इवेत्यत्रोत्प्रेक्षा, श्लोके स्वभावोक्तिः । पृथ्वीवृत्तम् ।

मय्येवमस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य॥२५॥

(प्रकाशम्।) भद्रे! प्रथितं दुष्यन्तस्य चरितम्। तथापीदं न लक्षये।

शकुन्तला—

तुह्मे ज्जेव पमाणं जाणध धम्मत्थिदिञ्च लोअस्स।
लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ॥२६॥

सुट्ठु दाव अत्त सच्छन्दचारिणी किदह्मि जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअट्ठिअविसस्स हत्थब्भासं उवगदा।*

(इति पटान्तेन मुखमावृत्य रोदिति।)

---

* यूयमेव प्रमाणं जानीथ धर्म्मस्थितिञ्च लोकस्य।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः॥ २६॥

सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता।

---

(२५) मयीति, एवम् अनेन प्रकारेण अस्मरणेन कृतकार्यस्य स्मरणराहित्येन दारुणा क्रूरा चित्तस्य वृत्तिर्व्यापारो यस्य तथाभूते रहः एकान्ते वृत्तं जातं प्रणयं स्नेहम् अप्रतिपद्यमाने अनङ्गीकुर्वति मयि अतिरुषा अधिकक्रोधया अतएव अतिलोहितेऽतिरक्ते अक्षिणी यस्याः सा तथाभूतया आरक्तनयनयानयेत्यर्थः, कुटिलयोः वक्रयोः भ्रुवोः भेदात् भ्रूभङ्गच्छलेनेत्यर्थः, स्मरस्य भगवतः कामस्य शरासनं प्रधानसाधनं धनुः भग्नमिव त्रुटितमिव।

अत्र "शकुन्तला—(सरोपम्)" इत्यारभ्यैतत्पर्यन्तेन सम्फेटं नाम विमर्षसन्ध्यङ्गमुपक्षिप्तम्, यदुक्तं विश्वनाथेन—"सम्फेटो रोपभापणम्।" इति। धनुर्भग्नमिवेत्युत्प्रेक्षा, अनया च—अस्यास्तथा कोपो यथोपायसहस्रैरप्यनुनीयमानेयं कोपं न मुञ्चेदित्यस्यातिशयं सूचयित्वा तात्विकत्वं ध्वन्यते। काव्यलिङ्गञ्च। वसन्ततिलकम्।

(२६) मर्मोपघाति दुष्यन्तवचनमाकर्ण्य धैर्येणात्मानं संस्तभ्य सख्याजं प्रशंसन्ती—आह, यूयमिति—यूयमेव पुरुषश्रेष्ठाः भवन्त एव प्रमाणं प्रमाणशास्त्रतत्त्वं, लोकस्य जगतः, धर्म्मस्य धर्म्म-कर्म्मणः स्थितिं मर्यादाञ्च जानीथ अवगच्छथ,

शार्ङ्गरवः—इत्थमात्मकृतं प्रतिहतं चापलं दहति ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥२७॥

राजा—अयि भोः ! किमत्रभवतीप्रत्ययादेवास्मान्संयुतदोषाक्षरैः क्षिणुथ ।

शार्ङ्गरवः—( सासूयम् । ) श्रुतं भवद्भिरधरोत्तरम् ।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥२८॥

---

लज्जया विनिर्जिताः लज्जाधीनीकृताः लज्जया किमपि वक्तुं न समर्थाः इत्यर्थः, महिलाः प्रमदाः किमपि न जानन्ति, प्रवञ्चनचतुरा भवन्त एव जगतः कर्म्मणः सदसन्निर्णेतारो लोकव्यवहारकुशलाश्च, याश्च पुनर्लज्जाशीलाः कुलाङ्गनास्ताः किमपि न जानन्तीति सोपहासोक्तिः ।

अत्र व्याजस्तुतिः तथा अहमिति विशेषेऽभिधानीये महिला इति सामान्येन प्रतिपादनादप्रस्तुतप्रशंसा च । आर्य्या जातिः ।

(२७) अत इति, अत उक्तकारणात् कर्तुं योग्यं कर्म परीक्ष्य स्वेष्टजनैः सहालोच्य कर्तव्यम्, रहः सङ्गतम् एकान्तसङ्गतं, विशेषात् विशेषेण परीक्ष्य अनेन सहेदं योग्यमयोग्यं वेति सम्यङ् निर्धार्यं कर्तव्यम् ।

अज्ञातं व्यवहारेण अविदितं हृदयं येषां तेषु सौहृदं स्नेहः एवं वर्तमानप्रकारेण वैरीभवति । अत्र वैधर्म्येण सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(२८) आजन्मन इति, यः जनः आजन्मनः जन्मन आरभ्य शाठ्यं धौर्त्यम् अशिक्षितः अरण्यवासित्वाद्दुष्टजनसहवासाभावात् न शिक्षितः, तस्य जनस्य वचनं प्रतीयते अनेनेति प्रमाणं न प्रमाणम् अप्रमाणं यथार्थज्ञानकारणं न भवति, यैः जनैः पुनः परेषामतिसन्धानं परवञ्चनं विद्या इति विद्यारूपत्वेन अधीयते पठ्यते त आप्ता सन्देहादिदोषरहिता वाक् येषां तथाभूता आप्तवाचः सत्यवचनाः सन्तु भवन्तु किल ।

यथा सद्गुरोः सकाशाच्छुभे दिवसे मङ्गलाचारपूर्वकं विद्या सद्भिः शिष्यैरधीयते तथैव परवञ्चनं जीवनोपायं शास्त्रमिव यैरहरहोऽभ्यस्यते तेषां वचनं

राजा—भोः सत्यवादिन्! अभ्युपगतं तावदस्माभिरेवम्। किं पुनरिमामतिसन्धाय लभ्यते।

शाङ्गरवः—विनिपातः।

राजा—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयम्।

शारद्वतः—शाङ्गरव! किमुत्तरेण। अनुष्ठितो गुरोः संदेशः। प्रतिनिवर्तामहे वयम्। (राजानं प्रति।)

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी॥ २९॥

गौतमि! गच्छाग्रतः।

(इति प्रस्थिताः।)

शकुन्तला—कहं इमिणा किदवेण विप्पलद्ध ह्मि। तुम्हे वि मं परिच्चअह। (इत्यनुप्रतिष्ठते।)*

गौतमी—(स्थित्वा।) वच्छ सङ्गरव! अणुगच्छदि इअं क्खु णो करुणपरिदेविणी सउन्दला। पच्चादेसपरुसे भत्तुणि किं वा मे पुत्तिआ करेदु।†

---

*कथमनेन कितवेन विप्रलब्धास्मि। यूयमपि मां परित्यजथ।

† वत्स शाङ्गरव! अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला। प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु।

---

वेदवचनमिव सप्रमाणं भवतु यश्च पुनररण्यवासितया रागद्वेषादिपक्षपातरहितस्तस्य वचनं मिथ्या, अहो ते वाग्वैदुष्यम्?

अत्र शकुन्तलावचनं सत्यं दुष्यन्तस्य वचनमसत्यमिति विशेषेऽभिधानीये सामान्येन तदभिधानाद् वैधर्म्येणाप्रस्तुतप्रशंसा। उपजातिः।

(२९) उपसंहरति, तदिति—तत् तस्मादुक्तकारणादहं स्वीयं वक्तव्यमुपसंहरामीत्यर्थः, एषा भवतः पुरो वर्तमाना शकुन्तला भवतः पत्नी सहधर्मचारिणी, एनां त्यज वा गृहाण वा, हि यतः उपयन्तुः परिणेतुः दारेषु धर्मपत्न्यां सर्वतोमुखी गुणदोषाभ्याम् उपादेयहेयादिसर्वप्रकारा प्रभुता स्वामित्वं वर्तते, अतस्त्वं यथेच्छसि तथा कुर्विंतिभावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। पथ्यावक्त्रं वृत्तम्।

शाङ्गरवः—( सरोषं निवृत्य । ) आः पुरोभागिनि ! किमिदं स्वातन्त्र्य-मवलम्बसे ? ( शकुन्तला भीता वेपते । )

शाङ्गरवः—शकुन्तले !

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥३०॥

तिष्ठ, साधयामो वयम् ।

राजा—भोस्तपस्विन् ! किमत्रभवतीं विप्रलभसे ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥३१॥

शाङ्गरवः—राजन् ! यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतं भवेत्तदा कथमधर्मभीरोस्तव दारपरित्यागः ?

---

(३०) यदीति, क्षितिपः भूपतिः यथा वदति इयं मम परिणीता न भवति यदि त्वं तथा असि तदा उत्कुलया अतिक्रान्तकुलमर्यादया, स्वकुलकलङ्कभूतयेत्यर्थः, त्वया पितुः किं ? किं प्रयोजनमित्यर्थः, तु किन्तु अथ यदि आत्मनः स्वस्य व्रतं पातिव्रत्यरूपं शुचि पवित्रं वेत्सि अवगच्छसि तदा पतिकुले तव दास्यम् अपि दासीकर्मापि क्षमं योग्यं येनकेनापि प्रकारेण साध्व्या पतिकुल एव स्थातव्य-मितिभावः । द्रुतविलम्बितं वृत्तम् ।

(३१) कुमुदानीति—शशाङ्कः निशाकरः एकसरःस्थितान्यपि स्वास्तोदयाभ्यां सङ्कोचविकासवन्ति कुमुदान्येव बोधयति नतु पङ्कजानीत्येवकारार्थः, तथा सविता सूर्यः चन्द्रेऽस्तङ्गते कुमुदानां पङ्कजानामेकत्रावस्थानेऽपि पङ्कजान्येव बोधयति विकासयति हि तथाहि वशिनां जितेन्द्रियाणां वृत्तिः व्यवहारः परस्य परिग्रहः कलत्रं तस्य संश्लेषः सम्पर्कः तस्मात्पराङ्मुखी निवर्तनशीला अन्यकलत्रसङ्गम-विमुखी भवतीति भावः ।

अत्र दुष्यन्तकर्तृक शकुन्तलानङ्गीकारे विशेषे प्रतिपादनीये सामान्येन तत्प्रति-पादनादप्रस्तुतप्रशंसा तथा पूर्वार्धे वैधर्म्येण मालादृष्टान्तालङ्कारोऽपि । आर्यावृत्तम् ।

राजा—भवन्तमेवात्र गुरुलाघवं पृच्छामि—

मूढः स्यामहमेषा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ ३२ ॥

पुरोहितः—( विचार्य ) यदि तावदेवं क्रियताम् ।

राजा—अनुशास्तु मां भवान् ।

पुरोहितः—अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् । त्वं साधुभिरुद्दिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, अभिनन्द्य शुद्धान्तसेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरोहितः—वत्से ! अनुगच्छ माम् ।

शकुन्तला—भअवदि वसुहे! देहि मे विवरं ।✽ (इति रुदती प्रस्थिता । निष्क्रान्ता सह पुरोधसा तपस्विभिश्च । )

( राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति ।

( नेपथ्ये । )

आश्चर्यम् ! आश्चर्यम् !!

राजा—( आकर्ण्य । ) किं नु खलु स्यात ।

( प्रविश्य । )

---

✽ भगवति वसुधे ! देहि मे विवरम् ।

---

(३२) मूढ इति, अहं वा मूढः कृतकार्यस्मरणाभावेन अज्ञः स्यां भवेयं वा अथवा इयमेव मिथ्या वदेत् स्वेष्टसाधनाय असत्यं कथयेद् इति संशये सन्देहे संभाविते सति एनाम् अस्वीकृत्य दारत्यागी स्वस्त्री परित्यागी भवामि ? आहो उत परस्य स्त्रियः स्पर्शेन पांसुलः कामवशात् परकलत्रसङ्गमपापीयान् भवामि ? पूर्वं परिणीतापीयमिदानीं केनापि कारणेन परिणयस्मृतेरभावात् परित्यज्य स्वदारपरित्यागपातकी भवामि वा पूर्वं न परिणीतामपीमां परिणयभ्रमादेव स्वीकृत्य परनारीग्रहणपातकी भवामि, तदत्र कतमः पक्षः साधीयानिति भवानेव कथयत्विति भावः । पथ्यावक्त्रं वृत्तम् ।

पुरोहितः—( सविस्मयम् । ) देव ! अद्भुतं खलु संवृत्तम् ।

राजा—किमिव ।

पुरोहितः—देव ! परावृत्तेषु कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

राजा—ततः किम् ?

पुरोहितः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
दुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥ ३३ ॥

( सर्वे विस्मयं रूपयन्ति । )

राजा—भगवन्! प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान् ।

पुरोहितः—( विलोक्य ) विजयस्व । ( इति निष्क्रान्तः )

राजा—वेत्रवति ! पर्याकुलोऽस्मि । शयनभूमिमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो ।* ( इति प्रस्थिता । )

राजा—( परिक्रम्य स्वगतम् )

---

* इत इतो देवः ।

---

(३३) सेति, स्वानि स्वकीयानि भाग्यानि भागधेयानि निन्दन्ती धिक्कुर्वती सा बाला बाहूत्क्षेपं बाहू उत्क्षिप्य यथा स्यात्तथा क्रन्दितुं रोदितुं च प्रवृत्ता "एषा बालास्वभावोक्तिः ।" तदनन्तरं—स्त्रिया इव संस्थानम् आकृतिर्यस्य तथाभूतं तेजोमयत्वेन स्पष्टतयालक्ष्यमाणम् एकं केवलं ज्योतिः आराद् दूरादेव आगत्येति शेषः, एनाम् उत्क्षिप्य अङ्के निधाय अप्सरसः अवतीर्य यत्र स्नानादिकं कुर्वन्ति तत् अप्सरसां तीर्थं शचीतीर्थं जगाम । अत्र क्रियासमुच्चयालङ्कारः, शालिनीवृत्तम् ।

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥ ३४ ॥

( इति निष्क्रान्ताः सर्वे । )

पञ्चमोऽङ्कः ।

(३४) काममिति, प्रत्यादिष्टां निराकृतां मुनेः कण्वस्य तनयां शकुन्तलां परिग्रहं कलत्रत्वेन स्वीकृतां यद्यपि कामं सम्यक् प्रकारेण न स्मरामि तु किन्तु बलवद् अत्यधिकं दूयमानं तस्या निराकरणेन अधिकतरं क्लिश्यमानं हृदयं मां प्रत्याययतीव विश्वासं जनयतीव, तत्परिग्रहवृत्तान्तस्मरणाभावेऽपि वासनाबलात् तन्निराकृतिनिमित्तदृढतरमनःसन्तापातिशयेनास्याः परिणयोऽनुमीयत इति भावः ।

अत्र सन्तःपकारणस्य स्मरणस्याभावेऽपि तत्कथनाद्विभावना । आर्या ।

इत्यभिज्ञानशाकुन्तलटीकायां सुबोधिन्याख्यव्याख्यायां पञ्चमोऽङ्कः ।



# अङ्कावतारः ।

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च । )

रक्षिणौ—( ताडयित्वा । ) अले कुम्भीलआ ! कहेहि कहिं तुए एशे मणिबन्धणुक्किण्णणामहेए लाअकीए अङ्गुलीअए शमाशादिए ।⁕

पुरुषः—( भीतिनाटितकेन । ) पशीदन्तु भावमिश्शे । हगे ण ईदिशकम्मकाली ।†

प्रथमः—किं शोहणे ब्रह्मणेत्ति कलिअ रज्ञा पडिग्गहे दिण्णे ।‡

पुरुषः—सुणध दाणिं । हगे शक्कावदालब्भन्तरालवाशी धीवले । ×

---

⁕ अरे कुम्भीरक ! कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ।

† प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

‡ किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः ।

× शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

---

(१) कविरिदानीं कथासङ्घटनार्थमङ्कावतारं प्रस्तौति यदुक्तं मन्दारमरन्दे श्रीकृष्णेन—

"यत्रस्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसङ्गतः ।
असूचिताङ्कपत्रे तदङ्कावतरणं मतम् ॥"

दर्पणकारो विश्वनाथोऽप्यमुमेवांशं दृष्टान्तेन समर्थयन्नाह—

"अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥"

अयमेव गर्भाङ्कोऽप्युच्यते, यदाहुः—

"अङ्कान्तरेवचाङ्को निपतति यस्मिन् प्रयोगमासाद्य ।
बीजार्थयुक्तियुक्तो गर्भाङ्को नाम विज्ञेयः ॥"

केचिच्च,

"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥"

इति विश्वनाथवचनात्प्रवेशकोऽयमिति मन्यमानाः षष्ठाङ्कस्यादावेवान्तर्भावयन्ति, तदालङ्कारिकैः साहित्यिकैः सुधीभिर्विभावनीयम् ।

द्वितीयः—अले पाडच्चल ! किं तुमं अह्मेहिं जादिं पुच्छीअशि ॐ

श्यालः—सूअअ ! कहेदु शव्वं अणुक्कमेण। मा णं अन्तरा पडिवन्धेअ।†

उभौ—जं आवुत्ते आणवेदि, कहेहि।‡

पुरुषः—अहके जालुग्गालादीहिं मच्छवन्धणोवाएहिं कुडुम्ब-भलणं कलेमि।×

श्यालः—(विहस्य) विसुद्धो दाणिं आजीवो।+

पुरुषः—भट्टके ! मा एव्वं भण।

शहजे किल जे विणिन्दिए ण हु दे कम्म विवज्जणीअए।
पशुमालणकम्मदालुणे अणुकम्पामिदुजेव्व शोत्तिए॥ १ ॥÷

ॐ अरे पाटच्चर किमस्माभिस्त्वं जातिं पृच्छ्यसे।

† सूचक ! कथयतु सर्वमनुक्रमेण। मैनमन्तरे प्रतिबध्नीयाः।

‡ यदावुत्त आज्ञापयति, कथय।

× अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि।

+ विशुद्ध इदानीमाजीवः।

÷ भर्तः ! मा एवं भण।

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयकम्।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः।

(१) धीवरजीविकामुपहसन्तं नागरकम्प्रत्याह, सहजमिति-यद् विनिन्दितं गर्हितम् अपि कर्म सहजं किल स्वाभाविकं खलु पितृपरम्परागतमित्यर्थः, तत् कर्म न खलु विवर्जनीयकम् नैव परित्यागार्हम्, यदुक्तं भगवता श्रीकृष्णेन—

"सहजं कर्म कौन्तेय ! सदोषमपि न त्यजेत्।"

पशुमारणकर्म्मणा यज्ञादौ हिंसाया विहितत्वात् पशुवधकार्य्येण, दारुणः निष्ठुरोऽपि श्रोत्रियः वेदविद् ब्राह्मणः अनुकम्पया दयया मृदुरेव कोमलप्रकृतिरेव न क्रूरो नापि घातुकः।

यथा वेदविहितपशुयागम् आचरन्नपि वेदवित् पापभाग् न भवति स्वभावोऽपि यथापूर्वमनुकम्पामृदुरेव तिष्ठति, नच अन्यजनदृष्ट्या निन्दितम् अपि तत्कर्म परित्यजति तथैव वयमपि मत्स्याजीविनो धीवराः स्वजातिविहितं कर्म कुर्वन्तो न पापभाजो न क्रूरा नापि निन्दाभाजो भवाम इति भावः।

श्यालः— तदो तदो । ॐ

पुरुषः—एक्कश्शिं दिअशे मए लोहिअमच्छे पाविदे, तदो खण्डशो कप्पिदे जाव तश्श उदलब्भन्तले पेक्खामि, दाव एदं लदणभाशुलं अंगुलीअअं पेक्खिदे, पच्छा अहके शे विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं । मालेह वा मुञ्चेह वा । अअं शे आअमवुत्तन्ते । †

श्यालः—जाणुअ ! विस्सगन्धी गोहादी मच्छबन्धो एव्व णिस्संसअं । अंगुलीअअदंसणं शे विमरिसिदव्वं । राअउलं एव्व गच्छामो । ‡

रक्षिणौ—( धीवरं प्रति ) तह । गच्छ, अले गन्डभेदअ ! ।

( सर्वे परिक्रमन्ति )

श्यालः—सूअअ ! इमं गोपुरदुआरे अप्पमत्ता पडिबालह जाव इमं अंगुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि । +

उभौ—पविशदु आवुत्ते शामिपशादश्श । ÷

( इति निष्क्रान्तः श्यालः । )

---

ॐ ततस्ततः ।

† एकस्मिन्दिवसे मया रोहितमत्स्यः प्राप्तः, ततः खण्डशः कल्पितो यावत् प्रेक्षे तावत्तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं प्रेक्षितम्, पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । अयमस्यागमवृत्तान्तः ।

‡ जालुक ! विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः ।

× तथा । गच्छ अरे गण्डभेदक ! ।

+ सूचक ! इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रमामि ।

÷ प्रविशत्वावुत्तः स्वामिप्रसादाय ।

---

अत्र धीवरस्य मत्स्याजीवे विशेषे प्रस्तुते सामान्येन कर्मेति पदेन तदभिधानादप्रस्तुतप्रशंसा । सुन्दरी वृत्तं, तल्लक्षणं यथा—

"अयुजोर्यदि सौ जगौ युजोः सभरालगौ यदि सुन्दरी मता ।" इति

प्रथमः—जाणुअ ! चिलाअदि क्खु आवुत्ते। *

द्वितीयः—णं अवशलोवशप्पणीआ लाआणो। †

प्रथमः—जाणुअ ! फुल्लन्ति मे हत्था इमश्श वहस्स शुमणा पिणद्धुं। ( इति पुरुषं निर्दिशति। )‡

पुरुषः—ण अलिहदि भावे अकालणमालके भविदुं। ×

द्वितीयः—( विलोक्य। ) एशे अह्माणं शामी पत्तहत्थे लाअशाशणं गेह्निअ इदोमुहे देक्खीअदि। गिद्धवली भविश्शशि शुणो मुहं वा देक्खिश्शशि। +

( प्रविश्य )

श्यालः—सुअअ ! मुञ्चेदु एसो जालोअजीवी। उववण्णो क्खु अंगुलीअअस्स आअमो। ÷

सूचकः—जह आवुत्ते भणादि। =

द्वितीयः—एशे जमशदणं पविशिअ पडिणिवुत्ते। ( इति पुरुषं परिमुक्तवन्धनं करोति। ) ऽ

पुरुषः—( श्यालं प्रणम्य। ) भट्टा ! अह कीलिशे मे आजीवे। ऽऽ

श्यालः—एसो भट्टिणा अङ्गुलीअअमुल्लसम्मिदो पसादो वि दाविदो। ( इति पुरुषाय स्वं प्रयच्छति। ) —

पुरुषः—( सप्रणामं प्रतिगृह्य। ) भट्टा ! अणुग्गहीदह्मि। „

---

* जानुक ! चिरायते खल्वावुत्तः।

† नन्ववसरोपसर्पणीया राजानः।

‡ जानुक ! प्रस्फुरतो मम हस्तावस्य वधार्थं सुमनसः पिनद्धुम्।

× नार्हति भावोऽकारणमारको भवितुम्।

+ एष नः स्वामी पत्रहस्तो राजशासनं गृहीत्वेतोमुखो दृश्यते। गृध्रवलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि।

÷ सूचक ! मुच्यतामेष जालोपजीवी। उपपन्नः खल्वङ्गुलीयस्यागमः।

= यथावुत्तो भणति।

ऽ एष यमसदनं प्रविश्य प्रतिनिवृत्तः।

ऽऽ भर्तः ! अथ कीदृशो म आजीवः।

— एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः।

„ भर्तः ! अनुगृहीतोऽस्मि।

सूचकः—एशे णाम अनुग्गहे जे शूलादो अवदालिअ हत्थिक्कन्धे पडिट्ठाविदे ।※

जानुकः—आवुत्त ! पालिदोशिएण जाणामि महालिहलदणेन । तेण अङ्गुलीअएण भट्टिणो शम्मदेण होदव्वं ।†

श्यालः—ण तस्सिं महारुहं रदणं त्ति भट्टिणो बहुमदं त्ति तक्केमि । तस्स दंसणेन भट्टिणो अभिमदो जणो सुमराविदो । मुहुत्तअं पकिदि-गम्भीरो वि पज्जुस्सुअणअणो आसि ।‡

सूचकः—दोशिदे शोइदे अ दाणिं भट्टा आवुत्तेण ।×

जानुकः—णं भणेमि । इमश्श कए मच्छिआभत्तुणोत्ति ।+

( इति पुरुषमसूयया पश्यति । )

पुरुषः—भट्टालक ! इदो अद्धं तुह्माणं शुमणोमुल्लं होदु ।÷

जानुकः—एत्तके जुज्जइ । =

श्यालः—धीवर ! महत्तरो तुमं पिअवअस्सओ दाणिं मे संवुत्तो । कादम्बरीसक्खिके अह्माणं पढमं सोहिदे इच्छीअदि । ता सोण्डिआपणं एव्व गच्छामो ।ऽ

( इति निष्क्रान्ताः सर्वे । )

प्रवेशकः

---

※ एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

† आवुत्त ! पारितोषिकेण जानामि, महार्हरत्नेन तेनाङ्गुलीयकेन भर्तुः सम्मतेन भवितव्यम् ।

‡ न तस्मिन्महार्हं रत्नमिति भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत् ।

× तोषितः शोचितश्चेदानीं भर्ता आवुत्तेन ।

+ ननु भणामि अस्य कृते मात्स्यिकभर्तुरिति ।

÷ भट्टारक ! इतोऽर्द्धं युष्माकं सुमनोमूल्यं भवतु ।

= एतावद्युज्यते ।

ऽ धीवर ! महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमं सौहृदमिष्यते । तच्छौण्डिकापणमेव गच्छामः ।

# षष्ठोऽङ्कः

( ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः । )

सानुमती—णिव्वट्टिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं, ता जाव साहुजणस्स अभिसेअकालो भवे दाव संपदं इमस्स राएसिणो उदन्तं पच्चक्खीकरिस्सं । णं मेणआसंम्बन्धेण सरीरभूदा मे सउन्दला । ताए अ दुहिदुणिमित्तं आदिट्ठपुव्वह्मि । ( समन्तादवलोक्य । ) किंणु क्खु उदुच्छवे वि णिरुच्छवारम्भं विअ राअउलं दीसइ । अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं । किंदु सहीए आदरो मए माणइदव्वो । होदु । इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपडिच्छण्णा पस्सवत्तिणी भविअ उवलहिस्सं । ( इति नाट्येनावतीर्य स्थिता । )❀

( ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः । )

प्रथमा—कधं उवत्थिदो महुमासो ?

आतम्महरिअपण्डुर ! जीविद ! सत्तं वसन्तमासस्स !
दिट्ठो सि चूदकोरअ ! उदुमङ्गल ! तुमं पसाएमि ॥१॥†

---

❀ निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं, तद् यावत्साधुजनस्याभिषेककालो भवेत् तावत् सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि । ननु मेनकासंबन्धेन शरीरभूता मे शकुन्तला । तया च दुहितृनिमित्तमादिष्टपूर्वास्मि । किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते । अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम् । किं तु सख्या आदरो मया मानयितव्यः । भवतु । अनयोरेवोद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये ।

† कथम् उपस्थितो मधुमासः ।

आताम्रहरितपाण्डुर ! जीवित ! सत्यं वसन्तमासस्य ।
दृष्टोऽसि चूतकोरक ! ऋतुमङ्गल ! त्वां प्रसादयामि ॥

---

( १ ) मधुमासावतारचिह्नं लक्षयति, आताम्रेति—आ ईषत् ताम्रश्चासौ हरितश्चेति आताम्रहरितः, सचासौ पाण्डुरश्च तत्सम्बुद्धौ हे आताम्रहरितपाण्डुर ! ईषल्लोहितश्यामपाण्डुरवर्ण ! वसन्तमासस्य सत्यं निःसंशयं जीवित ! प्राणप्रिय ! ऋतुमङ्गल ! वसन्ततौं मङ्गलस्वरूप ! सर्वप्रथमं परिदृश्यमानत्वात् सर्वेषु ऋतुषु

द्वितीया—परहुदिए! किं एआइणी मन्तेसि ।※

प्रथमा—महुअरिए! चूदकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि ।†

द्वितीया—( सहर्षं त्वरयोपगम्य । ) कहं उवट्ठिदो महुमासो ।‡

प्रथमा—महुअरिए! तव दाणिं कालो एसो मदविब्भमगीदाणं । ×

द्वितीया—सहि! अवलम्ब मं जाव अग्गपादट्ठिआ भविअ चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि । +

प्रथमा—जइ एव्वं, ता मम वि क्खु अद्धं अच्चणफलस्स । ÷

द्वितीया—अकहिदे वि एदं संपज्जइ जदो एक्कं एव्व णो जीविदं दुधा ट्ठिदं शरीरं । ( सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति । ) अए! अप्पडिवुद्धो वि चूदप्पसवो एत्थ वन्धणभङ्गसुरभी होदि । =

( इति कपोतहस्तकं कृत्वा १ । )

---

※ परभृतिके! किमेकाकिनी मन्त्रयसे ।

† मधुकरिके! चूतकलिकां दृष्ट्वोन्मत्ता परभृतिका भवति ।

‡ कथमुपस्थितो मधुमासः ।

× मधुकरिके! तवेदानीं काल एष मदविभ्रमगीतानाम् ।

+ सखि! अवलम्बस्व मां यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि ।

÷ यदि एवं तन्ममापि खल्वर्धमर्चनफलस्य ।

= अकथितेऽप्येतत्संपद्यते यत एकमेव नौ जीवितं द्विधा स्थितं शरीरम् । अये! अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति ।

---

वसन्तस्योत्कृष्टत्वं त्वयैव कृतमित्यर्थः, चूतस्य कोरकस्तत्सम्बुद्धौ हे चूतकोरक! दृष्टोऽसि त्वमेव सर्वप्रथमं दृष्टिपथमागतोऽसि अतः प्रसादयामि समीहितसिध्यै त्वां प्रणम्यानुकूलयामीत्यर्थः ।

(१) कपोतहस्तकं कृत्वेति—कपोतो नाम संयुक्तहस्तविशेषः, यदुक्तं सङ्गीतरत्नाकरे—

"कपोतोऽसौ करो यत्र श्लिष्टमूलाग्रपार्श्वकः ।
प्रणये गुरुसम्भाषे—।" इति

तुमं सि मए चूदङ्कुर ! दिण्णो कामस्य गहीदधणुअस्स ।
पहिअजणजुवइलक्खो पञ्चाब्भहिओ सरो होहि ॥२॥ ❀

( इति चूताङ्कुरं क्षिपति । )

( प्रविश्यापटीक्षेपेण कुपितः । )

कञ्चुकी—मा तावत् । अनात्मज्ञे ! देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे ।

उभे—( भीते । ) पसीददु अज्जो । अग्गहीदत्थाओ वअं ।†

कञ्चुकी—न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च । तथाहि—

❀ त्वमसि मया चूताङ्कुर ! दत्तः कामाय गृहीतधनुषे ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥

† प्रसीदत्वार्यः । अगृहीतार्थे आवाम् ।

अत्रैव भगवान् भरतोऽपि—

"उभाभ्यामपि हस्ताभ्यामन्योन्यं पार्श्वसंग्रहात् ।
हस्तः कपोतको नाम कर्म चास्य निबोधत ॥"

"एष विनयाभ्युपगमे प्रणामकरणे गुरोश्च सम्भाषे ।" इति ।

(२) त्वमिति, हे चूताङ्कुर ! हे रसालमुकुल ! मया नायके प्रोषिते तदसङ्गमजनितासह्यान्तर्दुःखानुभववत्येत्यर्थः, गृहीतं धनुर्येन तस्मै धनुष्मते कामाय भगवते कामदेवाय विरहिजनान्तकभूतायेत्यर्थः, दत्तः दूरदेशं गतयोरपि नायकनायिकयोः संघटने कामस्यैवानितरसाधारणप्रभुत्वं विनिश्चित्य बुद्धिपूर्वकं समर्पितः असि, पन्थानं गच्छन्तीति पथिकास्तेषां युवतयः लक्ष्याणि शरव्याणि यस्य तथोक्तः त्वं पञ्चसु अरविन्दाशोक-चूत-नवमल्लिका–नीलोत्पलेषु अभ्यधिकः अतिरिक्तः श्रेष्ठ इत्यर्थः, शरः भव, मार्दवं कुसुमभावं परित्यज्य मर्मभेदनसमर्थनिशितलौहसायको भवेति भावः। "युद्धार्थिनां युद्धवीराणां शरत्कालो यथा विजययात्रायै विहितस्तथैव भुवनत्रयविजिगीषोः कामस्यापि मलयमारुतकोकिलालापादिसामग्रीसम्पत्तिमद्वसन्तकाल एव समुचितः ।" इति भावः । गाथेयम् ।

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरुबकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥३॥

उभे—णत्थि संदेहो । महाप्पहाओ राएसी ।*

प्रथमा—अज्ज ! कति दिअहाइं अह्माणं मित्तावसुणा रट्ठिएण भट्टिणीपाअमूलं पेसिदाणं । इध अ णो पमदवणस्स पालणकम्म समप्पिदं । ता आअन्तुअदाए अस्सुदपुव्वो अह्मेहिं एसो वुत्तन्तो ।†

* नास्ति संदेहः । महाप्रभावो राजर्षिः ।

† आर्य ! कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भट्टिनीपादमूलं प्रेपितयोः । इह च नौ प्रमदवनस्य पालनकर्म समर्पितम् । तदागन्तुकतयाश्रुतपूर्व आवाभ्यामेष वृत्तान्तः ।

(३) चूतानामिति—चिरं चिरकालं प्राङ् निर्गता शिशिरान्तप्रोद्भिन्ना अपि चूतानाम् आम्रतरूणां कलिका मञ्जरी, जात्यैकवचनम्, अत्र कलिकाशब्दो बाधितमुख्यार्थोऽभिनवोद्गतसाधर्म्यान्मञ्जरीमभिलक्षयति, फलञ्चास्य विकासाभाव इत्यवसेयम् । स्वं स्वकीयं रजः परागं न बध्नाति, चिरनिर्गततादृशकलिका कालप्राप्तमपि विरहिलोकस्फुलिङ्गकल्पं स्वं रजः न प्रकटयतीत्यर्थः, यथा प्रौढा अपि काचन बाला रजोदर्शनं न याति तद्वदिति ध्वन्यते, यदपि कुरुबकं तदभिधेयं कुसुमं सन्नद्धं वृन्ताद्बहिर्निर्गतं विकासोन्मुखम् इत्यर्थः, आसीत् तदपि कोरकस्य कलिकाया अवस्थयैव स्थितं न विकसितमित्यर्थः, शिशिरे शिशिरतौं गतेऽपि व्यतीतेऽपि वसन्ते समागतेऽपीति भावः, पुंस्कोकिलानां न तु सामान्यकोकिलानां रुतं कूजितं कण्ठेषु स्खलितं पञ्चमस्वरशून्यं जातमित्यर्थः, अतः शङ्के यत् स्मरोऽपि, अप्रतिहतव्यापारोऽपि भगवान् कामदेवः चकितः रूपलावण्यादिना स्वस्मादप्यधिकस्य दुष्यन्तस्य समीहितसिद्धौ भीतः सन् तूणात् तूणीराद् अर्धकृष्टम् अर्धनिष्कासितं शरं संहरति पुनस्तत्रैव निदधातीत्यर्थः, दुष्यन्तस्यालौकिकप्रभावतयैतत्सर्वं भवतीति तर्कयामीतिभावः ।

अत्र चिरनिर्गतत्वादिकारणकलापसद्भावेऽपि कार्यस्य परागादेर्निषेधान्मालाविशेषोक्तिः, शङ्क इत्युत्प्रेक्षा, अस्याञ्च पूर्ववाक्यत्रयस्य हेतुत्वे वाक्यार्थहेतुकं काव्यलिङ्गञ्च । शार्दूलविक्रीडितम् ।

कञ्चुकी—भवतु । न पुनरेवं प्रवर्तितव्यम् ।

उभे—अज्ज ! कोदूहलं णो । जइ इमिणा जणेण सोदव्वं, ता कहेदु अज्जो, किं णिमित्तं भट्टिणा वसन्तुस्सवो पडिसिद्धो ।*

सानुमती—उस्सवप्पिआ क्खु राआणो होन्ति, ता एत्थ । गुरुणा कारणेण होदव्वं ।†

कञ्चुकी—बहुलीभूतमेतत्किं न कथ्यते । किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनम् ।

उभे—सुदं रट्ठिअमुहादो जाव अङ्गुलीअअदंसणं ।‡

कञ्चुकी—तेन ह्यल्पं कथयितव्यम् । यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मे तत्रभवती रहसि शकुन्तला मोहात्प्रत्यादिष्टेति । तदाप्रभृत्येव पश्चात्तापमुपगतो देवः । तथाहि—

रम्यं द्वेष्टि यथापुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥४॥

---

* आर्य ! कौतूहलं नौ । यद्यनेन जनेन श्रोतव्यं तत् कथयत्वार्यः किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः ।

† उत्सवप्रियाः खलु राजानो भवन्ति, तदत्र गुरुणा कारणेन भवितव्यम् ।

‡ श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम् ।

---

(४) रम्यमिति, रम्यं द्वेष्टि, अङ्गुरीयकदर्शनादारभ्य दृश्यश्राव्यधार्योपभोगयोग्यनैसर्गिकमनोरमं, चन्द्रनृत्तस्रक्चन्दनवनितादि दुःखिते मनसि सह्यं न भवतीति न्यायेन तेषां विपरीतबुद्धिजनकतया तानि न सहते इत्यर्थः, यथापुरा प्रागिव प्रकृतिभिः अमात्यैः प्रजाजनैर्वा प्रत्यहं तिदिनं न सेव्यते चित्तचाञ्चल्यान्नान्वास्यते सर्वकालं शकुन्तलैकमनस्कतया कदा वा तत्प्राप्तिर्भविष्यतीति चिन्ताव्यापृतः पौराणाम् इष्टानिष्टालोचनमपि कर्तुं न पार्यत इति भावः, अनेन जडता ध्वन्यते, यदुक्तम्—

"इदमिष्टमनिष्टं तदिति वेत्ति न किञ्चन ।
नोत्तरं भाषते प्रश्ने नेक्षते न शृणोति च ॥
यत्र ध्यायति निःसंज्ञं जडता सा प्रकीर्तिता ।"

सानुमती—पिअं मे पिअं।*

कञ्चुकी—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

उभे—जुज्जइ।†

(नेपथ्ये।) एदु एदु भवं।‡

कञ्चुकी—(कर्णं दत्त्वा।) अये! इत एवाभिवर्तते देवः। स्वकमानुष्ठीयताम्।

उभे—तह।× (इति निष्क्रान्ते।)

(ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च।)

कञ्चुकी—(राजानमवलोक्य।) अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम्। एवमुत्सुकोऽपि प्रियदर्शनो देवः। तथाहि—

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
विभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।

* प्रियं मे प्रियम्। † युज्यते। ‡ एतु एतु भवान्। × तथा।

प्रत्यहं शय्यायाः प्रान्तेषु उपान्तेषु विवर्तनैः विप्रलम्भजनितसर्वाङ्गसन्तापेनान्यनायिकालिङ्गनाभावात्कृतपार्श्वपरिवर्तनैः उन्निद्रः विनिद्र एव क्षपाः क्रीडोचितविविधोपकरणालंकृता रात्रीः विगमयति यापयति ननु कामकलानिपुणाभिः कामिनीभिः सह सम्भाषणालिङ्गनचुम्बनादिनानाक्रीडापरिश्रमजनितश्रान्तिप्राप्तनिद्रया विगमयतीति भावः। यदा च यस्मिन् काले दाक्षिण्येन अत्यन्तानुरोधेन अन्तःपुरेभ्यः शुद्धान्तसुन्दरीभ्यः उचितां योग्याम् अवश्यवक्तव्यामित्यर्थः, वाचं वाक्यं ददाति ताभिः सहालपतीति भावः, तदा गोत्रेषु नामसु स्खलितः विपर्यस्तः अन्यस्या नाम्नि उच्चरितव्ये शकुन्तलानामग्रहणात् हठात् हतप्रभः चिरं चिरकालं व्रीडया लज्जया विलक्षो विस्मयान्वितः, "विलक्षोविस्मयान्वितः" इत्यमरः, भवति।

महाकुलीनोऽप्यहमीदृशीमवस्थां प्राप्तोऽस्मीति विस्मितोऽभूदिति भावः। पश्चात्तापादिकारणे वक्तव्ये कार्यस्य रम्यद्वेषादेर्यद्वचनं तत्पर्यायोक्तं, काव्यलिङ्गञ्च। शार्दूलविक्रीडितं वृत्तम्।

(५) प्रत्यादिष्टेति, प्रत्यादिष्टः निराकृतः, परित्यक्त इत्यर्थः, विशेषमण्डनस्य विशिष्टालङ्करणस्य शरीरसंस्कारादेश्च विधिः व्यापारो येन सः, वामप्रकोष्ठे मणि-

चिन्ताजागरणप्रतान्तनयनस्तेजोगुणाद्‌दात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥५॥

सानुमती—( राजानं दृष्ट्वा । ) ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स किदे सउन्दला किलम्मदि त्ति ।❀

राजा—( ध्यानमन्दं परिक्रम्य । )

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ६ ॥

❀ स्थाने खलु प्रत्यादेशविमानितास्यस्य कृते शकुन्तला क्लाम्यतीति ।

बन्धभागे अर्पितं दत्तं सव्यकूर्परमध्यभागन्यस्तं, भुजमध्यभागाधस्तान्मणिबन्धस्थानमवधीकृत्य "कलाई" इति भाषाप्रसिद्धे प्रकोष्ठभाग इत्यर्थः, यदुक्तं—अभिधानचिन्तामणौ—

"अधस्तस्याऽऽमणिबन्धात् स्यात् प्रकोष्ठः कलाचिका ।" इति ।

काञ्चनं सुवर्णमयम् एकं वलयं कङ्कणं बिभ्रत् धारयन्, पुरुषेणैकवलयधारणं दक्षिणेनैव हस्तेन कर्तव्यमिति लोकव्यवहारः, अत्र वामहस्तधारणं तु शकुन्तलाविरहभ्रान्तचित्तत्वेनेत्यवगन्तव्यम्, श्वासेन विरहजनितदीर्घोष्णनिश्वासेन उपरक्तः पाटलः अधरः यस्य तथाभूतः, चिन्तया शकुन्तलागताहर्निशभावनया यत् जागरणं निद्राभावः तेन प्रतान्तेऽत्यधिके म्लाने नयने यस्य तथाभूतः, क्षीणोऽपि वियोगकृशोऽपि आत्मनः तेजोगुणात् दीप्तिरूपाद् अनुभावविशेषात्, संस्कारेण उल्लिखितः शाणोल्लीढः, शाणप्रदानादिना परिष्कृतः महामणिरिव संलक्ष्यते, स्वाभिलापालम्बनभूतनायिकाविरहपरम्पराजनितदुःखानुभवात् कृशशरीरोऽप्ययं पूर्वापेक्षया दर्शनीय एवेति भावः। अत्र चतुर्थे चरणे महामणिरिवेत्युपमा, स्वभावोक्तिः परिकरश्च । शार्दूलविक्रीडितं वृत्तम् ।

( ६ ) प्रत्यादेशकालीनशकुन्तलाकर्तृकमभिज्ञानमिदानीमनुस्मरन्नाह, प्रथममिति—सारङ्गस्य मृगस्य अक्षिणीव अक्षिणी यस्याः सा तया मृगलोचनया, प्रियया मनोरमया शकुन्तलया, प्रथमं प्रतिबोध्यमानम् अभिज्ञानदानेन स्मृतिपथमुपनीयमानमपि, सुप्तं निद्रितम्, आदौ स्वत एव प्रबोध उचित आसीत् परं स न जातः तदानया बहुप्रकारेण कृतगान्धर्वप्रणयस्मरणाय प्रतिबोधितं

सानुमती—णं ईदिसाणि तवस्सिणीए भाअहेआइं । ❀

विदूषकः—( अपवार्य । ) लङ्घिदो एसो भूओ वि सउन्दलावाहिणा । ण आणे कहं चिकिच्छिदव्वो भविस्सदि त्ति ।†

कञ्चुकी—( उपगम्य । ) जयतु जयतु देवः । महाराज ! प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।

राजा—वेत्रवति ! मद्वचनादमात्यमार्यपिशुनं ब्रूहि—"चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयताम्" इति ।

प्रतीहारी—जं देवो आणवेदि । ( इति निष्क्रान्ता । ) ‡

राजा—वातायन ! त्वमपि स्वं नियोगमशून्यं कुरु ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

विदूषकः—किदं भवदा णिम्मच्छिअं । संपदं सिसिरातवच्छेअरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं रमइस्ससि ।×

राजा—( निःश्वस्य ) वयस्य ! रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्यभिचारि वचः । कुतः—

---

❀ नन्वीदृशानि तपस्विन्या भागधेयानि ।

† लङ्घित एव भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति ।

‡ यद्देव आज्ञापयति ।

× कृतं भवता निर्मक्षिकम् । साम्प्रतं शिशिरातपच्छेदरमणीयेऽस्मिन्प्रमदवनोद्देश आत्मानं रमयिष्यसि ।

---

तथापि मोहावस्थमेव स्थितं, चैतन्यं न प्राप्तमित्यर्थः, अतएव इदं हतहृदयं दुष्टहृदयं सम्प्रति अनुशयदुःखाय पश्चात्तापदुःखानुभवाय विबुद्धं जागरितम् । अत्र कारणाभावात् कार्योत्पत्तेर्विभावना तथा सारङ्गाक्ष्येत्यत्रोपमा च । आर्या जातिः ।

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः॥ ७॥

उपहितस्मृतिरङ्गुलिमुद्रया
प्रियतमामनिमित्तनिराकृताम्।
अनुनयादनुरोदिमि चोत्सुकः
सुरभिमाससुखं समुपैति च॥८॥

विदूषकः—भो वअस्स! चिट्ठ दाव इमिणा दण्डकट्ठेण कन्दप्पवाहिं णासेस्सं। (इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति।) ॐ

---

ॐ भो वयस्य! तिष्ठ तावत्। अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयिष्यामि।

---

(७) मुनीति, हे सखे! मुनिसुतायां शकुन्तलायां यः प्रणयः स्नेहस्तस्य स्मृतिं रुणद्धीति तथाभूतेन तमसा मोहरूपेण इदं मम मनः मुक्तं परित्यक्तं, तथा प्रहरिष्यता प्रहारं कर्तुम् इच्छता मनसिजेन भगवता मदनेन धनुषि स्वचापे चूतशरः रसालमुकुललक्षणः बाणः निवेशितः संयोजितश्च।

शकुन्तलापरिणयनस्मृतिर्वसन्तकालश्च सममेव प्रवृत्ते, समुचितमनुमवसरमुपलभ्य भगवान् कन्दर्पो मां हन्तुं प्रवृत्त इति भावः, अत्र क्रियाद्वयस्य यौगपद्यात् समुच्चयालङ्कारः। द्रुतविलम्बितं वृत्तम्।

(८) अनन्तरोदीरितमेवार्थं प्रकारान्तरेणोपपादयन्नाह, उपहितेति अङ्गुल्याः मुदं रातीत्यङ्गुलिमुद्रा तया स्वनामाक्षरयुक्ताङ्गुरीयकचिह्नेन, "साक्षराङ्गुलिमुद्रा सा" इत्यभिधानचिन्तामणिः, उपहिता जाता स्मृतिः शकुन्तलास्मरणं यस्य तथाभूतः, उत्सुकः उन्मनाः सन्, अनिमित्तम् अकारणं निराकृतां परित्यक्तां प्रियतमामनु शकुन्तलामुद्दिश्येत्यर्थः, अनुशयात् पश्चात्तापाद् रोदिमि आक्रन्दामि, सुरभिमासस्य वसन्तमासस्य सुखम् आनन्दः समुपैति समागच्छति च। समुचित प्रियाविरहदुःखावसररूपं रन्ध्रमासाद्य विरहिप्राणहरणो वसन्तसमयः समायात इति भावः। अत्रापि पूर्ववदेव समुच्चयालङ्कारः, काव्यलिङ्गञ्च। द्रुतविलम्बितं वृत्तम्

राजा—( सस्मितम् । ) भवतु । दृष्टं ब्रह्मवर्चसम् । सखे ! क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ।

विदूषकः—णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा । माहवीमण्डवे इमं वेलं अदिवाहिस्सं । तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिदिं आणेहि त्ति ।※

राजा—ईदृशं हृदयविनोदनस्थानम् । तत्तमेव मार्गमादेशय ।

विदूषकः—इदो इदो भवं ।†

( उभौ परिक्रामतः । सानुमत्यनुगच्छति । )

विदूषकः—एसो मणिसिलापट्टअसणाहो माहवीमण्डवो उवहाररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि । ता पविसिअ णिसीददु भवं ।‡

( उभौ प्रवेशं कृत्वोपविष्टौ । )

सानुमती—लदासंस्सिदा देक्खिस्सं दाव सहीए पडिकिदिं । तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं । ( इति तथा कृत्वा स्थिता । ) ×

राजा—सखे ! सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्तम् । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपगतो नासीत् । किन्तु पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् अपि ।

---

※ नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा । माधवीमण्डप इमां वेलामतिवाहयिष्ये । तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

† इत इतो भवान् ।

‡ एष मणिशिलापट्टकसनाथो माधवीमण्डप उपहाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति । तत्प्रविश्य निषीदतु भवान् ।

× लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि ।

विदूषकः—ण विसुमराभि । किंतु सव्वं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो ण भूदत्थो त्ति आचक्खिदं । मए वि मिप्पिण्ड-बुद्धिणा तह एव्व गहीदं । अहवा भविदव्वदा क्खु वलवदी ।॥

सानुमती—एव्वं णेदं । †

राजा—( ध्यात्वा ) सखे ! परित्रायस्व माम् ।

विदूषकः—भोअअस्स ! किं एवं । अणुववण्णं क्खु ईदिसं तुइ । कदा वि सप्पुरिसा सोअवत्तव्वा ण होन्ति । णं पवादे वि णिक्कम्पा गिरीओ ।‡

राजा—वयस्य ! निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि—

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९ ॥

---

॥ न विस्मरामि । किंतु सर्वं कथयित्वावसाने पुनस्त्वया परिहासविजल्प एष न भूतार्थं इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती ।

† एवमेवैतत् ।

‡ भोः, किमेतत् । अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषाः शोकवक्तव्या न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः ।

---

( ९ ) इत इति, इतः मत्तः प्रत्यादेशात् तिरस्कारात् स्वजनं शार्ङ्गरवादिम् अनुगन्तम् अनुयातुं व्यवसिता उद्युक्ता न त्वनुगतेत्यर्थः, "सा" गुरुसमे गुरुतुल्ये गुरुशिष्ये गुरोः कण्वस्य शिष्येऽन्तेवासिनि "आः पुरोभागिनि ! किं स्वातन्त्र्यमवलम्बसे" इत्यादिना "यदि यथा वदति क्षितिपस्तथा" इत्यादिना च तिष्ठ इत्युच्चैः वदति सति, पुनः अनन्तरं बाष्पस्य अश्रुणः प्रसरः आधिक्यं तेन कलुषाम् आविलां दृष्टिं क्रूरे कृतप्रणयाया अपि अस्याः परित्यागदारुणे निर्घृणहृदये मयि यद् अर्पितवती दत्तवती सविषं विषलिप्तं शल्यं लौहशराग्रमिव तन् मां दहति भृशं तापयति, विषं यथा रसादिशुक्रपर्यन्तेषु धातुषु प्रसर्पन्नाशु मारकं भवति तथैव तस्यास्तदानीन्तना दीना दृष्टिरपीदानीं स्मृतिपथमारूढा सती मां दहतीति भावः । अत्र शल्यमिवेत्युपमा शिखरिणीवृत्तम् ।

सानुमती—अम्महे ! ईदिसी परबसदा इमस्स मम्पि संदावेदि ।*

विदूषकः—भोः ! अत्थि मे तक्को । केण वि तत्तहोदी आआसचारिणा णीदे ति ।†

राजा—कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

सानुमती—संमोहे वि क्खु विह्मअणिज्जो इमस्स पडिबोहो ।‡

विदूषकः—जइ एव्वं अत्थि क्खु समाअमो कालेण तत्तहोदीए । +

राजा—कथमिव ।

विदूषकः—ण क्खु मादापिदरा भत्तुविओअदुक्खिअं दुहिदरं देक्खिदुं पारेन्ति ।

राजा—वयस्य !

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत्फलमेव पुण्यम् ।

---

* अहो ! ईदृशी परवशता अस्य माम् अपि संतापयति ।

† भोः ! अस्ति मे तर्कः । केनापि तत्रभवती आकाशचारिणा नीतेति ।

‡ संमोहेऽपि खलु विस्मयनीयोऽस्य प्रतिबोधः ।

+ यद्येवमस्ति खलु समागमः कालेन तत्रभवत्या ।

× न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

---

(१०) अवश्यं समागमो भविष्यतीति विदूषकेण दत्तसान्त्वनो राजा आह, स्वप्न इति—तत् पूर्वाङ्कप्रतिपादितशकुन्तलादर्शनसम्भाषणादिरूपं वस्तु स्वप्नः सुप्तस्य विषयानुभवो नु "स्वप्नोनिद्रामुपेतस्य विषयानुभवस्तु यः ।" इति विश्वनाथोक्तेः, "अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्" इति श्रीहर्षोक्तेश्च स्वप्नावस्थायामप्यदृष्टस्यापि विषयस्य कादाचित्कदर्शनसम्भवात् निद्रावस्थायामनुभूतरमणीरत्नदर्शनसम्भाषणादिज्ञानमेतत् नतु जाग्रदवस्थायां साक्षाद्बुद्धिपूर्वकानुभूतज्ञानमिति वर्तते किम् ?

ननु यदि स्वप्नः स्यात् तर्हि जाग्रदवस्थायां कथमनुभूयते इत्यत आह मायेति—

असन्निवृत्त्यै तदतीतमेते
मनोरथा नाम तटप्रपाताः ॥ १० ॥

विदूषकः—मा एव्वं, णं अङ्गुलीअअं एव्व णिदंसणं । अवस्सं-भावी अचिन्तणिज्जो समाअमो होदि त्ति ।❀

राजा—( अंगुलीयकं विलोक्य । ) अये ! इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

❀ मैवम् । नन्वङ्गुलीयकमेव निदर्शनमवश्यंभाव्यचिन्तनीयः समागमो भवतीति ।

मन्त्रतन्त्राभ्यामसतो वस्तुनः प्रकटनं माया, तस्याश्च कपटघटितत्वाद् ऐन्द्रजालिक-व्यापारादिनैवेदं जातं नु ?

यथा यः कश्चिदैन्द्रजालिकः स्वमायया युवतिदर्शनसम्भाषणादिकमुत्पाद्य असत्यमपि तत् सत्यमिवानुभावयति गते च तस्मिन् तत्सर्वम् अस्तङ्गतमेव भवति तद्वदेवेदमपि नु ? ननु यद्येषा माया सम्भाव्येत तदाधिष्ठानं न प्रतीयेतेत्यत आह-मतिभ्रमोन्विति किम् ? यथा आदर्शप्रतिबिम्बितवस्तुनि तत्त्वबुद्ध्या प्रवृत्त्यव्यव-सायस्तद्वदित्यर्थः, तेन अन्याधिष्ठानेऽपि शकुन्तलाभ्रमसम्भवः ।

नन्वयं यदि भ्रम एव स्यात्तदाऽस्य व्यवहारक्षमत्वं कुत इत्याह क्लृप्तमिति—पुण्यैः मम सुकृतैः तावदेव तत्परिमितकालपर्यन्तमेव फलं दर्शनफलं क्लृप्तं जनितं किम् ? तस्याः दर्शनसम्भाषणादिः यावान् व्यवहारो जातस्तावदेव पूर्व-जन्मन्याचरितसुकृतस्य फलमेतत्किमित्यादिविविधप्रकारेण वितर्कयन्निश्चिनोति असन्निवृत्त्या इति—तत् शकुन्तलारूपं वस्तु असन्निवृत्त्यै पुनरनावृत्त्यै अतीतं गतमेव, अतः परं केवलं मम सन्तोषार्थं त्वया उच्यमाना मयापि तथैव स्वीक्रि-यमाणा भाविशकुन्तलासमागमरूपा मनोरथाः नाम अलीकाः, नाम इत्यलीके, अलीका मनोरथा इत्यर्थः, तटप्रपाताः तटपतनसदृशा वर्तन्ते ।

यथा वर्षर्तौ गङ्गादिमहानद्यास्तटाः स्रोतसा खातमूलाः प्रथमम् अहमहमिकया आदौ एकस्तदुपरि अन्यस्तदुपरि अपरस्तदुपरि इतर इति पतन्त एव तत्र विली-यन्ते तथैव मनोरथा अपि केचन उत्पद्यन्ते केचन विलीयन्ते पुनः केचन उत्पद्यन्ते पुनश्च तेऽपि विलीयन्त इति न तेषां तात्त्विकत्वमिति भावः । अत्र सन्देहालङ्कारः । उपजातिवृत्तम् ।

तव सुचरितमंगुलीय ! नूनं
प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११ ॥

सानुमती—जइ अण्णहत्थगदं भवे तदो सच्चं एव्व सोअणिज्जं भवे। (शकुन्तलामुद्दिश्य) सहि ! दूरे वट्टसि, एआइणी ज्जेव कण्णसुहाइं अणुभवेमि ।*

विदूषकः—भोः ! इअं णाममुद्दा केण उद्देसेण तत्तहोदीए हत्थाब्भासं पाविदा ।†

* यद्यन्यहस्तगतं भवेत्सत्यमेव शोचनीयं भवेत् । सखि ! दूरे वर्तसे, एकाकिन्येव कर्णसुखान्यनुभवामि ।

† भोः ! इयं नाममुद्रा केनोद्देशेन तत्रभवत्या हस्ताभ्यासं प्रापिता ।

(११) तवेति, अङ्गुलौ भवम् अङ्गुलीयं, तत्सम्बुद्धौ हे अङ्गुलीय ! हे ऊर्मिके "ऊर्मिका त्वङ्गुलीयकम् ।" इत्यभिधानचिन्तामणिः, तव सुचरितं पुण्यं फलेन फलदर्शनेन मम इव प्रतनु अल्पं नूनं निश्चितं विभाव्यते प्रतीयते, अत्र हेतुमाह—अरुणेति—यत् यस्मात् कारणात् अरुणा रक्तवर्णा नखा यासु ताः अरुणनखाः ताश्च ता मनोहराश्च तासु, यदुक्तं सामुद्रैः—

"नातिह्रस्वा नातिदीर्घा न स्थूला न कृशा अपि ।
अवक्राः सरला रक्तनखा रक्ततला अपि ॥
कोमलाः सितबिन्द्वाढ्या भङ्गुरा दीप्तिमन्नखाः ।
तादृगङ्गुलयो यस्याः सा भवेद्राजवल्लभा ॥"

तस्याः त्रिलोकीसुन्दर्याः अङ्गुलीषु करशाखासु लब्धपदं महता भाग्येन प्राप्तस्थानं सत् च्युतम् असि परिभ्रष्टम् असि ।

पुरुषाङ्गुलपरिणाहघटितमङ्गुलीयं शकुन्तलायाः कनिष्ठिकायाम् अङ्गुलौ शिथिलं सदन्याङ्गुलौ तत्रापि शिथिलं सदितराङ्गुलावित्यभिप्रायेण अङ्गुलीष्विति बहुवचननिर्देशः ।

अत्र पूर्वार्द्धेऽनुमानालङ्कारः । पूर्वार्द्धं प्रति परार्द्धस्य हेतुत्वात् काव्यलिङ्गञ्च । पुष्पिताग्रा वृत्तञ्च ।

सानुमती—मम वि कोदूहलेण आआरिदो एसो। *

राजा—वयस्य! श्रूयताम्। यदा तपोवनात् स्वनगराय प्रस्थितं मां प्रिया सवाष्पमाह कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति।

विदूषकः—तदो तदो। †

राजा—तदा एनां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता—

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम्।
तावत्प्रिये! मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥१२॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।

सानुमती—रमणीओ क्खु अवही विहिणा विसंवादिदो। ‡

विदूषकः—भो! कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भन्तले आसि? ×

राजा—शचीतीर्थे वन्दमानायाः सख्यास्ते हस्ताद् गङ्गास्रोतसि परिभ्रष्टम्।

विदूषकः—जुज्जइ। +

---

* ममापि कौतूहलेनाकारित एषः।

† ततस्ततः।

‡ रमणीयः खल्ववधिर्विधिना विसंवादितः।

× कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत्?

+ युज्यते।

---

(१२) एकैकमिति, अत्र अङ्गुलीयकमुद्रिकायां दिवसे दिवसे प्रतिदिवसम् एकैकम् एकम् एकं मम इदं मदीयं दुष्यन्त इति नामाक्षरं गणय, यावद् अन्तं गच्छसि नामाक्षरगणनस्य समाप्तिम् एष्यसि तावदेव दिनत्रयानन्तरमेवेत्यर्थः, हे प्रिये! मम अवरोध एव गृहम् अन्तःपुरं तत्र यः प्रवेशस्तं नेता प्रापयिता जनः तव भवत्याः समीपम् उपैष्यति।

राजधानीमुपगम्य द्वित्रिदिनानन्तरमेवाहमेकं जनं प्रेषयिष्यामि यो भवतीं ममान्तःपुरं प्रापयिष्यति, नात्र त्वया मनागपि किमपि चिन्तनीयमित्यर्थः। काव्यलिङ्गमलङ्कारः।

सानुमती—अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेहो आसि। अहवा ण ईदिसो अणुराओ अहिण्णाणं अवेक्खदि। ता कहं विअ एदं? ❀

राजा—उपालप्स्ये तावदिदमङ्गुलीयकम्।

विदूषकः—(आत्मगतम्।) गहीदो णेण पन्था उम्मत्तआणं। †

राजा—

कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि।

अथवा—

अचेतनं नाम गुणं न लक्षये-
न्मयैव कस्मादवधीरिता प्रिया॥ १३॥

❀ अतएव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये सन्देह आसीत् अथवा ईदृशोऽनुरागोऽभिज्ञानमपेक्षते तत् कथमिवैतत्?

† गृहीतोऽनेन पन्था उन्मत्तानाम्।

(१३) कथमिति, सुन्दराः कोमला मृदुला अङ्गुलयो यस्मिंस्तथाभूतं "बन्धुरं सुन्दरे रम्ये" इति विश्वः, करं हस्तं विहाय परित्यज्य अम्भसि पयसि कथं कस्मात्कारणात् निमग्नं कृतमज्जनम् असि।

अलङ्काराणाम् आहार्यशोभाविधायकतया वपुषि तत्तत्स्थानेष्वेव तेषामवस्थितिः साधीयसीति तस्यास्तादृशं सुन्दरं करम् उपलभ्य अपि तं विहाय जलमज्जनं कुर्वता त्वया न सम्यगाचरितम्।

यथा लोके केनापि कारणेन जातलज्जा मानिनः संसदि मुखं दर्शयितुं लज्जमाना आत्मान चिराय जले पातयन्ति तथैवेदानीम् अतिमृदुलं शकुन्तलाकरं परित्यजतस्तव लोके यदयशोऽजनि तदेव प्रमार्ष्टुमभिलषता त्वया जलमज्जनं कृतं भवेदिति भावः।

अथवा अचेतनं चेतनारहितं जडं वस्तु, रमणीयपदार्थोपादेयतारतम्यानभिज्ञमित्यर्थः, गुणम् अवश्योपादेयकारणीभूतं हेतुं न लक्षयेत् न कलयेत्, त्वञ्च अचेतनम् असि, अचेतनत्वात्त्वयेदं कृतमिति न ते दोषः, परन्तु मया कर्तव्याकर्तव्यविवेकशालिना सचेतनेनापि सतेत्यर्थः, प्रिया शकुन्तला कस्माद् अवधीरिता परित्यक्ता।

विदूषकः—( आत्मगतम्। ) कहं वुभुक्खाए खादिदव्वो ह्मि। *

राजा—प्रिये ! अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन।

( प्रविश्यापटीक्षेपेण चित्रफलकहस्ता। )

चतुरिका—भट्टा ! इअं चित्तगदा भट्टिणी। ( इति चित्रफलकं दर्शयति। )†

राजा—( विलोक्य ) अहो ! रूपमालेख्यगताया अपि प्रियायाः, तथाहि—

दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम्।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम्॥१४॥

* कथं बुभुक्षया खादितव्योऽस्मि।
† इयं चित्रगता भट्टिनी।

अत्र गुरुत्वात्स्वाभाविको जलपातस्तत्कर्तृत्वेनोच्यत इति स्वाभाविककृत्रिमयोरभेदाध्यवसायादतिशयोक्तिगर्भाचेतने चेतनव्यवहारस्य पतनरूपस्य समारोपात् समासोक्तिः।

एवं कारणाभावेऽप्यवधीरणारूपकार्योत्पत्तेर्विभावना। वंशस्थविलं वृत्तम्।

(१४) दीर्घेति, अपाङ्गति तिर्यक् चलति नेत्रं यत्रासावपाङ्गः, "अगि गतौ" आधारे घञ्, दीर्घौ विशालौ यावपाङ्गौ ताभ्यां विसारि प्रसारि नेत्रयुगलं यस्मिंस्तत्, लीलया विलासेन अञ्चिते सुन्दरे भ्रुवौ लते इव यस्मिंस्तत्तथोक्तं, दन्तानाम् अन्तः मध्यभागे परिकीर्णाभिः परितो व्याप्ताभिः हासस्य किरणा एव ज्योत्स्नास्ताभिः विलिप्तो व्याप्तः अधरः अधरोष्ठो यस्य तथोक्तं, कर्कन्धोः द्युतिरिव द्युतिर्यस्य सः, अतएव पाटलः श्वेतरक्तः "श्वेतरक्तस्तु पाटलः" इत्यमरः, य ओष्ठस्तेन रुचिरं सुन्दरं, तथा विभ्रमेण विलासेन लसन् शोभमानः प्रकर्षेण भेदं गतः कान्तिद्रवो लावण्यजलप्रवाहो यत्र तथोक्तं तस्याः मम हृदयसर्वस्वभूतायाः प्रियायाः तद् एतन् मुखं चित्रेऽपि आलेख्येऽपि आलपतीव किमपि वक्तुकाममिव दृश्यत इतिशेषः। अत्र भ्रूलता कर्कन्धुद्युतिरित्युभयत्रोपमा, हासकिरणज्योत्स्नेत्यत्र रूपकम्, आलपतीवेतिक्रियोत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

विदूषकः—साहु वअस्स ! महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो । क्खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु; किं बहुणा सत्ताणुप्पवेस-सङ्काए आलवणकोदूहलं मे जणअदि । *

सानुमती—अम्मो एसा राएसिणो वत्तिआलेहाणिउणदा । जाणे सही अग्गदो मे वट्टदि त्ति । †

राजा—

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किंचिदन्वितम् ॥ १५ ॥

तथाहि—

अस्यास्तुङ्गमिव स्तनद्वयमिदं, निम्नेव नाभिः स्थिता
दृश्यन्ते विषमोन्नताश्च वलयो, भित्तौ समायामपि ।

---

* साधु वयस्य ! मधुरावस्थानदर्शनीयो भावानुप्रवेशः । स्खलतीव मे दृष्टि-र्निम्नोन्नतप्रदेशेषु; किं बहुना, सत्वानुप्रवेशशङ्कया आलपनकौतूहलं मे जनयति ।

† अहो एषा राजर्षेर्वर्तिकालेखानिपुणता । जाने सख्यग्रतो मे वर्तत इति ।

---

(१५) यदिति, चित्रे चित्रफलके यद् यद् अङ्गं साधु उत्कृष्टं न स्यात् सर्वथा तदङ्गप्रतिरूपकं न भवेत् तत्तद् अन्यथा क्रियते भूयो भूयः संमार्ज्य तदङ्गप्रतिरूपिकां शोभां सम्पादयितुं तूलिकालेखिन्या साधुक्रियते, चित्रस्य लेखकभावनापरिपोषा-वधि पुनः पुनः परिसृज्य लिखितुं शक्यत्वादित्यर्थः, तथापि चित्रकलाकुशलानां चित्रस्य सर्वाङ्गीणलावण्यनैपुण्यसम्पादने सिद्धहस्तत्वेऽपि तस्या विसर्गरम-णीयायाः शकुन्तलाया लावण्यम् अङ्गसौन्दर्यं, रेखया तूलिकाविहितया मदीयया लेखया किञ्चिद् ईषदेव, नाममात्रमेवेत्यर्थः, अन्वितं सङ्गतम् ।

चित्रकर्मनिपुणश्चित्रकारश्चित्रं निर्माय पश्चाद् आदर्शचित्रेण सह तत्तुलयति ततश्च तत्र यदि स्वल्पमपि वैगुण्यं दृष्टं भवति तदा अतिकोमलया तूलिकालेखिन्या तत्प्रतिसार्य यथाभिलषितं पुनर्विलिखति, तत्रापि यदि कश्चन दोष उपलभ्यते तदा पुनः प्रमार्ज्य नवीनं निर्माति, एवं बहुवारं विधाय पुनः पुनः प्रमार्ज्य च कथमपि आदर्शप्रतिरूपकं निरवद्यम् अपरं चित्रं निर्मातुं प्रभवतीतिलोकप्रसिद्धव्यवहारं मनसि निधाय तामेव सततं चिन्तयता मयापि अवधानदानपूर्वकं स्वीयं सकलं कलाकौशलं व्ययीकृत्य महता प्रयासेनेदं चित्रं लिखितं परन्तु न पुनरिदं तस्याः सर्वाङ्गपूर्णं रूपलावण्यादिकं तुलयितुमलम्भवतीति भावः । पथ्यावक्त्रं वृत्तम् ।

(१६) अस्या इति, समायाम् उच्चावचरहितायाम् अपि भित्तौ चित्रपटे

अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं
प्रेम्णा मन्मुखमीषदीक्षित इव स्मेरा च वक्तीव माम् ॥१६॥

सानुमती—सरिसं एदं पच्छादावगुरुणो सिणेहस्स अणवलेवस्स अ ।*

राजा—अहं हि—

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे ! प्रणयवान्मृगतृष्णिकायाम् ॥ १७ ॥

विदूषकः—भो ! दाणिं तिण्णिओ तत्तहोदीओ दीसन्ति । सव्वाओ अ दंसणीआओ । कदमा इत्थ तत्तहोदी सउन्दला ।†

* सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च ।

† भोः, इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वाश्च दर्शनीयाः । कतमात्र तत्रभवती शकुन्तला ।

अस्याः चित्रलिखितायाः मम प्रेयस्याः इदं दृश्यमानं स्तनद्वयं तुङ्गम् उन्नतमिव लक्ष्यते, नतु यथार्थत उन्नतमित्यर्थः, नाभिः निम्ना गम्भीरा इव लक्ष्यते नतु यथार्थतो निम्नेत्यर्थः, तथा वलयः त्रिवलयः विषमाश्च उन्नताश्च विषमोन्नताः निम्नोन्नता इत्यर्थः, दृश्यन्ते, इदं परिदृश्यमानम् अङ्गे शरीरे मार्दवं मृदुलता स्निग्धस्य तैलादेः उद्वर्तनादेश्च प्रभावात् सामर्थ्यात् चिरं चिरकालं प्रतिभाति प्रस्फुरति, प्रेम्णा स्नेहेन मम मुखं मन्मुखं ईषत् किञ्चिद् ईक्षते इव अवलोकयतीव तथा स्मेरा ईषत् कृतहासा सती मां वक्तीव सम्भाषत इव । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितम् ।

(१७) साक्षादिति, हे सखे! अहं पूर्वं प्राक् साक्षात् प्रत्यक्षतः उपगतां समीपमागतां प्रियाम् अपहाय विहाय चित्रे अर्पितां लिखिताम् इमां बहुमन्यमानः सादरमवलोकमानः, पथि मार्गे निकामम् अत्यन्तं जलं यस्यां सा तां स्रोतोवहां नदीम् अतीत्य व्यतीत्य मृगतृष्णिकायां मरीचिकायां प्रणयवान् स्नेहवान् जातोऽस्मि ।

जलरहिते मरुभूमौ सूर्यकिरणान् दूरत एव वीक्ष्य तृष्णार्ता मृगा जलभ्रान्त्या तदर्थं यथा धावन्ति न च तत्वतस्तत्र जलं लभन्ते तथैव अहमपि न यथार्थतो वर्तमानां चित्रगताम् इमां यथार्थतो वर्तमानामिव बहुमत्वा मिथ्यैव मनस्तोषमावहामि । मृगतृष्णिकायामासक्तिरिव चित्रगतायां प्रियायां ममासक्तिरिति भावः । अत्र बिम्बप्रतिबिम्बभावेन पर्यवसानादसम्भवद्वस्तुसम्बन्धरूपा निदर्शना ।

सानुमती—अणभिण्णो क्खु ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो ।*

राजा—त्वं तावत्कतमां तर्कयसि ।

विदूषकः—(निर्वर्ण्य) तक्के मि जा एसा सिढिलकेसबन्धणुव्वन्तकुसुमेण केसन्तेण उब्भिण्णस्सेअबिन्दुणा वअणेण विसेसदो ओसेरिआहिं बाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पास्से इसिपरिस्सन्ता विअ आलिहिदा सा सउन्दला । इदराओ सहीओ त्ति । †

राजा—निपुणो भवान् । अस्त्यत्र ममापि भावचिह्नम् ।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं दृश्यमिदं वर्णकोच्छ्वासात् ॥ १८ ॥

चतुरिके ! अर्धलिखितमेतद्विनोदस्थानम् । गच्छ । वर्तिकां तावदानय ।

चतुरिका—अज्ज माहव्व ! अवलम्ब चित्तफलअं जाव आअच्छामि । ‡

राजा—अहमेवैतदवलम्बे । (इति यथोक्तं करोति । निष्क्रान्ता चेटी ।)

---

* अनभिज्ञः खल्वीदृशस्य रूपस्य, मोघदृष्टिरयं जनः ।

† तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता सा शकुन्तला । इतरे सख्याविति ।

‡ आर्य माधव्य, अवलम्बस्व चित्रफलकं, यावदागच्छामि ।

---

(१८) स्विन्नेति, स्विन्नानाम् स्वेदार्द्राणाम् अङ्गुलीनां विनिवेशः अर्पणं रेखाप्रान्तेषु चित्रकर्मसमये रेखापार्श्वदेशेषु मलिनः प्रसरत्स्वेदजलसम्पर्कवशात् श्यामः दृश्यते तथा वर्णकानां सितासितहरितादिरञ्जनद्रव्याणाम् उच्छ्वासात् उच्छूनत्वाद्धेतोः कपोलयोः पतितं आलेख्यकपोलगलितम् इदम् अश्रु नेत्रजलं लक्ष्यं विभाव्यम् ।

चित्रनिर्माणसमये पुरःस्थितताया इव तस्या भावनया तदीयप्रत्यादेशादिस्मरणजनितदुःखपरम्पराजनितनेत्रजलप्रादुर्भावेन लेखनक्रियायाः किञ्चिच्छैथिल्यात्तत्र वर्णाधिक्यं जातमित्यर्थः । आर्या जातिः ।

विदूषकः—( आत्मगतम् । ) ऐसो अत्तभवं णदिं अदिक्कमिअ मिअतिण्हिआं संकन्तो । ( प्रकाशम् । ) भो ! अवरं किं एत्थ लिहिदव्वं । ✽

सानुमती—जो जो पदेसो सहिए मे अहिरूवो तं तं आलिहिदुकामो भवे । †

राजा—सखे ! श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥१९॥

विदूषकः—( आत्मगतम् । ) जह अहं देक्खामि पूरिदव्वं ऐन चित्तफलअं लम्बकुच्चाणं तावसाणं कदम्बेहिं । ‡

राजा—वयस्य ! अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमस्माभिः ।

विदूषकः—किं विअ । +

---

✽ एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । भोः, अपरं किमत्र लिखितव्यम् ।

† यो यः प्रदेशः सख्यामेऽभिरूपस्तं तमालिखितुकामो भवेत् ।

‡ यथाहं पश्यामि पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः ।

+ किमिव ।

---

(१९) कार्येति, सैकतेषु विविधक्रीडोचितवालुकामयप्रदेशेषु लीनानि क्रीडार्थं संसक्तानि हंसानां मिथुनानि हंसद्वन्द्वानि यस्याः सा मालिनी नाम स्रोतोवहा नदी कार्या लेखनीया तां मालिनीम् अभितः परितः उभयपार्श्वतटयोरित्यर्थः, निषण्णा उपविष्टा हरिणा मृगा येषु तथाभूता गौरीगुरोः हिमाचलस्य पावनाः पवित्राः पादाः प्रत्यन्तपर्वताः कार्या इति शेषः एवं शाखासु लम्बितानि वल्कलानि वृक्षत्वचो यस्य तथाभूतस्य तरोः अधः कृष्णमृगस्य कृष्णसारस्य शृङ्गे वामनयनं स्वीयं सव्यं नेत्रं कण्डूयमानां कण्डूतिं कुर्वतीं मृगीं हरिणीं निर्मातुम् इच्छामि ।

अत्र स्वभावोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

सानुमती—वणवासस्स सोउमारस्स अविणअस्स अ जं सरिसं भविस्सदि । ‌‌❀

राजा—

कृतं न कर्णार्पितबन्धनं सखे !
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ २० ॥

विदूषकः—भो ! किं णु तत्तहोदी रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं ओवारिअ चइदचइदा विअ ठिआ । ( सावधानं दृष्ट्वा । ) † आ, एसो दासीए पुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं अहिलङ्घेदि महुअरो । ‡

राजा—ननु वार्यतामेष धृष्टः ।

विदूषकः—भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहवसि । ×

राजा—युज्यते । अयि भोः कुसुमलताप्रियातिथे ? किमत्र परिपतनखेदमनुभवसि ।

❀ वनवासस्य सौकुमार्यस्याविनयस्य च यत्सदृशं भविष्यति ।

† भोः, किं नु तत्रभवती रक्तकुवलयपल्लवशोभिनाग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता ।

‡ आः, एष दास्याः पुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमभिलङ्घति मधुकरः ।

× भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति ।

(२०) कृतमिति, हे सखे ! कर्णे अर्पितं न्यस्तं बन्धनं वृन्तं यस्य तथाभूतम् आगण्डं विलम्बन्त इत्यागण्डविलम्बिनः कपोलपर्यन्तं लम्बमाना इत्यर्थः, केशराः किञ्जल्का यस्य तथोक्तं शिरीषं शिरीषपुष्पं न कृतं न लिखितमित्यर्थः, वा शरदश्चन्द्रः शरच्चन्द्रस्तस्य मरीचिवत् किरणवत् कोमलं मृदुलं मृणालसूत्रं बिससूत्रं स्तनयोरन्तरे न रचितम् ।

अत्र मरीचिकोमलमित्यत्रोपमा क्रियासमुच्चयश्चालङ्कारः ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥२१॥

सानुमती—अज्ज अभिजादं क्खु एसो वारिदो।*

विदूषकः—पडिसिद्धा वि वामा एसा जादी।†

राजा—एवं भोः, न मे शासने तिष्ठसि। श्रूयतां तर्हि संप्रति—

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु।
बिम्बाधरं स्पृशसि चेद् भ्रमर! प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥२२॥

---

* अद्याभिजातं खल्वेष वारितः।

† प्रतिषिद्धापि वामैषा जातिः।

---

(२१) एषेति, एषा पुरोवर्तमाना मधुकरी भ्रमरी कुसुमे निषण्णा कुसुमनिषण्णा पुष्पोपविष्टा अनुरक्ता भवति अनुरागिणी तृषितापि पिपासितापि यतः सती पतिव्रता अतः भवन्तं प्रतिपालयति भवदागमनं प्रतीक्षते, मधु मकरन्दं त्वया विना न खलु नैव पिबति। अनेन तस्यास्त्वयि प्रेमाधिक्यं प्रकटितं भवति अतः सत्वरं तत्रैव गच्छ, तृषितायाः प्रतिपालनं न युक्तमिति भावः।

(१) अभिजातं न्याय्यं यथा स्यात्तथा एष मधुकरो वारित इत्यर्थः।

(२२) अक्लिष्टेति, हे भ्रमर! सौरभवस्त्वेकरसिक! रतान्येव उत्सवास्तेषु आनन्ददायिनिधुवनव्यापारेषु अक्लिष्टः केनापि न मृदितः अम्लान इत्यर्थः, बालः नूतनः तरोः यः पल्लवस्तद्वल्लोभनीयं सुन्दरम् अनुपहतबालतरुपल्लवस्पृहणीयं प्रियायाः शकुन्तलायाः बिम्बाधरं बिम्बसदृशम् अधरं यत् मया सदयमेव पीतं सुकुमारवस्तुनो दयाविषयत्वात् तत्र दन्तक्षतबाधा यथा न स्यात्तथा चुम्बितमित्यर्थः, तथाभूतं तद् यदि त्वं दशसि दन्तक्षतेन पीडयसि तदा त्वां कमलस्य पद्मस्य उदरम् गर्भम् एव बन्धनं कारागृहं तत्र तिष्ठतीति तत्स्थं कारयामि। अथवा कमलं जलं तस्य उदरम् अभ्यन्तरं तदेव बन्धनं तत्र तिष्ठतीति तत्स्थम्, अनेन स्वस्य चन्द्रवंशीयत्वं तेन कमलानामनुन्मीलितत्वं तेन च तद्गर्भे एव भ्रमरस्थितिरिति ध्वन्यते।

अत्र प्रतिनायकव्यवहारसमारोपात् समासोक्तिः, कमलोदरबन्धनस्य स्वाभाविकस्यापि स्वप्रयोजनविषयाध्यवसायित्वोक्तेरतिशयोक्तिश्च, कमलोदर इत्यत्र रूपकम्, अत्रैव जलरूपार्थकरणे श्लेषोऽपि।

विदूषकः—भो ! एव्वं तिक्खणदण्डस्स किं ण भाइस्सदि। ( प्रदस्य। आत्मगतम्। ) एसो दाव उम्मत्तो। अहं पि एदस्स सङ्गेण ईदिसवण्णो विअ संवुत्तो। ( प्रकाश । ) भोः चित्तं क्खु एदं।*

राजा—कथं चित्रम् ?

सानुमती—अहं पि दाणिं अवगदत्था, किं उण जहालिहिदाणुभावी एसो। †

राजा—वयस्य ! किमिदमनुष्ठितं पौरोभाग्यम्।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥२३॥

( इति बाष्पं विसृजति। )

सानुमती—पुव्वावरविरोही अपुव्वो एसो विरहमग्गो। ‡

राजा—वयस्य ! कथमेवमविश्रान्तदुःखमनुभवामि।

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २४ ॥

---

* भो ! एवं तीक्ष्णदण्डस्य किं न भेष्यति। एष तावदुन्मत्तः। अहमप्येतस्य सङ्गेनेदृशवर्ण इव संवृत्तः। भोः, चित्रं खल्वेतत्।

† अहमपीदानीमवगतार्था, किं पुनर्यथालिखितानुभाव्येषः।

‡ पूर्वापरविरोध्यपूर्व एष विरहमार्गः।

---

(२३) दर्शनेति, तन्मयेन शकुन्तलामयेन हृदयेन मनसा साक्षाद् इव प्रत्यक्षम् इव दर्शनसुखं दर्शनानन्दम् अनुभवतः मे स्मृतिकारिणा नेयं शकुन्तला अपि तु चित्रमिदमिति स्मरणं कारितवता त्वया पुनरपि कान्ता प्रिया चित्रीकृता अचित्ररूपा चित्ररूपाकृतेति चित्रीकृता।

अत्र "राजा—इत्यारभ्य, अकारणपरित्याग—इत्येदन्तेन चित्रं नाम सन्ध्यन्तराङ्गमुपक्षिप्तं भवति, तल्लक्षणं यथा—"चित्रं स्वाकारस्य विलेखनम्।" इति। आर्या जातिः।

(२४) प्रजागरादिति, प्रजागरात् प्रकर्षेण निद्राभावात् तस्याः कान्तायाः स्वप्ने निद्रावस्थायां समागमः सङ्गमः खिलीभूतः निरुद्धः, "एतेन शकुन्तलायाः स्मृतेः सततं जागरूकत्वात् प्रतिरात्रमस्य निद्राव्याघातो ध्वन्यते" बाष्पस्तु नेत्रजलं पुनः

सानुमती—सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए। ❀

(प्रविश्य।)

चतुरिका—जेदु जेदु भट्टा। वट्टिआकरण्डअं गेण्हिअ इदोमुहं पत्थिद ह्मि। †

राजा—ततः किम्?

चतुरिका—सो मे हत्थादो अन्तरा तरलिआदुदीआए देवीए वसुमदीए अहं एव्व अज्जउत्तस्स उवणइस्सं त्ति सबलक्कारं गहीदो। ‡

विदूषकः—दिट्ठिआ तुमं मुक्का। ×

चतुरिका—जाव देवीए विडवलग्गं उत्तरीअं तरलिआ मोचेदि ताव मए णिव्वाहिदो अत्ता। +

राजा—वयस्य! उपस्थिता देवी बहुमानगर्विता च। भवानिमां प्रतिकृतिं रक्षतु।

विदूषकः—अत्ताणं त्ति भणाहि। (चित्रफलकमादायोत्थाय च।) जइ भवं अन्तेउरकालकूडादो मुच्चिस्सदि तदो मं मेहप्पडिच्छन्दे पासादे सद्दावेहि। (इति द्रुतपदं निष्क्रान्तः।) ÷

---

❀ सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः।

† जयतु जयतु भर्ता। वर्तिकाकरण्डकं गृहीत्वेतोमुखं प्रस्थितास्मि।

‡ स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्याहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः।

× दिष्ट्या त्वं मुक्ता।

+ यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा।

÷ आत्मानमिति भण। यदि भवानन्तःपुरकालकूटान्मोक्ष्यते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापय।

---

चित्रगताम् आलेख्यस्थितामपि एनां द्रष्टुं न ददाति, प्रत्यक्षदर्शनं तु दूरापास्तं, चित्रादिनापि मनोविनोदनं दुर्लभमित्यपेरर्थः।

अत्र "अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सदा" इति विश्वनाथवचनात् जागरणबाष्परूपहेतुद्वयेन अनिद्रादर्शनरूपयोः हेतुमतोरभेदप्रतिपादनात् हेतुरलङ्कारः। पथ्यावक्त्रम्।

सानुमती—अण्णसंकन्तहिअओ वि पढमसंभावणं अवेक्खदि सिढिलसोहिदो दाणिं एसो ।*

( प्रविश्य पत्रहस्ता । )

प्रतीहारी—जेदु जेदु देवो ।†

राजा—वेत्रवति ! न खल्वन्तरा दृष्टा त्वया देवी ?

प्रतीहारी—अह इं । पत्ताहत्थं मं देक्खिअ पडिणिउत्ता ।‡

राजा—कार्यज्ञा कार्योपरोधं मे परिहरति ।

प्रतहारी—देव ! अमच्चो विण्णवेदि । अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं अवेक्खिदं तं देवो पत्तारूढं पच्चक्खीकरेदु त्ति । +

राजा—इतः पत्रिकां दर्शय ।

( प्रतिहार्युपनयति । )

राजा—( अनुवाच्य । ) कथम् । समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्यार्थसंचय इत्येतदमात्येन लिखितम् । कष्टं खल्वनपत्यता । वेत्रवति ! बहुधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात् ।

प्रतीहारी—देव ! दाणिं एव्व साकेदउरस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।×

राजा—स खलु गर्भः पित्र्यं रिक्थमर्हति । गच्छ, एवममात्यं ब्रूहि ।

प्रतीहारी—जं देवो आणवेदि । (इति प्रस्थिता ।) ÷

राजा—एहि तावत् ।

---

* अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते शिथिलसौहार्द इदानीमेषः ।

† जयतु जयतु देवः ।

‡ अथ किम् । पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता ।

+ देव ! अमात्यो विज्ञापयति । अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितं तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति ।

× देव ! इदानीमेव साकेतपुरस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते ।

÷ यद्देव आज्ञापयति ।

प्रतीहारी---इअह्मि।❀

राजा---किमनेन संततिरस्ति नास्तीति।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥२५॥

प्रतिहारी---एव्वं णाम घोसइदव्वं। (निष्क्रम्य प्रविश्य।) देव! काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणम्।†

राजा---(दीर्घमुष्णं च निःश्वस्य।) एवं भोः संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति। समाप्यन्ते पुरुवंशश्रीरकाल इवोप्तबीजा भूरेवंवृत्ता।

प्रतीहारी---पडिहदं अमङ्गलम्।‡

राजा---धिङ्मामुपस्थितश्रेयोवमानिनम्।

सानुमती---असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा।+

राजा---

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा।

---

❀ इयमस्मि।

† एवं नाम घोषयितव्यम्। देव! काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम्।

‡ प्रतिहतममङ्गलम्।

+ असंशयं, सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा।

---

(२५) येनेति, प्रजाः जनाः, न त्वेका श्रेष्ठिभार्य्यैव अपितु सर्वाः प्रजा इत्यर्थः, येन येन स्निग्धेन स्नेहकारिणा स्वबन्धुना पितृभ्रातृपुत्रादिना वियुज्यन्ते जन्ममरणादीनामशाश्वतिकत्वात् कालवशाद् वियुक्ता भवन्ति तासां स्वबन्धुवियुक्तानां प्रजानां दुष्यन्तः पापाद् ऋते पापं विना स स बन्धुः, यस्य शिशोः पिता नास्ति तस्य पिता, यस्य पुत्रो न वर्तते तस्य पुत्रः, यस्य भ्राता नास्ति तस्य भ्रातेति घुष्यताम् उच्चैः प्रख्याप्यताम्, पटहवाद्यपुरःसरं नगरे समन्तात् प्रकाश्यतामित्यर्थः। यस्याः पतिर्नास्ति तस्याः पतिर्न भवामि, परकीयायाः स्वामित्वे पापोदयादिति पापादृत इत्यस्याशयः। पथ्यावक्त्रं वृत्तम्।

(२६) संरोपित इति, काले उचितावसरे उप्तानि निहितानि बीजानि यस्यां सा, अतएव महते विशिष्टाय फलाय फलोदयाय कल्पिष्यमाणा सम्पत्स्यमाना

कल्पिष्यमाणा महते फलाय
वसुंधरा काल इवोप्तबीजा ॥ २६ ॥

सानुमती—अपरिच्छिण्णा दाणिं दे संददी भविस्सदि ।*

चतुरिका—( जनान्तिकम् । ) अए ! इमिणा सत्थवाहवुत्तन्तेण द्विउणुव्वेओ भट्टा । णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माढव्वं गेण्हिअ आअच्छामि ।†

प्रतीहारी—सुट्ठु तुए भणिदं । ( इति निष्क्रान्ता । )‡

राजा—अहो ! दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः—

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २७ ॥

( इति मोहमुपगतः )

---

* अपरिच्छिन्नेदानीं ते संततिर्भविष्यति ।

† अयि ! अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माधव्यं गृहीत्वागच्छामि ।

‡ सुष्ठु त्वया भणितम् ।

---

वसुन्धरा इव, मया धर्माधर्मविवेकवता सदा सावधानेन आत्मनि स्वस्मिन् संरोपिते गर्भरूपेण सम्प्रवेशितेऽपि, तथाच—"आत्मा वै जायते पुत्रः, पतिर्जायां सम्प्रविश्य गर्भो भूत्वेह जायते, अङ्गादङ्गात् सम्भवति हृदयादभिजायते । आत्मा वै पुत्रनामासि स जीव शरदः शतम् ।" इत्यादिवचनात् । कुलप्रतिष्ठा वंशप्रतिष्ठाकारणभूता धर्मपत्नी वेदोदितेन विधानेन परिणीता शकुन्तला त्यक्ता अवधीरिता नाम इति सम्भावनायाम् ।

अत्र काले उप्तबीजा अतएव फलाय कल्पिष्यमाणेति हेतुहेतुमद्भावाद् काव्यलिङ्गमलङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ।

(२७) अस्मादिति, अस्मात् दुष्यन्तात् परं देहावसानानन्तरं नः अस्माकं कुले वंशे श्रुतिम् अनतिक्रम्येति यथाश्रुति वेदानतिक्रमेण संभृतानि अनल्पोपकरणयुक्तानि निवपनानि पितृदानानि श्राद्धादीनीत्यर्थः, कः नियच्छति ददाति, दास्यतीत्यर्थः, "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट्, इति हेतोः पितरः,

सानुमती—हद्धी हद्धी, सदि क्खु दीवे ववधाणदोसेण एसो अन्धआरदोसं अणुहोदि । अहं दाणिं एव्व णिव्वुदं करेमि । अहवा सुदं मए सउन्दलं समस्सासअन्तीए महेन्दजणणीए मुहादो जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्सन्ति जह अइरेण धम्मपदिणिं भट्टा अहिणन्दिस्सदि त्ति । ता ण जुत्तं कालं पडिपालिदुं । जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि । * ( इत्युद्भ्रान्तकेन निष्क्रान्ता । )

राजा—( शोकनाटितकेन )

आमूलशुद्धसन्तति कुलमेतत् पौरवं प्रजावन्ध्ये ।
मय्यस्तमितमनार्य्ये देश इव सरस्वती स्रोतः ॥२८॥
(इति मोहमुपगतः)

चतुरिका—( ससंभ्रममवलोक्य । ) समस्ससदु समस्ससदु भट्टा । †

---

* हा धिक् हा धिक् । सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारदोषमनुभवति । अहमिदानीमेव निर्वृतं करोमि । अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद्यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाऽचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति । तन्न युक्तं कालं प्रतिपालयितुम् । यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि ।

† समाश्वसितु समाश्वसितु भर्ता ।

---

प्रसूत्या विकलः प्रसूतिविकलस्तेन अपत्यरहितेन मया प्रसिक्तं दत्तम् उदकं जलं धौतम् अश्रु येन तच्च तच्छेपं चेति तथाभूतं पिबन्ति, अनपत्यतया मत्परं तर्पणजलं दुर्लभं मत्वा पितरः मद्दत्तेनैव जलेन मनःसन्तापकरं शोकजनितम् अश्रु प्रमार्ज्य ततोऽवशिष्टं पास्यन्तीत्यर्थः ।

अत्र वाक्यार्थहेतुकं काव्यलिङ्गम्, उत्प्रेक्षा च । वसन्ततिलकं वृत्तम् ।

(२८) आमूलेति, आमूलात् मूलपुरुषात् चन्द्रमसः, पक्षे प्रथमाविर्भावसमयाद् आरभ्य शुद्धा निरवद्या पुंसवनादिसंस्कारपवित्रेत्यर्थः, पक्षे परिपूता सन्ततिः पुत्रपौत्रपरम्परा पक्षे धारा यस्य तथाभूतम् । "सन्ततिस्तु तनये दुहितर्यपि । परम्पराभवे पङ्क्तौ गोत्रविस्तारयोरपि ॥" इति हैमः, एतत् पुरोः इदं पौरवं पुरुसम्बन्धिकुलं पक्षे प्रभूतं "प्रभूतं पुरु भूयिष्ठम् ।" इत्यमरः, सरस्वत्याः सरस्वतीनद्याः स्रोतः प्रवाहः प्रजावन्ध्ये अपत्यरहिते पक्षे जनरहिते अनार्य्ये नीचे पक्षे म्लेच्छजनाध्युषिते देशे इव मयि अस्तमितं विनष्टं पक्षे शोपतां गतम् । अत्र पौरवादिश्लिष्टपदोपादानाच्छ्लेषसङ्कीर्णोपमानोपमेयगतसादृश्यनिबन्धना श्रौती पूर्णोपमा । आर्या जातिः ।

१३

( नेपथ्ये । )

अब्रह्मण्णम्, अब्बह्मण्णम् ।॥

राजा—( प्रत्यागतचेतनः कर्णं दत्त्वा । ) अये ! माधव्यस्येवार्तस्वरः ।

चतुरिका—सो णाम माधव्वो तपस्सी पिङ्गलिआमिस्सिआहिं चेडिआहिं चित्तफलअहत्थो पाविदो भवे ।†

राजा—चतुरिके ! गच्छ मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व ।

( इति चेटी निष्क्रान्ता, नेपथ्ये भूयः स एव शब्दः )

राजा—परमार्थतो भितिभिन्नस्वरो ब्राह्मणः । कः कोऽत्र भोः ?

कञ्चुकी—( प्रविश्य ) आज्ञापयतु देवः ।

राजा—निरूप्यतां, किम् एवं माधव्यब्राह्मणः क्रन्दतीति ।

कञ्चुकी—यावद् अवलोकयामि ।

( इति निष्क्रम्य ससम्भ्रमं पुनः प्रविष्टः )

राजा—पार्वतायन ! न खलु किञ्चिदत्याहितम् ?

कञ्चुकी—मैवम् ।

राजा—ततः कुतोऽयं वेपथुः ?

तथाहि—

प्रागेव जरसा कम्पः सविशेषस्तु सम्प्रति ।
तिव्याप्नोतेऽद्य सर्वाङ्गमश्वत्थमिव मारुतः ॥ २९ ॥

कञ्चुकी—परित्रायतां सुहृदं महाराजः ।

राजा—कस्मात् परित्रातव्यः ?

कञ्चुकी—महतः कृच्छ्रात् ।

राजा—अये ! भिन्नार्थम् अभिधीयताम् ।

---

॥ अब्रह्मण्यं अब्रह्मण्यम् ।

† स नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभिः चेटिकाभिः चित्रफलकहस्तः प्रापितो भवेत् ।

---

(२९) प्रागिति, कम्पः शरीरकम्पः जरसा वार्द्धक्येन प्रागेव प्रथमत एव जातः, सम्प्रति इदानीमस्मिन् त्रासदायके व्यापारे तु सविशेषः अत्यधिकः सन्, मारुतः वायुः अश्वत्थम् इव अश्वत्थवृक्षम् इव अद्य ते तव सर्वाङ्गं सकलं शरीरसन्धिबन्धनस्थानं व्याप्नोति । उपमालङ्कारः, पथ्यावक्त्रं वृत्तम् ।

कञ्चुकी—योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम—

राजा—किं तत्र ?

कञ्चुकी—

तस्याग्रभागाद् गृहनीलकण्ठ—
रनेकविश्रामविलङ्घ्यशृङ्गात् ।
सखा प्रकाशेतरमूर्तिना ते
केनापि सत्त्वेन निगृह्य नीतः ॥ ३० ॥

राजा—( सत्वरम् उत्थाय । ) आः ममापि सत्त्वैरभिभूयन्ते गृहाः । अथवा बहुप्रत्यवायं नृपत्वम् ।

अहन्यहन्यात्मन एव ताव-
ज्ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतः कस्य पुनः प्रभुत्वम् ? ॥ ३१ ॥

( नेपथ्ये । )

भो वअस्स ! अविधावेहि अविधावेहि ।*

राजा—( गतिभेदेन परिक्रामन् । ) सखे ! न भेतव्यं न भेतव्यम् ।

---

* भो वयस्य ! अभिधाव अभिधाव ।

---

(३०) तस्येति, गृहे ये नीलकण्ठा मयूरास्तैः अनेके विश्रामा अनेकविश्रामास्तैर्विलङ्घ्यम् शृङ्गं यस्य तस्मात् बहुविश्रामातिक्रमणीयशिखरात्, मेघच्छन्नो नाम दिगवलोकनप्रासाद एतावान् उन्नतो वर्तते यत् मध्ये मध्ये बहुत्र विश्रम्यैव उल्लङ्घयितुं स शक्यत इति भावः, तस्य मेघच्छन्नप्रासादस्य अग्रभागाद् अग्रप्रदेशात् निगृह्य आक्रम्य प्रकाशेतरा दुर्लक्ष्या मूर्तिर्यस्य तथोक्तेन तिरस्करिणीविद्यया अन्तरितशरीरेण, केनापि अविदितेन सत्त्वेन पिशाचेन ते भवतः सखा सुहृत् नीतः अन्यत् स्थानं प्रापितः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ।

(३१) अहनीति, अहन्यहनि प्रत्यहम् आत्मनः स्वस्य एव प्रमादेन अनवधानतया स्खलितम् अयथाचरणं तावत् साकल्येन ज्ञातुं न शक्यं, प्रजासु ग्रामवासिजनेषु कः जनः केन पथा मार्गेण प्रयाति गच्छतीति अशेषतः सामस्त्येन वेदितुं पुनः "कस्य राज्ञः" शक्तिः सामर्थ्यम् अस्ति । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ।

( नेपथ्ये । )

( पुनस्तदेव पठित्वा । ) भो ! कहं न भाइस्सं ? एसो मं को वि पच्चामोडिअ सिरोहरं इक्खुं विअ भग्गत्थि करिदुं इच्छदि । *

राजा—( सदृष्टिक्षेपम् । ) धनुस्तावत् ।

( प्रविश्य शार्ङ्गहस्ता । )

यवनी—भट्टा ! एदं हत्थावावसहिदं सरासणं । †

( राजा सशरं धनुरादत्ते । )

( नेपथ्ये । )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥३२॥

राजा—(सरोषम् ।) कथं मामेवोद्दिशति । आस्तिष्ठ तिष्ठ कुणपाशन ! त्वमिदानीं न भविष्यसि । ( शार्ङ्गमारोप्य । ) वेत्रवति ! सोपानमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो । ‡

( सर्वे सत्वरमुपसर्पन्ति । )

राजा—( समन्ताद्विलोक्य । ) अये ! शून्यं खल्विदम् ।

---

* कथं न भेष्यामि । एष मां कोऽपि प्रत्यामोड्य शिरोधरामिक्षुमिव भग्नास्थि कर्तुम् इच्छति ।

† भर्तः ! एतद्धस्तावापसहितं शरासनम् ।

‡ इत इतो देवः ।

---

(३२) एष इति , एषोऽहम्, अभिनवं नवीनं सद्यो निर्गलितमित्यर्थः, यत् कण्ठस्य गलस्य शोणितं रुधिरं तस्य अर्थः प्रयोजनं विद्यतेऽस्यासौ तथाभूतः शार्दूलः सिंहः चेष्टमानम् आत्मसंरक्षणाय पलायितुं प्रयतमानं पशुमिव मृगमिव त्वां हन्मि व्यापादयामि आर्तानां पीडितानां भयं भीतिम् अपनेतुं दूरीकर्तुम् आत्तं धनुर्येन सः आत्तधन्वा दुष्यन्त इदानीं तव शरणं रक्षकः भवतु । उपमालङ्कारः । प्रहर्षिणीवृत्तम् ।

( नेपथ्ये । )

भो ! परित्ताआहि परित्ताआहि अहं अत्तभवन्तं पेक्खामि। तुमं मं ण पेक्खसि। बिडालग्गहीदो मूसओ विअ णिरासो म्हि जीविदे संवित्तो ।*

राजा—भोस्तिरस्करिणीगर्वित ! किमिदानीं मदीयं शस्त्रं अपि त्वां न द्रक्ष्यति । स्थिरो भव, मा च ते वयस्यसम्पर्काद्विश्लेषोऽभूत्, एष तमिषुं संदधे—

योे हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वजयत्यपः ॥३३॥

( इति शस्त्रं संधत्ते । )

( ततः प्रविशति विदूषकमुत्सृज्य मातलिः । )

मातलिः—आयुष्मन् !

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥३४॥

---

* भोः परित्रायस्व परित्रायस्व, अहमत्रभवन्तं पश्यामि। त्वं मां न पश्यसि। बिडालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः ।

---

(३३) य इति, यः शरः वध्यं वधयोग्यं त्वां भवन्तं हनिष्यति मारयिष्यति तथा रक्षितुं योग्यं रक्ष्यं रक्षणार्हं द्विजं ब्राह्मणं रक्षिष्यति, हि तथाहि—हंसः, क्षीरं दुग्धम् आदत्ते गृह्णाति तेन दुग्धेन मिश्राः मिलिताः अपः जलानि वर्जयति परित्यजति ।

अत्र दृष्टान्तालङ्कारः, यदुक्तं दर्पणे "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति, पथ्यावक्त्रं वृत्तम् ।

(३४) कृता इति·हरिणा देवेन्द्रेण असुरा विविधमायागर्विता देवशत्रवो दैत्याः तव लोकोत्तरप्रभावस्य भवतः शरव्यं लक्ष्यं कृताः, लक्ष्यत्वेन स्थापिताः, अत इदं शरासनं धनुः तेषु असुरेषु विकृष्यताम् आकृष्यतां, सुहृज्जने बन्धुवर्गे सतां सत्पुरुषाणां प्रसादेन प्रसन्नतया सौम्यानि सुभगानि चक्षूंषि पतन्ति, महात्मानो बन्धुवर्गे स्नेहपूर्णां दृष्टिं निक्षिपन्ति; दारुणाः मर्मभेदिनः शराः न निक्षिपन्तीति शेषः ।

राजा—( अस्त्रमुपसंहरन् । ) अये ! मातलिः!!, स्वागतं महेन्द्रसारथे !

( प्रविश्य । )

विदूषकः—भो मणस्सिं ! अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणन्दीअदि ।

मातलिः—( सस्मितम् । ) आयुष्मन् ! श्रूयतां यदस्मि हरिणा भवत्सकाशं प्रेषितः ।

राजा—अवहितोऽस्मि ।

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

राजा—अस्ति । श्रुतपूर्वं मया नारदात् ।

मातलिः—

सख्युस्ते स किल शतक्रतोरवध्य-
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥३५॥

स भवानात्तशस्त्र एव इदानीं तमैन्द्ररथमारुह्य विजयाय प्रतिष्ठताम् ।

राजा—अनुगृहीतोऽहमनया मघवतः सम्भावनया । अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ।

मातलिः—तदपि कथ्यते । किंचिन्निमित्तादपि मनःसंतापादायुष्मान्मया विकृतो दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ।

※ भो मनस्विन् ! अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते ।

अत्र प्रथमपादवाक्यं प्रति द्वितीयपादवाक्यस्य हेतुत्वात् काव्यलिङ्गम् । वंशस्थविलं वृत्तम् ।

(३५) सख्युरिति, सः दानवगणः ते सख्युः प्राणसमस्य "समप्राणः सखा मतः ।" इत्यमरः, शतं क्रतवो यस्य स तस्य इन्द्रस्य अवध्यः हन्तुम् अशक्यः किल इति निश्चये, अत एव रणशिरसि संग्रामाङ्गणे तस्य दानवगणस्य निहन्ता नाशकः स्मृतोऽसि, शतक्रतुनेतिशेषः, तथाहि—यत् निशि भवं नैशं निशासम्बन्धि तिमिरं तमः सप्त सप्तयस्तुरङ्गा यस्यासौ सप्तसप्तिः सूर्यः उच्छेत्तुं विनाशयितुं न प्रभवति न शक्नोति, तत् नैशं तिमिरं चन्द्रः अपाकरोति विनाशयति । अत्र दृष्टान्तालङ्कारः । प्रहर्षिणीवृत्तम् ।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः ॥३६॥

राजा—( जनान्तिकम् ) युक्तमनुष्ठितं भवद्भिः, वयस्य ! अनतिक्रमणीय दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः ॥३७॥ इति ।

विदूषकः—जं भवं आणवेदि । ( इति निष्क्रान्तः । )❋

मातलिः—आयुष्मान्रथमारोहतु ।

( राजा रथाधिरोहणं नाटयति । )

( इति निष्क्रान्ताः सर्वे । )

षष्ठोऽङ्कः ।

---

❋ यद्भवानाज्ञापयति ।

---

(३६) ज्वलतीति, अग्निः चलितं चालनं कृतम् इन्धनं काष्ठं यस्य तथाभूतः सन् ज्वलति प्रदीप्तो भवति, पन्नगः सर्पः विप्रकृतः कोपितः सन् फणां कुरुते प्रसारयतीत्यर्थः, जनः तेजस्वी पुरुषः प्रायः प्रायेण क्षोभात् संक्षोभात् विप्रकारम् आसाद्येत्यर्थः, स्वं निजं महिमानं प्रभावं, प्रतिपद्यते प्राप्नोति प्रकाशयतीत्यर्थः ।

अत्र भवानिति विशेषेऽभिधानीये जन इति सामान्येनाभिधानादप्रस्तुतप्रशंसा। आर्य्या जातिः ।

(३७) त्वन्मतिरिति, प्राक् प्रजापरिपालने ममेदं धनुस्त्वन्मतिश्चेत्युभयमपि व्यापृतम् आसीत् इदानीं पुनः केवला तव मतिः प्रजाः तावत् परिपालयतु यावन्मदागमनं तावद् प्रजापालनैकपरो भवेत्यर्थः, अनेनात्मन उभयायत्तसिद्धिः प्रकटिता भवति, इदं ज्याम् अधिगतम् अधिज्यं सज्यं धनुः अन्यस्मिन् कर्मणि असुरमारणरूपे कार्य्ये व्यापृतं व्यापृतम् । पथ्यावक्त्रं वृत्तम् ।

इत्यभिज्ञानशाकुन्तले सुबोधिन्याख्यायां व्याख्यायां षष्ठोऽङ्कः ।

# सप्तमोऽङ्कः ।

( ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च । )

राजा—मातले! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

मातलिः—(सस्मितम् ।) आयुष्मन्! उभयमप्यपरितोषं समर्थये । यतः—

उपकृत्य हरेस्तथा भवान् लघु सत्कारमवेक्ष्य मन्यते ।
गणयत्यवदानसम्मितां भवतः सोऽपि न सत्क्रियामिमाम् ॥ १ ॥

राजा—मातले! मा मैवम् । स खलु मनोरथानामप्यभूमिर्यो विसर्जनावसरे सत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य—

अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥२॥

---

(१) इन्द्रदुष्यन्तयोस्तमेवासन्तोषं दर्शयति, उपकृत्येति—भवान् त्वं दुष्यन्त इति भावः, हरेरिन्द्रस्य यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः, तथा तेन प्रकारेण, उपकृत्य दानवजयरूपमुपकारं कृत्वा, सत्कारमादरं, इन्द्रकृतमिति शेषः, अवेक्ष्यावलोक्य, लघु स्वल्पं, आत्मकृतमुपकारमिति भावः, मन्यते संभावयति । सोऽपीन्द्रोऽपि, भवतस्तव, इमां सत्क्रियां रिपुहननद्वारा मनःपरितोषरूपां, अवदानसम्मितां कृतकर्मसदृशीं न गणयति न मन्यते । इह सत्काररूपे हेतौ सत्यपि गणनाभावाद् विशेषोक्तिरलङ्कारः । तथा गणनाभावकारणेऽवर्तमानेऽपि तत्कार्यस्य संभावनाद् विभावना च, इत्येतयोः सन्देहसङ्करः । वैतालीयं वृत्तम् ।

(२) अन्तर्गतेति—अन्तर्गता स्वान्तःस्थिता प्रार्थना मालाजिघृक्षारूपा याच्ञा यस्य तथोक्तम्, न तामनभिलपन्तमिति भावः, तत्रापि, अन्तिकस्थं (निकटवर्तिनं) समीपोपविष्टं, न तु विप्रकृष्टस्थं, जयन्तमात्मजनुषं "जयन्तः पाकशासनिः" इति कोशः । उद्वीक्ष्यावलोक्य, तच्चित्तवृत्तिं ज्ञात्वापीत्यर्थः, कृतं विहितं स्मितं मन्दहास्यं येन तथोक्तेन सता, स्मितलक्षणं यथा दर्पणे—ईषद्विकासि नयनं स्मितं स्यात्स्पन्दिताधरम्" इति । एतेन स्वसुतादपि दुष्यन्ते हरेर्महती प्रीतिर्ध्वनिता । हरिणेन्द्रेण, आमृष्टश्च्यावितः, दूरीकृत इत्यर्थः, वक्षस उरसः हरिचन्दन-

मातलिः—किमिव नायुष्मानमरेश्वरादर्हति । पश्य—

सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः । पश्य—

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किंवाभविष्यदरुणस्तमसां वधाय
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

---

सेवाङ्कश्चिन्हं लाञ्छनमिति भावः, यया तथोक्ता, मन्दारमाला सुरतरुसुमनःस्त्रक्, "पञ्चैते देवतरवो मन्दारः पारिजातकः, सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इत्यमरः। पिनद्धा स्वयं परिधापिता, मम कण्ठ इतिशेषः। सुतमप्यवधीर्य मदादरं कृतमिति भावः।" इह गौरवातिशयवर्णनादुदात्तालङ्कारः।

(३) दुष्यन्तस्य समस्तादानार्हत्वे हेतुमाह, सुखपरस्येति–सुखं परं प्रधानं यस्य तथोक्तस्य, अतिसुखासङ्गिन इत्यर्थः, हरेरिन्द्रस्य त्रिदिवं त्रयो ब्रह्मविष्णुमहेश्वरा दीव्यन्त्यत्रेति त्रिदिवं स्वर्गः, अधुना सम्प्रति, नतान्यनुन्नतानि स्वल्पानीत्यर्थः, पर्वाणि ग्रन्थयो येषां ते तादृशास्तैः, नखपक्षे, नतानि मग्नानि लीनानीति यावत्, हिरण्यकशिपोर्जठर इतिशेषः, पर्वाण्यङ्गुलिग्रन्थयो येषां ते तथोक्तास्तैः, तवाप्रतिमपौरुषशालिन इति भावः, शरैर्बाणैः। तथा पुरा पूर्वं पुरुषकेसरिणः, पुरुषः केसरीव तस्य नरसिंहावतारिणो विष्णोरिति यावत्, नखैर्नखरैः, इत्येतदुभयैः, दानवा असुराः कण्टका इव दानवकण्टकाः, उद्धृता निष्काशिता दानवकण्टका यस्मात् तत्तादृशं कृतं, आतङ्कशून्यं कृतमित्यर्थः।

(४) तमेव शतक्रतोर्महिमानं समर्थयते, सिध्यन्तीति। नियोज्याः सेवकाः, महत्स्वप्यतिकष्टसाध्येष्वपीत्यर्थः, कर्मसु कार्येषु यत् सिध्यन्ति कृतकार्या भवन्ति, तत् ईशितुं शीलमेषामितीश्वरास्तेषां प्रभूणां, सम्भावनाया गौरवस्य गुणस्तं, अर्थात्प्रतापमाहात्म्यं, अवेहि जानीहि। कार्यसिद्धौ प्रभोरेव गुणो हेतुरित्यर्थः। अत्र दृष्टान्तमाह चेद्यदि, सहस्रं किरणा यस्य तथोक्तः सूर्यः, तमरुणं, धुर्यग्रे नाकरिष्यत्, तदेतिशेषः, अरुणः सूर्यसारथिः, "सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः" इत्यमरः, तमसामन्धकाराणां वधाय दूरीकरणाय, वधशब्दोऽत्र दूरी-

मातलिः—सदृशमेवैतत्। (स्तोकमन्तरमतीत्य।) आयुष्मन्! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः।

विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु।
विचिन्त्य गीतिक्षममर्थबन्धं दिवौकसस्त्वच्चरितं लिखन्ति॥ ५॥

राजा—मातले! असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितोऽयं स्वर्गमार्गो मया तत् कतरस्मिन्मरुतां पथि वर्तामहे।

मातलिः—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति चक्रविभक्तरश्मिः।
तस्य व्यपेतरजसः प्रवहस्य वायो-
र्मार्गो द्वितीयहरिविक्रमपूत एषः॥ ६॥

---

करणवाची, सचेतनस्यैव वधसम्भवात् तमसश्च निश्चेतनत्वात्। किं प्राभविष्यत् प्रभुरभविष्यत्, समर्थोऽभविष्यदित्यर्थः। इह इन्द्रदुष्यन्तयोः सूर्यारुणयोश्चान्योन्यमवैधर्म्येण बिम्बप्रतिबिम्बभावाद् दृष्टान्तालङ्कारः। तथा "इन्द्रदुष्यन्तौ" इति विशेषे वक्तव्ये, ईश्वरनियोज्यरूपसामान्येन कथनादप्रस्तुतप्रशंसा च। तयोश्च नैरपेक्ष्येण संसृष्टिः। वसन्ततिलकं वृत्तम्।

(५) तदेव दर्शयति, विच्छित्तिशेषैरिति—अमी दुर्जयदानववित्रस्ता इत्यर्थः, द्यौः ओकः स्थानं निवासभूमिरिति यावत्, येषां ते, दिवौकसः, गीतिक्षमं गानयोग्यं सुकुमारमिति भावः, अर्थो दानवविजयादिकथा बध्यतेऽनेनेत्यर्थबन्धोऽभिधेयरचना तं विचिन्त्य सम्यग् विचार्य, तत्र चरितं गीतिनिबद्धं कृत्वेति भावः। कल्पलतांशुकेषु कल्पतरुकिसलयनिर्मितवसनेषु, सुराणां देवानां या सुन्दर्यो लावण्यवत्यो ललनास्तासां, विच्छित्तिशेषैरङ्गरागावशेषैः, "विच्छित्तिरङ्गरागेऽपि हारविच्छेदयोरपि" इति कोशः। वर्णैः रञ्जनद्रव्यैः, तव चरितं त्वदीयपूर्ववृत्तं लिखन्ति चित्रितं कुर्वन्ति। इह दुष्यन्तचरितस्यानन्यसाधारण सौभाग्यवर्णनादुदात्तालङ्कारः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः।

(६) भूवायोरुपरिस्थितस्य प्रवहवायोः पन्थानं वर्णयति, त्रिस्रोतसमिति। यः प्रवहवायुः, गगनेऽन्तरीक्षे, प्रतिष्ठाऽवस्थितिर्यस्यास्तां, त्रीणि स्रोतांसि प्रवाहाः स्वर्गभूपातालस्थितत्वाद्यस्यास्तां त्रिपथगां, भागीरथीमिति यावत्। वहति बिभर्ति। तथा चक्रेणावर्तनेन, विभक्ता असंकीर्णा रश्मयः किरणा यत्र तथोक्तः, सन्, ज्योतींषि सूर्यादिग्रहानश्विन्यादिनक्षत्रादीनि च, वर्तयति चालयति। तस्य, व्यपेतं विगतं रजो

राजा—मातले! अतः खलु सबाह्यकरणो ममान्तरात्मा प्रसीदति। (रथाङ्गमवलोक्य।) मेघपदवीमवतीर्णौ स्वः।

मातलिः—कथमवगम्यते।

राजा—

अयमगविवरेभ्यश्चातकैर्निष्पतद्भि-
हरिभिरचिरभासां तेजसा चानुलिप्तैः।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः॥ ७॥

---

धूलिर्यस्मात्तथाभूतस्य प्रवहस्य प्रवहाख्यस्य वायोर्मरुतः, द्वितीयो यो हरेर्विष्णो- र्विक्रमः पादविन्यासस्तेन पूतः पावनीकृतः, एष मार्गः पन्था; पुरा किल भगवान् वामनरूपो हरिः स्वर्गाधिपत्यं कुर्वते बलये प्रतिकर्तुं त्रिपादप्रमाणं भुवं ययाचे, अङ्गीकृते च तस्मिन् प्रथमपादेन भुवं, द्वितीयेनान्तरीक्षं तृतीयेन तं पातालं निनाये- ति पौराणिकी कथाऽत्रानुसन्धेया। इहाङ्गभूतमहापुरुषचरितवर्णनादुदात्तालङ्कारः। वसन्ततिलकं वृत्तम्।

(७) मातलेरवगमाय घनसञ्चारमार्गं वर्णयति, शीकरैरिति—शीकरैर्जलकणैः "शीकरोऽम्बुकणाः स्मृताः" इत्यमरः, क्लिन्ना आर्द्रा नेमयश्चक्रान्तभागा यस्य तादृशः, अयमावाभ्यामधिरूढ इत्यर्थः, ते तव रथः नेमीनां जलकणक्लिन्नत्वाज्जलकणानां मेघादन्यत्र प्रादुर्भावाभावाच्चायं घनसञ्चारमार्गं इति भावः। ननु जलकणक्लिन्ननेमित्वं प्रवहवातमार्गेऽपि गमनकाले मन्दाकिनीपयोबिन्दुभ्योऽपि सम्भवति, कथमनेनैव चिन्हेन घनसञ्चारमार्गोऽनुमेय इत्याह, अगेति। न गच्छन्तीत्यगाः पर्वताः, यद्यपि गतिशून्यपदार्थमात्रवाचकत्वेऽप्यगपदस्य प्रसङ्गबलात्पर्वतवाचकत्वमिति ज्ञेयम्। तथा च, अगानां पर्वतानां विवराणि गह्वराणि तेभ्यो निष्पतद्भिर्बहिर्गच्छद्भिः, चातकैर्घनपानीयपायिभिर्विहगविशेषैः, अयं भावः "चातका हि जलधरपानलोलुपा जलधरसमये सञ्चरन्तीति प्रसिद्धिः। घनाभावे तत्र तेषां गमनस्याप्यभावादितिनिश्चितोऽयं घनसञ्चारमार्गं इति। ननु विहगानां गगनगमनस्य नैसर्गिकत्वात्कथमेते चातका घनसञ्चारपदवीं सूचयेयुरित्याशङ्क्यान्यत्तत्र कारणं दर्शयति, हरिभिरिति—हरिभिरश्वैः, रथयोजितैरितिशेषः, अचिरभासां सौदामिनीनां, तेजसा कान्त्या, अनुलिप्तैश्च सद्भिः, इदं हृदयम्—विद्युत्स्फुरणानां तत्कान्त्याऽश्वानामनुलेपनानां च घनादन्यत्रासंभवान्नूनमियं घनसञ्चारपदवीति। वारि जलं गर्भे मध्ये येषां तादृशान्युदराणि येषां तथोक्तानां,

मातलिः—अथ किम्! क्षणादायुष्मान्स्वाधिभूमौ वर्तिष्यते।

राजा—(अधोऽवलोक्य।) मातले! वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः। तथाहि—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णस्वान्तरलीनतां विजहति स्कन्धोदयात्पादपाः।
सन्धानं तनुभावनष्टसलिलव्यक्त्या व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते॥८॥

---

पयःपूर्णानामित्यर्थः, अतएव घनानां पयोधराणां, उपरि, गतं गतिं, पिशुनयति सूचयति। रथस्य घनमार्गसूचकत्वे चातकादेः कारणतयोपन्यासात्काव्यलिङ्गमलङ्कारः। मालिनीवृत्तम्।

(८) आश्चर्यदर्शनत्वं प्रतिपादयति,—शैलानामिति। उन्मज्जतां प्रकटीभवतां, दूरतयेपत्संलक्ष्यमाणानामित्यर्थः, शैलानां पर्वतानां, शिखराच्छृङ्गात्, मेदिनी वसुन्धरा, अवरोहतीवाधोगच्छतीव प्रथमं विप्रकृष्टतया समस्ता वसुन्धरा निम्नोन्नतांशरहितेवासीत्, इदानीन्तु सामीप्येन शैलादीनां क्रमेण लक्ष्यमाणत्वादधोयातीवेति संलक्ष्यत इतिभावः। दूरतो दृश्यमानस्य वस्तुनो नेत्रसंनिकर्षदौर्बल्यात्समस्ता अवयवा भिन्नतया न संलक्ष्यन्ते। समीपे तु नेत्रसंनिकर्षसामर्थ्यादेकैकशः संलक्ष्यत इत्यनुभवः। पादपा वृक्षाः, स्कन्धानां प्रकाण्डानां, "अस्त्री प्रकाण्डः स्कन्धः स्यादित्यमरः, उदयात् प्रकाशात्, पर्णानां पल्लवानां, अभ्यन्तरेषु गर्भेषु लीनतामेकाकारतयावस्थितिं, विजहति त्यजन्ति। दूरतया प्राक् पृथक् पृथगुपलक्षिताः क्रमशः पल्लवप्रकाण्डादिविभागत इदानीं दृश्यन्त इतिभावः। आपगाः, अपां जलानां समूह आपः सागरस्तं गच्छन्तीत्यापगाः सरितः, तनुभागेष्वल्पपरिसरेषु नष्टस्यागोचरं गतस्य सलिलस्य जलस्य व्यक्त्या प्रकाशेन, सन्धानं संयोगं व्रजन्ति प्राप्नुवन्तीत्यर्थः। प्राङ् नद्यः कृशत्वेन प्रतीयमानतया अदृष्टतोया आसन्, इदानीं सामीप्यात्पुष्कला लक्ष्यन्ता इति भावः। अतः केनापि कौतुकवता जनेनेत्यर्थः, उत्क्षिपतेवोऽपरिप्रक्षेपणंकुर्वतेव, भुवनं जगत्, मेदिनीतियावत् मत्पार्श्वंसमान्तिकं, आनीयत इवेति प्रतीयमानोत्प्रेक्षा। अत्र स्वभाववर्णनात्स्वभावोक्तिरलङ्कारः। किं च प्रथमे चरणे इवशब्दसद्भावात्तथा चतुर्थे "उत्क्षिपतेव"त्यत्रापि तत्सद्भावाद् द्वे वाच्योत्प्रेक्षे। तथा तुरीयचरणवाक्यार्थं प्रति पादत्रयगतवाक्यार्थानां हेतुत्वात्काव्यलिङ्गमलङ्कारः। अन्योन्यनैरपेक्ष्येणस्थितेरेषां संसृष्टिः।

मातलिः—आयुष्मन्! साधु दृष्टम्। ( सबहुमानमवलोक्य । ) अहो! उदाररमणीया पृथिवी ।

राजा—मातले! कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी सांध्य इव मेघपरिघः सानुमानालोक्यते ?

मातलिः—आयुष्मन्! एष खलु हेमकूटो नाम किंपुरुषपर्वतस्तपः-संसिद्धिक्षेत्रम्। पश्य—

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति ॥ ९ ॥

राजा—तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

मातलिः—आयुष्मन्! प्रथमः कल्पः ।

( नाट्येनावतर्णं नाट्यतः । )

राजा—( सविस्मयम् । )

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ १० ॥

---

( ९ ) स्वायम्भुवादिति—स्वयंभवतीति स्वयम्भूर्ब्रह्मा, तस्यापत्यं पुमानिति स्वायम्भुवस्तस्मात् ब्रह्मपुत्रादित्यर्थः, मरीचेस्तन्नामकमुनेर्यः प्रजापतिः कश्यपो बभूव । सुराणां देवानामसुराणां दानवानां च गुरुः पिता, सः कश्यपः, सपत्नीकः सदारः सन्, अस्मिन् पुरतो दृश्यमाने हेमकूट इत्यर्थः, तपस्यति तपोऽनुतिष्ठतीत्यर्थः । अत्र सुरासुरगुरुरित्यनेन नृपतेस्तत्र गमनं, सपत्नीक इत्यनेन च तवापि कान्तासमागमोऽत्र भावीति सूचितम्—

(१०) रथस्यावतरणमवलोक्य सविस्मयं तद्वर्णयति, उपोढेति—अभूतलस्पर्शतया भूमिसम्बन्धाभावतया, अस्पृष्टभूतलतयेति भावः, रथाङ्गानां चक्राणां नेमयः प्रधयः, चक्रान्तभागा इत्यर्थः, उपोढः सञ्जातः शब्दो ध्वनिर्येषां तथोक्ता न, अकृतनिनादा इतिभावः, अत एव रजो धूलिः प्रवर्तमानमुड्डीयमानं, नेमिसंघातसमुद्भूतधूलिरित्यर्थः, न च दृश्यते नैव लोचनगोचरं भवतीति भावः, निर्नास्यु-

मातलिः—एतावानेव शतक्रतोरायुष्मतश्च रथस्य विशेषः ।

राजा—मातले ! कतमस्मिन्प्रदेशे मारीचाश्रमः ।

मातलिः—(हस्तेन दर्शयन् ।) पश्य—

वल्मीकार्धनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः,
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥११॥

राजा—(विलोक्य) नमोऽस्मै कष्टतपसे ।

मातलिः—(संयतप्रग्रहं रथं कृत्वा ।) महाराज ! एतावदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

---

द्धतिरौद्धत्यम्, उच्चावचप्रदेशस्पर्शजनितं चापल्यमित्यर्थः, यस्य तादृशः, तव रथः, अवतीर्णोऽपि न लक्ष्यते, अवतरणमनुमातुमपि न शक्यत इति भावः, इह चतुर्थचरणगतवाक्यार्थं प्रति पादत्रयगतवाक्यार्थस्य हेतुतयोपन्यासात्काव्यलिङ्गमलङ्कारः। अपि च रथावतरणे हेतौ सत्यपि तत्फलानां नेमिशब्दादीनामभावाद् विशेषोक्तिरपि । वंशस्थबिलं वृत्तम् ।

(११) मारीचाश्रमं वर्णयति, वाल्मीकेति—यत्राश्रमे, असौ मुनिरिति शेषः वल्मीकेषु पिपीलिकाकृतमृत्तिकाचयेष्विति भावः, अर्द्धं निमग्ना मूर्तिः शरीरं यस्य तादृशः, अनेन दीर्घकालात्तपोऽनुष्ठानं सूचितम्, उरगत्वक् सर्पनिर्मोक एव ब्रह्मसूत्रान्तरमपरयज्ञोपवीतं यस्य तथोक्तः, कण्ठे कण्ठदेशे जीर्णो जरांगतः परिणत इतियावत्, यो लताप्रतानो व्रततिप्रचयः स वलय इव गलस्थरोमाणीव "वलयः कण्ठरोम्नि स्यात् वलयं कङ्कणेऽपि च" इति कोशः, तेन अत्यर्थं भृशं, अतिशयेनेत्यर्थः, सम्पीडितः सम्यक् क्लेशं गमितः, अंसव्याप्यंसस्थलावलम्बि, शकुन्तानां विहगानां नीडैः कुलायैरावासैरित्यर्थः, निचितं व्याप्तं जटामण्डलं जटाचक्रवालं, बिभ्रदुद्वहन् स्थाणुपक्षे—लक्षणया कण्ठपदस्योपकण्ठपरता, अंसपदस्य स्कन्धपरता तथा जटापदस्य पल्लवादिपरता चावगन्तव्या; तथा च, कण्ठ उपकण्ठे समीप इति यावत्, जीर्णानां वलयेन मण्डलेनात्यर्थं सम्पीडितो वेष्टितः, अंसव्यापि स्कन्धविशालं, शकुन्तनीडनिचितं, जटामण्डलं पल्लवसमूहं बिभ्रद् धारयन्, अत एवाचलो निश्चलः स्थाणुरिव शाखापल्लवादिरहिततरुरिव, अभ्यर्कबिम्बं, अर्कस्य बिम्बो यत्र सार्कबिम्बा पूर्वादिगित्यर्थः, तामभिलक्षीकृत्य स्थितः। इह सार्थकविशेषणबाहुल्यात्परिकरालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

राजा—अहो ! स्वर्गादधिकतरमिदं निर्वृतिस्थानम् । अमृतह्रद-मिवावगाढोऽस्मि ।

मातलिः—(रथं स्थापयित्वा ।) अवतरत्वायुष्मान् ।

राजा—(अवतीर्य ।) मातले ! भवानपि किमिदानीमवतरिष्यति ?

मातलिः—संयन्त्रितो मया रथः । तद् वयमप्यवतरामः (तथा कृत्वा ।) इत आयुष्मन् ! (परिक्रम्य ।) दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ।

राजा—ननु विस्मयादुभयमप्यवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥१२॥

मातलिः—उत्सर्पिणी खलु महतां प्रार्थना । (परिक्रम्य आकाशे ।) अये ! वृद्धशाकल्य ! किमनुतिष्ठति भगवान्मारीचः ? (आकर्ण्य) किंत्रवीषि। दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तदस्यै महर्षिपत्नीगणसहितायै कथयतीति ।

राजा—(कर्णं दत्त्वा ।) अये ! प्रतिपाल्यावसरः खलु प्रस्तावः ।

---

(१२) प्राणानामिति—अन्ये मारीचाश्रमादन्यत्र स्थिता मुनयस्तापसाः, तपोभिस्तपोऽनुष्ठानैः, यत् स्वर्गादिकं स्थानं वाञ्छन्तीच्छन्ति, अमी मारीचाश्रमस्थास्तापसाः, तस्मिन् स्थान इति शेषः, तपस्यन्ति तपः कुर्वन्ति । तथाहि—सन्तो वर्तमानः कल्पवृक्षाः सुरतरुविशेषा यस्मिन् तथोक्ते वने कानने, उचितावश्यकर्तव्या प्राणानां वृत्ति प्राणधारणक्रियानिलेन वातेन, न तु कल्पलतादत्तवस्तुनेति भावः। कल्पवृक्षसान्निध्यस्तदभीष्टफलसिद्धावपि वाताशनेम जीवन्तस्तपश्चरन्तीत्यभिप्रायः । काञ्चनपद्मानां कनककमलानां रेणुभिर्धूलिभिः कपिशे पिङ्गलवर्णे तोये जले पुण्यार्थं धर्मार्थमभिषेकक्रिया स्नानानुष्ठानं न तु भोगार्थं तत्र स्नानक्रियेत्यर्थः रत्नाशिलागृहेषु रत्नोपलनिर्मितभवनेषु, ध्यानं समाधिः, एकतानतयेश्वरचिन्तनमिति भावः । तथा विबुधस्त्रीणां सुरकामिनीनां सन्निधौ समीपे संयम इन्द्रियनिग्रहः । संयमस्तावजनसंचारस्थल एव सुदुष्करस्तत्रापि कामिनीसमीपे, तत्रापि च सकललोकललनाकुलललामभूतां सुरसुन्दरीणां सामीप्ये, इत्यहो महद् विस्मयस्थानमेतदिति भावः । अत्र कल्पवृक्षादीनां कारणानां वर्तमानत्वेऽपि कार्यस्यानुत्पत्त्या विशेषोक्तिर्सालालया । शार्दूलविक्रीडितं वृत्तम् ।

मातलिः—(राजानमवलोक्य ।) अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान्, यावत्त्वामिन्द्रगुरवे निवेदयामि ।

राजा—यथा भवान्मन्यते । (इति स्थितः ।)

मातलिः—आयुष्मन्! साधयाम्यहम् । (इति निष्क्रान्तः ।)

राजा—(निमित्तं सूचयित्वा ।)

मनोरथाय नाशंसे किं बाहो ! स्पन्दसे मुधा
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥१३॥

(नेपथ्ये)

मा क्खु चावलं करेहि । कहं गदो जेव अत्तणो पकिदिं । ❀

राजा—(कर्णं दत्त्वा ।) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । (शब्दानुसारेणावलोक्य । सविस्मयम् ।) अये ! को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं करेणैवावकर्षति ॥१४॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः । )

---

❀ मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् ।

---

(१३) मनोरथायेति–हे बाहो ! भुज ! मुधा वृथा, किं कथं किमर्थमितिभावः, स्पन्दसे स्फुरसि! मुधात्वं कुत इत्याह—मनोरथायेति–मनोरथाय हृदयान्तर्निहितशकुन्तलारूपाभिलषितवस्तुप्राप्तय इत्यर्थः, नाशंसे नाशां करोमि । हि यस्मात्कारणात् पूर्वं प्रागवधीरितमवज्ञातं तिरस्कृतमित्यर्थः, न तु परित्यक्त, श्रेयः कल्याणं, दुःखं यथा भवति तथा परिवर्तते, दुःखरूपेण परिणमतीत्यर्थः । इह सामान्येन विशेषसमर्थनात्तद्रूपोऽर्थान्तरन्यासः । पथ्यावक्त्रं वृत्तम् ।

(१४) अबालसत्वतां दर्शयति अर्द्धेति—मातुर्जनन्या अर्द्धं यथा स्यात्तथा पीतौ स्तनौ कुचौ येन तथोक्तम्, आमर्देन स्वसमीपाकर्षणेन क्लिष्टा विगलिताः केसरा जटा यस्य तथाभूतं, सिंहशिशुं केसरिपोतं, प्रक्रीडितुं चित्तविनोदनायेत्यर्थः, करेणैव पाणिनैव, अवकर्षत्याकर्षतीति भावः । सामान्यो हि शिशुः कस्यापि जीवमात्रस्याकर्षणमेव कर्तुं न प्रभवति, तत्र केशरिपोतं, तत्रापि मातुः स्तनं धयन्तं, तत्रापि विप्रकृष्टः सन् केनचिल्लगुडादिना न, किंतु स्वहस्तेन, तत्रापि न प्रग्रहादिना बद्ध्वा अपितु केसरान् धृत्वा तत्रापिच नात्मत्राणार्थं किंतु चेतोविनोदनार्थं, तत्रापि

बालः—*जिह्म सिंहसावआ ! जिह्म, दन्ताइं दे गणइस्सं।

प्रथमा—अविणीद ! किं णो अपच्चणिव्विसेसाइं सत्ताइं विप्प-अरेसि ? हन्त, वड्ढइ दे संरम्भो। ठाणे क्खु इसिजणेण सव्वदमणो त्ति किदणामहेओ सि।†

राजा—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः। नूनमनपत्यता मां वत्सलयति।

द्वितीया—एसा क्खु केसरिणी तुमं लङ्घइस्सदि जइ से पुत्तअं ण मुञ्चेसि।‡

बालः—(सस्मितम्।) अह्महे ! बलिअं क्खु भीदो ह्मि। (इत्यधरं दर्शयति।)×

राजा—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे।
स्फुलिङ्गावस्थया वह्निरेधोपेक्ष इव स्थितः॥१५॥

प्रथमा—वच्छ ! एदं बालमिइन्दअं मुञ्च, अवरं दे कीलणअं दाइस्सं।+

---

* जृम्भस्व सिंहशावक ! जृम्भस्व, दन्तांस्ते गणयिष्यामि।

† अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि। हन्त, वर्धते तव संरम्भः। स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि।

‡ एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि।

× अहो ! बलीयः खलु भीतोऽस्मि।

+ वत्स ! एनं बालमृगेन्द्रकं मुञ्च, अपरं ते क्रीडनकं दास्यामि।

---

च बध्द्वा न क्वापि पलायते, अपित्वाकर्षति इति सर्वेभ्योऽस्य प्रतापातिशयो गम्यते। अनेनाबालसत्वतापि संदर्शिता। अत्र च स्वभावोक्तिरलङ्कारः। पथ्यावक्त्रं वृत्तम्।

(१५) महत इति— अयं पुरो वर्तमानो बालः शिशुः स्फुलिङ्गावस्थयाग्नि-कणरूपेण स्थितः एधोऽपेक्षः, एधांसि दारूण्यपेक्षत इति तादृशः, वह्निरिवाग्निरिव महतः प्रभूतस्य, तेजसः प्रतापस्य, वह्निपक्षे-तेजसो ज्वलनस्य, बीजं कारणं "हेतुर्ना कारणं बीजं" इत्यमरः, मे मह्यमित्यर्थः, प्रतिभाति दृश्यत इत्यर्थः। शिशावस्मिन् लोकविलक्षणं तेज आशैशवाद् वर्तत इतिभावः। इहोपमालङ्कारः, पथ्यावक्त्रं वृत्तम्।

बालः—कहिं ? देहि णं । (इति हस्तं प्रसारयति ।)*

राजा—कथं चक्रवर्तिलक्षणमप्यनेन धार्यते । तथा ह्यस्य—

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषया भिन्नमिवैकपङ्कजम् ॥१६॥

द्वितीया—सुव्वदे ! मुंच णं, ण सक्को एसो वाआमेत्तेण विरमयिदुं । ता गच्छ तुमं । ममकेरए उडए मक्कण्डेअस्स इसिकुमारअस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि, तं से उवहर ।†

प्रथमा—तह । ( इति निष्क्रान्ता )‡

बालः—इमिणा एव्व दाव कीलिस्सं । (इति तापसीं विलोक्य हसति ।) ×

---

* कुत्र देह्येतत् ।

† सुव्रते ! मुञ्चैनं, न शक्य एषो वाचामात्रेण विरमयितुम् । तद् गच्छ त्वम् । मदीय उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति तमस्योपहर ।

‡ तथा ।

× अनेनैव तावत्क्रीडिष्यामि ।

---

(१६) पाणिं वर्णयति, प्रलोभ्येति ।—प्रलोभ्यस्य प्रकर्षेण लोभनीयस्य, वस्तुनः क्रीडनकस्य प्रणयेनाभ्यर्थनया, प्रसारितो ग्रहणार्थं विस्तारितः, जालवत् जालाकारावर्तविशेषवद् ग्रथिताः निर्म्मिता अङ्गुलयो यत्र तादृशः । एतेन चक्रवर्तिलक्षणं दर्शितम्, तथा चोक्तम्—"अतिरिक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः । चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद् ध्रुवम्" इति । इद्धः सन्दीप्तो रागो रक्तिमा यस्यास्तथोक्तया, नवोषया नवया नूतनया ऊषया प्रत्यूषेण, भिन्नं भेदं प्राप्तं, न तु सम्यग् विकसितं, अत एव, अलक्ष्याण्यदृश्यानि पत्राणां छदानामन्तराण्यवकाशाः, मध्यभागा इति यावत्, यस्य तथोक्तं एकं पङ्कजमिव कमलमिव विभाति शोभते । यथाभिनवेऽहर्मुखे सम्पूर्णालोकसम्बन्धाभावेन कस्यचित्पङ्कजस्य कियन्त्येव दलानि विकसितानि परिलक्ष्यन्ते, न तु तन्मध्यभागः, तथा क्रीडनकार्थमस्य बालस्य पाणिप्रसारणावसरे कतिपया एवाङ्गुलयो दृश्यन्ते, न तु तन्मध्यभागः" इत्युपमानोपमेययोरवैधर्म्यमवधेयम् (उपमालङ्कारः) वंशस्थविलं वृत्तम् ।

राजा—स्पृहयामि खलु दुर्ललितायास्मै !

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥१७॥

तापसी—(साङ्गुलितर्जनम्) भो ! ण मं गणेसि । (पार्श्वमवलोक्य ।) को एत्थ इसिकुमाराणं । (राजानमवलोक्य ।) भद्दमुह ! एहि दाव । मोआवेहि इमिणा दुम्मोच्चहत्थग्गहेण डिम्भलीलाए बाहीअमाणं बालमिइन्दअं ।*

राजा—(उपगम्य । सस्मितम् ।) अयि भो महर्षिपुत्र !

एवमाश्रमविरुद्धवृत्तिना
संयमी किमिति जन्मदस्त्वया ।
सत्त्वसंश्रयगुणोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनम् ॥१८॥

---

* भो ! न मां गणयसि । कोऽत्र ऋषिकुमाराणाम् । भद्रमुख ! एहि तावत्, मोचयानेन दुर्मोच्यहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रकम् ।

---

(१७) आलक्ष्येति—नास्ति निमित्तं कारणं येषां तथोक्ताः, अकारणसमुत्पन्ना इत्यर्थः, ये हासा हास्यानि तैः, आ ईषल्लक्ष्याणि दृश्यानि दन्ता दशना मुकुलानीव कुड्मलानीव येषां तान्, अव्यक्ता अपरिस्फुटा ये वर्णा अक्षराणि तै रमणीया श्रवणमधुरा वचसां वाक्यानां प्रवृत्तिरुच्चारणं येषां तादृशान्, अङ्क उत्सङ्गस्तस्मिन् आश्रयः स्थानं तत्प्रणयिनस्तदभ्यर्थिनः, तनयान् सुतान्, वहन्तो धारयन्तः सन्तः येजनाः तेषां तनयानाम्, अङ्गरजसा शरीररेणुना, कलुषीभवन्ति, नैजम् अङ्गं मलिनयन्ति ते धन्याः भाग्यवन्तो भवन्ति । इहैतद्बालावलोकनादिविशेषे प्रस्तुते तनयसामान्य-पदेन तदभिधानादप्रस्तुतप्रशंसालङ्कारः । "आलक्ष्येत्यत्रोपमा स्वभावोक्तिश्च । वसन्ततिलकं वृत्तम् ।

(१८) एवमिति—आश्रमस्य तपोवनस्य विरुद्धा प्रतिकूला प्रतीपा इत्यर्थः, वृत्तिर्व्यवहारो यस्य तथोक्तेन त्वया, संयमी नियतेन्द्रियः, तपस्वीत्यर्थः, जन्मदो जनकः, तवेतिशेषः, सत्व आत्मनि संश्रयो यस्य तादृशो गुण इन्द्रियादिर्यस्य तथोक्तः वशीकृतसकलेन्द्रियोऽपीत्यर्थः, "सत्त्वं द्रव्ये गुणान्तरे । पिशाचादौ

तापसी—भद्दमुह ! ण क्खु अअं इसिकुमारओ ।*

राजा—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । ( यथाभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य । आत्मगतम् । )

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमङ्गात्कृतिनः प्रसूतः ॥१९॥

तापसी—( उभौ निर्वर्ण्य । ) अच्चरिअं अच्चरिअं ।†

राजा—आर्ये ! किमिव ।

तापसी—इमस्स बालअस्स भद्दमुहे संवादिणी आकिदो त्ति विह्मिदह्मि । अवि अ वामसीलो वि भविअ अपरिचिदस्स वि दे वअणेण पइदित्थो संवुत्तो त्ति ।‡

राजा—( बालकमुपलालयन् । ) न चेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ।

---

* भद्रमुख ! न खल्वयं ऋषिकुमारः ।

† आश्चर्यमाश्चर्यम् ।

‡ अस्य बालस्य भद्रमुखे संवादिन्याकृतिरिति विस्मितास्मि । अपि च वामशीलोऽपि भूत्वा अपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्त इति ।

---

बले चित्ते स्वभावात्मत्वबुद्धिषु । आत्मनि" इति तथा "गुणो ज्यासूदतन्तु । रज्जौ सत्वादौ सन्ध्यादौ शौर्य्यादौ भीम इन्द्रिये" इति, च कोशः । कृष्णसर्पशिशुना सर्पकालतनयेन चन्दनो मलयज इव, किमिति कथं, एवमनेन प्रकारेण, प्राणिहिंसनरूपरजोगुणप्रकाशनेनेत्यर्थः, दूष्यते दोषयुक्तः क्रियते । उपमालङ्कारः । रथोद्धता वृत्तम् ।

(१९) अनेनेति । कस्यापि अपरिचितस्य यस्य कस्यचन जनस्य, कुलाङ्कुरेण वंशप्ररोहेण, अनेन बालेन शिशुना, गात्रेषु शरीरेषु, स्पृष्टस्य कृतस्पर्शस्य मम, एवमित्थं, अनिर्वचनीयं वक्तुमशक्यम्, अनुभवैकगम्यमित्यर्थः, सुखं यदि भवतीति शेषः । तदा यस्य कृतिनः सुकृतिनः, अङ्गाद् देहात्, अयं शिशुः, प्रसूतो जातः, तस्य जनस्येति शेषः, चेतसि मनसि, कां निर्वृतिं सुखं कुर्य्याद् विदध्यादिति ज्ञातुं न शक्यत इति भावः । अर्थापत्तिरलङ्कारः । उपजातिः ।

तापसी—पोरवो त्ति ।*

राजा—( आत्मगतम् । ) कथमेकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकयतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥२०॥

( प्रकाशम् । ) न पुनरात्मगत्या मानुषाणामेष विषयः ।

तापसी—जह भद्दमुहो भणादि किन्तु अच्छरासंवन्धेण उण इमस्स जणणी एत्थ देवगुरुणो तवोवणे पसूदा ।†

राजा—( स्वगतम् । ) हन्त, द्वितीयमिदमाशाजननम् । ( प्रकाशम् । ) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

तापसी—को तस्स धम्मदारपरिच्चाइणो णाम संकीत्तइस्सदि ।‡

राजा—( स्वगतम् । ) कथम् इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथवानार्यः परदारव्यवहारः ।

---

* पौरव इति ।

† यथा भद्रमुखो भणति, किन्त्वप्सरःसंबन्धेन पुनरस्य जनन्येत्य देवगुरोस्तपोवने प्रसूता ।

‡ कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयिष्यति ।

---

(२०) कुलाचारं प्रकटयति, भवनेष्विति । पूर्वं प्राक्, वार्धक्यादिति शेषः, तारुण्य इति भावः, ये पुरुकुलसंभवा राजान इत्यर्थः, सुधयानुलेपकचूर्णेन सितेषु विशदेषु, भवनेषु सदनेषु, क्षितिरक्षार्थं वसुन्धरापालनार्थं, निवासमवस्थितिं, उशन्तीच्छन्ति, निवसन्तीत्यर्थः । तारुण्येऽपि तेषां भवनावस्थितिः केवलं क्षितिरक्षणार्थं, न तु सुखानुभवार्थमिति भावः । पश्चादन्ते वयसीति भावः, तेषां पौरवाणां, नियतं सततमेकं केवलं यतिव्रतं मुनिव्रतं येषु तथोक्तानि, तरुमूलानि तरुतलानीत्यर्थः, गृहीभवन्ति, भवनानि भवन्ति । वयःपरिणामे पौरवा वानप्रस्थाश्रममाश्रित्य तपोवनमधितिष्ठन्तीत्यर्थः । औपच्छन्दसिकं वृत्तम् ।

( प्रविश्य मृण्मयूरहस्ता तापसी । )

तापसी—सव्वदमण ! सउन्दलावण्णं पेक्ख ।*

बालः—( सदृष्टिक्षेपम् । ) कहिं सा मे अम्बा ? ।†

उभे—णामसारिस्सेण वञ्चिदो माउवच्छलो ।‡

द्वितीया—वच्छ ! इमस्स मित्तिआमोरअस्स रम्मत्तणं देक्ख त्ति भणिदो सि । ×

राजा—( आत्मगतम् । ) किंवा शकुन्तलेत्यस्य मातुराख्या । अथवा सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ।

बालः—अन्तिए ! रोअदि मे एसो भद्दमोरओ । ( इति क्रीडनकमादत्ते । ) +

प्रथमा—( विलोक्य सोद्वेगम् । ) अह्महे ! रक्खाकरण्डअं से मणिबन्धे ण दीसदि । SS

राजा—अलमलमावेगेन । नन्विदमस्य सिंहशावविमर्दात्परिभ्रष्टम् । ( इत्यादातुमिच्छति । )

उभे—मा क्खु एदं अवलम्बिअ । कहं गहीदं णेण । **

( इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः । )

राजा—किमर्थं भवतीभ्यां प्रतिषिद्धोस्मि ।

प्रथमा—सुणादु महाराओ । एसा अवराजिदा णाम ओसही इमस्स जातकम्मसमए भअवदा मारीएण दिण्णा । एदं किल मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हादि । =

---

* सर्वदमन ! शकुन्तलावण्यं प्रेक्षस्व ।

† कुत्र सा मम अम्बा ।

‡ नामसादृश्येन वञ्चितो मातृवत्सलः ।

× वत्स ! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

+ अन्तिके ! रोचते म एष भद्रमयूरः ।

SS अहो ! रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।

** मा खल्विदमवलम्ब्य । कथं गृहीतमनेन ।

= शृणोतु महाराजः । एषापराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वापरो भूमिपतितां न गृह्णाति ।

राजा—अथ गृह्णाति ?

प्रथमा—तदो तं सप्पो भविअ दंसइ ।*

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

उभे—अणेअसो ।†

राजा—( सहर्षम् । आत्मगतम् । ) कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि । ( इति बालं परिष्वजते । )

द्वितीया—सुव्वदे ! एहि, इमं वुत्तन्तं णिअमव्वावुडाए सउन्दलाए णिवेदेह्म ।‡

( इति निष्क्रान्ते । )

बालः—मुञ्च मं । जाए अज्जुए सआसं गमिस्सं ।×

राजा—पुत्रक ! मया सहैव मातरमभिनन्दिष्यसि ।

बालः—मम क्खु तादो दुस्सन्दो । ण तुमं ।+

राजा—( सस्मितम् । ) एवं विवाद एव मां प्रत्याययति ।

( ततः प्रविशत्येकवेणीधरा शकुन्तला । )

शकुन्तला—विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसा आसि अत्तणो भाअहेएसु । अहवा जह साणुमदीए आचक्खिदं तह संभावीअदि एदं ।ऽऽ (इति परिक्रामति)

राजा—( शकुन्तलां विलोक्य । ) अये ! सेयमत्रभवती शकुन्तला । यैषा—

वसने परिधूसरे वसाना

नियमक्षाममुखी धृतैकवेणिः ।

---

* ततस्तं सर्पो भूत्वा दशति ।

† अनेकशः ।

‡ सुव्रते ! एहि, इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

× मुञ्च माम् । यावन्मातुः सकाशं गमिष्यामि ।

+ मम खलु तातो दुष्यन्तः, न त्वम् ।

ऽऽ विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशासीदात्मनो भागधेयेषु । अथवा यथा सानुमत्याख्यातं तथा संभाव्यत एतत् ।

---

(२१) वसन इति ।—परिधूसरेऽत्यन्तमलिने, वसने वसानाऽऽच्छादयन्ती, नियमेन पातिव्रत्यरूपोपवासादिरूपेण व्रतेन, क्षामं म्लानं मुखमाननं यस्यास्तथोक्ता,

अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥२१॥

शकुन्तला—( पश्चात्तापविवर्णं राजानं दृष्ट्वा सवितर्कम् । ) ण क्खु अज्जउत्तो अअं । ता को एसो किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ।*

बालः—( मातरमुपेत्य । ) अज्जुए ! एसो कोवि पुरिसो मं पुत्त त्ति आलिङ्गदि ।†

राजा—प्रिये ! क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्, तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानम् अभिलषामि ।

शकुन्तला—( आत्मगतम् । ) हिअअ ! समस्सस समस्सस । परिच्चत्तमच्छरेण अणुअम्पिअ ह्मि देव्वेण । अज्जउत्तो क्खु एसो ।‡

राजा—प्रिये !

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि !
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ २२ ॥

---

* न खल्वार्यपुत्रोऽयं, तत् क एषः कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ।

† मातः ! एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति ।

‡ हृदय ! समाश्वसिहि समाश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । आर्यपुत्रः खल्वेषः ।

---

धृता एकवेणिर्यया तादृशी, "तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः" इतिदर्पणकृदुक्तेः प्रोषितभर्तृकाया नियमादितिभावः, अतएव, शुद्धं पवित्रं, निर्दोषमिति भावः, शीलं चरितं यस्यास्तादृशी सती, अतिनिष्करुणस्यातिनिरनुकम्पस्य, निरपराधाया निराकरणादिति भावः, मम दीर्घं विरहव्रतं वियोगव्रतं बिभर्ति धारयतीत्यर्थः । मालभारिणी वृत्तम् ।

(२२) स्मृतीति ।—शोभनं मुखं यस्यास्तत्सम्बुद्धौ हे सुमुखि ! सुवदने ! त्वं, दिष्ट्या भागधेयेन, स्मृत्या पुरावृत्तस्मरणेन, भिन्नं नष्टं मोह अज्ञानमेव तमोऽन्धकारो यस्य तादृशस्य, मे मम, प्रमुखेऽभिमुखे, सम्मुख इत्यर्थः, स्थितासि, इति यत्तत्, शशिनश्चन्द्रस्य, उपरागान्ते ग्रहान्ते, रोहिणी शशिनः कान्ता योगं शशिसम्पर्कं समुपगता प्राप्ता भवतीतिशेषः । यथा रोहिणीग्रहणानन्तरं राहुणा मुक्तस्य चन्द्रमसः योगम् उपैति तथैव त्वमपि अङ्गुरीयकदर्शनाद् विनष्टशापस्य मम योगमुपगतेतिभावः । दृष्टान्तनिदर्शनयोः सन्देहसङ्करः । आर्या जातिः ।

शकुन्तला—(सहर्षम्) जेदु जेदु अज्जउत्तो*। (इत्यर्धोक्ते बाष्पसन्नकण्ठी विरमति ।)

राजा—सुन्दरि !

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३ ॥

बालः—अज्जुए ! को एसो ।†

शकुन्तला—वच्छ ! दे भाअहेआइं पुच्छेहि ।‡

सुतनु ! हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥२४॥

---

* जयतु जयत्वार्यपुत्रः ।

† मातः ! क एषः ।

‡ वत्स ! ते भागधेयानि पृच्छ ।

---

(२३) बाष्पेणेति ।—बाष्पेण नेत्रजलेन, जयशब्दे प्रतिरुद्धेऽपि अवरुद्धेऽपि मया जितम् । यद्यतः, ते तव, असंस्कारमलक्तकादिसंस्कारशून्य, अपि च पाटलं श्वेतरक्तमोष्ठपुटं यस्य तथोक्तं, मुखमाननं दृष्टमवलोकितं, अत्र जयशब्दप्रतिरुद्धेऽपि जितमितिकथने विरोधाभासः, पूर्वार्द्धगतवाक्यार्थं प्रति परार्धगतवाक्यार्थस्य हेतुतयोपन्यासात्काव्यलिङ्गमपि । पथ्यावक्त्रं वृत्तम् ।

(२४) सुतन्विति ।—शोभना तनुर्यस्यास्तत्सम्बोधने हे सुतनु ! सुगात्रि ! ते तव हृदयाच्चित्तात्, प्रत्यादेशेन स्वयंभवनमुपस्थितायास्तव निराकरणेन यद्व्यलीकमप्रियं तदित्यर्थः, अपैतु निर्गच्छतु स्वयमेवाप्रियं कृत्वा कथमिदानीं तदपनयनार्थं प्रार्थ्यत इत्याह, किमपीति । तदा-त्वदवलोकनसमये, मे मम मनसश्चेतसः, किमपि कथयितुमशक्य इत्यर्थः, बलवान् महान्, सम्मोहश्चित्तविभ्रमः, अभूत्, गान्धर्वेण विवाहविधिना परिणीताऽपि त्वं न मे स्मृतिमारुढेति मत्तो निराकरणरूपं तवाप्रियं तदा नूनं अभूत् । त्वदुपस्थितिकाले कोऽपि बलवान् मोहो मां प्रावृणोत्, तेनैव मोहेन, विचित्तेन मया कृतमप्रियं क्षन्तव्यमितिभावः, हि तथाहि, प्रबलं महत् तमोऽज्ञानं येषां तथोक्तानां, पुरुषाणामितिशेषः, शुभेष्वभिमतेषु विषयेष्वित्यर्थः, एवंप्राया एवंप्रकाराः, अभिमतवस्तुनिराकरणरूपा इति भावः, वृत्तयो व्यापारा भवन्तीतिशेषः । मोहान्धा हि शुभमपि स्वयं गृहमुपस्थितमविचार्य

राजा—(शकुन्तलायाः पादयोः प्रणिपतति ।)

शकुन्तला—उट्ठेदु उट्ठेदु अज्जउत्तो । णूणं मे सुअरिअप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणामसुहं आसि जेण साणुक्कोसो वि अज्जउत्तो मइ विरसो संवुत्तो ।*

(राजोत्तिष्ठति ।)

शकुन्तला—अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ।†

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु ! पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवामि ॥ २५ ॥

(इति यथोक्तमनुतिष्ठति ।)

शकुन्तला—( नाममुद्रां दृष्ट्वा । ) अज्जउत्त ! एदं तं अङ्गुलीअअं ?‡

राजा—अस्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा ।

---

* उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामसुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः ।

† अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ।

‡ आर्यपुत्र ! इदं तेऽङ्गुलीयकम् ।

---

परित्यजन्तीति भावः । अत्र दृष्टान्तमाह—स्रजमिति । अन्धो नयनविहीनः पुरुष इति शेषः, शिरसि मस्तके क्षिप्तां केनापि पातितां स्रजमपि हारमपि, अहिशङ्कया सर्पभ्रान्त्या, धुनोति प्रक्षिपति, अधः पातयतीत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । चतुर्थपादे दृष्टान्तश्चेत्यनयोः सङ्करः । हरिणी वृत्तम् ।

(२५) मोहादिति ।—हे सुतनु ! शुभाङ्गि ! मया पौरवेण दुष्यन्तेनेत्यर्थः, मोहादज्ञानात्, यो बाष्पबिन्दुर्नयनपयोनिचयः, "जातावेकवचनम्" पूर्वं प्राक्, त्वन्निराकरणकाले, उपेक्षितस्तिरस्कृतः, न तु प्रमार्जितः, अतएव ते तव, अधरं परिबाधमानः प्रपीडयन् स्थित इतिशेषः, हे कान्ते ! प्रिये ! आ ईषत्कुटिलेषु वक्रेषु पक्ष्मसु नयनलोमसु विलग्नं, तं नेत्रजलकणं, जात्यपेक्षयैकवचनं, तावत्साकल्येन, प्रमृज्य दूरीकृत्य, अपनीयेत्यर्थः, अद्यास्मिन् क्षणे, इदानीमितिभावः, विगतोऽनुशयो विषादो यस्य तादृशः, भवामि । वसन्ततिलकं वृत्तम् ।

शकुन्तला—विसमं किदं णेण, जं तदा अज्जउत्तस्स पच्चअकाले दुलहं आसि।*

राजा—तेन ह्यृतुसमवायचिह्नं प्रतिपद्यतां लताकुसुमम्।

शकुन्तला—ण से विस्ससामि। अज्जउत्तो एव्व णं धारेदु।†

(ततः प्रविशति मातलिः।)

मातलिः—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते।

राजा—सुहृत्संपादितत्वात् स्वादुतरफलो मे मनोरथः। मातले! न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात्।

मातलिः—(सस्मितम्।) किमीश्वराणां परोक्षम्। एत्वायुष्मान्। भगवान्मारीचस्ते दर्शनं वितरति।

राजा—शकुन्तले! अवलम्ब्यतां पुत्रः। त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि।

शकुन्तला—हिरिआमि अज्जउत्तेण सह गुरुसमीवं गन्तुं।‡

राजा—नूनमाचरितव्यमेतदभ्युदयकालेषु। एह्येहि।

(सर्वे परिक्रामन्ति।)

(ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः।)

मारीचः—(राजानमवलोक्य।) दाक्षायणि!

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः॥ २६॥

---

* विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत्।

† नास्य विश्वसिमि। आर्यपुत्र एवैतद्धारयतु।

‡ जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम्।

---

(२६) पुत्रस्येति।—अयं दुष्यन्त इत्यभिहितो दुष्यन्त इतिप्रख्यातः, दुष्यन्तनामेत्यर्थः, भुवनस्य जगतः, भर्ता पालयिता, रक्षक इतियावत्, ते तव, पुत्रस्य तनयस्येन्द्रस्य, रणशिरसि, रणस्य युद्धस्य शिरसि शिखरे, अग्रयायग्रगः। यस्य दुष्यन्तस्य चापेन बाणेन, विनिवर्तितं निष्पादितं कर्म रिपुपराजयरूपं, यस्य

अदितिः—संभावणीआणुभावा से आकिदी ।*

मातलिः—आयुष्मन्! एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः । तावुपसर्प ।

राजा—मातले!

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥ २७ ॥

मातलिः—अथ किम् ।

राजा—( उपगम्य । ) उभाभ्यामपि वां वासवनियोज्यो दुष्यन्तः प्रणमति ।

---

* संभावनीयानुभावास्याकृतिः ।

---

तथोक्तं, तत् प्रसिद्धं, कोटिमदनेककोटिसमेतं, मघोनो देवेन्द्रस्य, कुलिशं वज्रं, आभरणमलङ्करणं जातम् । इन्द्रस्य कुलिशं केवलं करशोभां सम्पादयति, रिपुपराजये नास्त्यस्य प्रयोजनमिति भावः । अत्र लोकोत्तरपराक्रमसम्पत्तिवर्णनादुदात्तालङ्कारः । वसन्ततिलकं वृत्तम् ।

(२७) प्राहुरिति ।—मुनयो व्यासादयः, यद् द्वन्द्वं द्वादशधा द्वादशविभागेन, स्थितस्य वर्तमानस्य, द्वादशमासेषु द्वादशाकारधरस्येत्यर्थः, तेजसो रवेः, कारणं निदानं, उत्पत्तिहेतुमित्यर्थः, प्राहुः कथयन्ति । अनेनास्य निरतिशयप्रतापवत्त्वं सूचितम्, यद् द्वन्द्वं भुवनत्रयस्य, नत्वेकस्यैव भुवनस्य, भर्तारमधिपतिं यज्ञभागानां पुरोडाशभुजां देवानामित्यर्थः, ईश्वरं राजानमिन्द्रं सुषुवे उत्पादयामास । यस्मिन् द्वन्द्वे, आत्मभुवो ब्रह्मणोऽपि, परः परमः पुरुषो हरिरिति यावत्, भवाय जन्मने आस्पदमाश्रयं वामनरूपेणेति भावः, चक्रे कृतवान् । यदुक्तम् विष्णुपुराणे—

"मन्वन्तरे च सम्प्राप्ते तथा वैवस्वते द्विज ! ।
वामनः कश्यपाद्विष्णुरदित्यां सम्बभूवह ॥"

तथा दक्षमरीचिभ्यां सम्भवो जन्म यस्य तादृशं, दक्षतनया अदितिः, मरीचिसुतः कश्यपः, एतदुभयरूपमित्यर्थः, स्रष्टुः प्रजापतेः, दक्षमरीच्योः तस्य मानस प्रभवत्वात् एकान्तरमेकपुरुषव्यवधानं, तत् प्रसिद्धं इदं पुरतो दृश्यमानं, द्वन्द्वमदितिमारीचरूपयुग्मं वर्तत इति शेषः । अत्र चरणत्रयेऽङ्गभूतमहापुरुषचरितवर्णनान्मालालक्षणोदात्तोऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।—

मारीचः—वत्स ! चिरं जीवन् पृथिवीं पालय ।

अदितिः—वच्छ ! अप्पडिरहो होहि ।*

शकुन्तला—दारअसहिदा वो पादवन्दणं करेमि ।†

मारीचः—वत्से !

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीमङ्गला भव ॥ २८ ॥

अदितिः—जादे ! भत्तुणो अभिमदा होहि । अअं च दीहाऊ वच्छओ उहअकुलणन्दणो होदु । उवविसह ‡।

( सर्वे प्रजापतिमभित उपविशन्ति । )

मारीचः—( एकैकं निर्दिशन् । )

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ २९ ॥

राजा—भगवन् ! प्रागभिप्रेतसिद्धिः । पश्चाद्दर्शनम् । अतोऽपूर्वः खलु वोऽनुग्रहः । कुतः ?

---

* वत्स ! अप्रतिरथो भव ।

† दारकसहिता वां पादवन्दनं करोमि ।

‡ जाते ! भर्तुरभिमता भव । अयञ्च दीर्घायुर्वत्स उभयकुलनन्दनो भवतु । उपविशत ।

---

(२८) आखण्डलेति—भर्ता पतिः, आखण्डलेनेन्द्रेण समस्तुल्यः । सुतस्तनयः, जयन्तप्रतिमः, जयन्तो नामेन्द्रसुतस्तत्प्रतिमस्तत्सदृशः । अतः, ते तव, अन्या वक्ष्यमाणेतरा, आशीर्न योग्या नोचिता । त्वं पौलोम्या इन्द्राण्या मङ्गलमिव मङ्गलं यस्यास्तथोक्ता भव । "यथा शची सदेन्द्रेणावियोजिता चिरमविधवा च, तथा त्वमपि भूयाः" इति भावः । अत्र त्रय उपमालङ्काराः ।

(२९) दिष्ट्येति ।—दिष्ट्या भाग्येन, साध्वी पतिव्रता शकुन्तला, इदं सच्छोभनमपत्यं शिशुरिति यावत्, तथा भवान् दुष्यन्त इत्यर्थः, । श्रद्धा आस्तिक्यबुद्धिः, वित्तं धनं, विधिश्च यज्ञाद्यनुष्ठानं च, इति एतत् त्रितयं त्रिप्रकारं, समागतं सङ्गतमेकत्रेति शेषः । यथा श्रद्धासहकृतो यागादिः धनरूपं फलविशेषमुत्पादयति तथैव श्रद्धारूपशकुन्तलासहकृतयागसदृशो भवानिदं पुत्ररत्नं जनयामासेति भावः । अत्र निदर्शनालङ्कारः ॥

उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु संपदः ॥३०॥

मातलिः—आयुष्मन् ! एवं प्रसीदन्ति विधातारो विश्वगुरवः ।

राजा—भगवन् ! इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढपूर्वां तद्दुहितरमवगतोऽहम् । तच्चित्रमिव मे प्रतिभाति ।

यथा गजो नेति समक्षरूपे तस्मिन्नतिक्रामति संशयः स्यात् ।
पदानि दृष्ट्वाऽथ भवेत्प्रतीतिस्तथाविधो मे मनसो विकारः ॥३१॥

---

(३०) अनुग्रहस्यापूर्वत्वं दर्शयति, उदेतीति । पूर्वं प्राक् कुसुमं पुष्पं, उदेत्याविर्भवति, ततः कुसुमाविर्भावानन्तरं फलमुदेतीत्यन्वयः । प्राक् घनस्य जलधरस्य, उदय उद्गमः, भवति, तदनन्तरं मेघोदयानन्तरं पयो जलं, उदेतीत्यन्वयः । अयं मदुक्तप्रकार इत्यर्थः, निमित्तनैमित्तिकयोः कार्यकारणयोः क्रमः पौर्वापर्य्यनियमः सर्वत्र दृश्यते इति शेषः । तव प्रसादस्यानुग्रहस्य तु पुरः प्रसादात्पूर्वमेवेत्यर्थः, सम्पदः पुत्रकलत्रसम्प्राप्तिरूपाः सम्भूता इति शेषः । आशिषोऽनन्तरं सम्पत्सिद्धेर्नियमः, किन्तु पुत्रकलत्ररूपसम्पल्लाभानन्तरं भगवत आशीःप्रकाश इति भगवदाशिषि वैचित्र्यमिति भावः । इह कार्यकारणयोः पौर्वापर्यव्यत्ययरूपातिशयोक्तिः । सा च पूर्वार्द्धगतदृष्टान्तालङ्कारेण सङ्कीर्यते । वंशस्थविलं वृत्तम् ।

(३१) यथेति ।—यथा यस्य कस्यचिन्मूढस्येति शेषः, समक्षं प्रत्यक्षं रूपमाकृतिर्यस्य तथोक्ते गज इति शेषः, गजो नेति प्रत्ययः स्यात् तदनन्तरं, तस्मिन् 'गजत्वाभावप्रत्ययविषयीभूते गजे' 'इति भावः' अतिक्रामत्यन्यतो गच्छति सति संशयः, गजो वा नवेति सन्देहः स्यात् । तु किन्तु पश्चादिति शेषः, पदानि अतिक्रान्तगजस्य पदचिन्हानीति यावत्, दृष्ट्वावलोक्य, प्रतीतिर्गज एवायमिति विश्वासो भवेत्, मे मम, मनसश्चेतसः, तथाविधस्तादृशो विकारः । यथा मूढजनस्य प्रत्यक्षीभूते गजे "नायं गजः" इति प्रत्ययः, ततश्चान्यत्र गतवति तस्मिन् "किमयं गजः ? अथवा नायं गजः" इति सन्देहः, पश्चाच्च तत्पदचिन्हानि दृष्ट्वा "गज एवायं" इति निश्चयः, तथा शिष्यैर्मत्समक्षमानीतायामस्यां शकुन्तलायां "नेयं परिगृहीता" इति प्रत्ययः । अन्तर्हितायां च तस्यां "परिगृहीता न वेति संशयः; ।

मारीचः—वत्स ! अलमात्मापराधशङ्कया । संमोहोऽपि त्वय्युपपन्नः । श्रूयताम् ।

राजा—अवहितोऽस्मि ।

मारीचः—यदैवाप्सरस्तीर्थावतरणात्प्रत्याख्यानविक्लवां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतवृत्तान्तोऽस्मि "दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणा त्वया प्रत्यादिष्टा, स चायमङ्गुलीयकदर्शनावसानः शापः" इति ।

राजा—( सोच्छ्वासम् । ) एष वचनीयान्मुक्तोऽस्मि ।

शकुन्तला—( स्वगतम् । ) दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो । ण हु सत्तं अत्ताणं सुमरेमि । अहवा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो । अदो सहीहिं संदिट्ठम्हि "सो राआ जइ तुमं ण सुमरेदि, तदा एदं अङ्गुलीअअं दंसइदव्वं त्ति ।*

मारीचः—वत्से ! विदितार्थासि । सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य—

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥

---

* दिष्ट्याकारणप्रत्यादेशी नार्यपुत्रः । न खलु शप्तमात्मानं स्मरामि । अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां संदिष्टास्मि "स राजा यदि त्वां न स्मरिष्यति, तदा एतत् अङ्गुरीयकं दर्शयितव्यमिति ।

---

अङ्गुलीयकदर्शनानन्तरं" इयं मया परिगृहीता" इत्येवंरूपा प्रतीतिर्जातेति भावः अत्र—निदर्शनालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः—

( ३२ ) शापादिति—शापाद् हेतोः दुर्वाससः इति शेषः, प्रतिहता प्रत्यादिष्टासि प्राक्, स्मृतिलोपेन स्मृतिविनाशेन, रूक्षे परुषे, इदानीं शापावसानादपेतं दूरीभूतं तमो मोहो यस्मात्तथोक्ते, भर्तरि पत्यौ, तवैव नान्यस्या इत्येवकारार्थः, प्रभुता स्वामिता अधिकार इति भावः । बहुपत्नीस्वेऽपि त्वमेवास्य प्राणप्रिया नान्येति भावः । अत्र दृष्टान्तमाह—छायेति-मलेन कल्मषेणोपहतो विलुप्तः प्रसादो वैशद्यं

राजा—यथाह भगवान् ।

मारीचः—वत्स ! कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठित-जातकर्मा पुत्र एष शाकुन्तलेयः ?

राजा—भगवन् ! अत्र खलु मे वंशप्रतिष्ठा । (इति बालकं हस्तेन स्पृशति)

मारीचः—भाविनमेनं चक्रवर्तिनमवगच्छतु भवान् । पश्य—

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥३३॥

राजा—भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे ।

अदितिः—भअवं ! इमाए दुहिदुमणोरहसंपत्तीए कण्णो वि दाव सुदवित्थारो करीअदु । दुहिदुवच्छला मेणआ इह एव्व उपअरन्ती चिट्ठदि ।❀

---

❀ भगवन् ! अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनकेहैवोपचरन्ती तिष्ठति ।

---

यस्य तस्मिन्, दर्पणतले मुकुरतले, छाया प्रतिबिम्बं न मूर्च्छति न पततीति भावः। तु किन्तु शुद्धे मालिन्यरहिते 'दर्पणतले इति भावः, सुलभः सुखसाध्योऽवकाशः प्रवेशो यस्यास्तथाविधा भवतीति शेषः । अत्र दृष्टान्तालङ्कारः। वसन्ततिलकं वृत्तम्।

(३३) रथेनेति, अयं तव पुत्रः अनुद्घातेन भूतलस्पर्शाभावादुच्चावचरहितेन स्तिमिता निश्चला गतिर्यस्य तथाभूतेन रथेन तीर्णः उत्तीर्णः जलधिः सागरो येन तथाविधः, तथा नास्ति प्रतिरथः प्रतिपक्षो यस्य तादृशः सन् सप्त जम्बुप्लक्षादयो द्वीपा यस्यां सा तां, तथा च विष्णुपुराणे—

"जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज ।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥"

वसुधां पुरा जयति जेष्यति "निकटागामिके पुरा" इत्यमरः, यावत्पुरानिपातयोर्लट्" इत्यनुशासनात्पुरायोगे भविष्यदर्थे लट्, इह—आश्रमे सत्त्वानां सिंहादिक्रूरप्राणिनां प्रसभेन बलात्कारेण दमनात् मर्दनात् "सर्वदमनः" इति, पुनः पश्चात् लोकस्य जगतः भरणात् पालनात् "भरतः" इति च आख्यां संज्ञां यास्यति ।

शकुन्तला—(आत्मगतम्।) मणोरहो क्खु मे भणिदो भअवदीए।※

मारीचः—तपःप्रभावात्प्रत्यक्षं सर्वमेव तत्रभवतः।

राजा—अतः खलु मम नातिक्रुद्धो मुनिः।

मारीचः—तथाप्यसौ सपुत्राया दुहितुः पत्या परिग्रहप्रियमस्माभिः श्रावयितव्यः। कः कोऽत्र भोः।

(प्रविश्य।)

शिष्यः—भगवन्! अयमस्मि।

मारीचः—गालव! इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति।

शिष्यः—यदाज्ञापयति भगवान्। (इति निष्क्रान्तः।)

मारीचः—वत्स! त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व।

राजा—(सप्रणामम्।) यदाज्ञापयति भगवान्।

मारीचः—सम्प्रति हि—

तव भवतु विडोजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम्।
युगशतपरिवृत्तैरेवमन्योऽन्यकृत्यै—
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥३४॥

---

※ मनोरथः खलु मे भणितो भगवत्या।

---

अत्र भाविवसुधाजयस्य प्रत्यक्ष इवोपस्थितत्वाद् भाविकालङ्कारः, एवम् अनुद्धातस्तिमितेत्यत्र च पदार्थहेतुककाव्यलिङ्गञ्च। शिखरिणी वृत्तम्।

(३४) तवेति।—विडोजा इन्द्रः, तव प्रजासु प्राज्या प्रचुरा वृष्टिर्यस्मात्तादृशः भवतु। सम्यग् जलदानेनानुगृह्णातु प्रजा इति भावः। त्वमपि भवानपि, विततो विस्तृतो यज्ञो यागो येन तादृशः सन्, वज्रिणमिन्द्रं, अलमत्यर्थं प्रीणय तोषयेत्यर्थः, युगशतं व्याप्य परिवृत्तैर्जातविनिमयैः, एवमुक्तप्रकारैः, उभयोर्लोकयोः द्यावापृथिवीलक्षणयोः श्लाघनीयैः प्रशंसितुं योग्यैः, अन्योन्यकृत्यैः परस्परकृत्यैः जयतं सर्वोत्कर्षेण वर्त्तेथां, त्वमिन्द्रश्चेति शेषः। अत्र परिवृत्तिरलङ्कारः। मालिनीवृत्तम्।

मारीचः—वत्स ! किं ते भूयः प्रियमुपकरोमि ।

राजा—अतः परमपि प्रियमस्ति । यदिह भगवान्प्रियं कर्तुमिच्छति तर्हीदमस्तु । ( भरतवाक्यम् । )

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहती न हीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥३५॥

( इति निष्क्रान्ताः सर्वे । )

सप्तमोऽङ्कः ।

समाप्तमिदमभिज्ञानशाकुन्तलं नाम नाटकम् ॥

---

(३५) प्रवर्ततामिति—पार्थिवो नृपतिः, प्रकृतीनां प्रजानां [illegible]ताय हि[illegible]करणाय प्रवर्ततां प्रवृत्तो भवतु ; श्रुतिभिर्वेदैः, महती महनीया सरस्व[illegible], न हीयतां न त्यज्यतां जनैरिति शेषः । अनवरतं सरस्वती सेव्यतामिति भावः । परिगता व्याप्ता शक्तिर्महिमा यस्य तादृशः, आत्मनः स्वयं भवतीत्यात्मभूः जन्मरहित इति भावः, नीललोहितो गले कालकूटसद्भावान्नीलः, ललाटे चाग्निनयनत्वाल्लोहितः एतादृशः शिवः ममापि पुनर्भवं पुनर्जन्म क्षपयतु विनाशयतु । भवबन्धनान्मां विमोच्य रक्षत्वित्यर्थः । रुचिरा वृत्तम् ।

इत्यभिज्ञानशाकुन्तले सुबोधिन्याख्यायां व्याख्यायां सप्तमोऽङ्कः ।

---